इतिहासपुराणानां पुस्तकानि प्रयच्छति।
पूजयित्वायुरारोग्यं स्वर्गमोक्षमवाप्नुयात् ॥ २९ ॥
इत्याग्नेये महापुराणे दानादिमाहात्म्यं नामैक सप्तत्यधिक-
द्विशततमोऽध्यायः।

---

## अथ द्विसप्तत्यधिकद्विशततमोऽध्यायः।

---

### सूर्य्यवंशकीर्त्तनं।

अग्निरुवाच। सूर्य्यवंशं सोमवंशं राज्ञां वंशं वदामि ते।
हरेर्ब्रह्मा पद्मगोऽभून्मरीचिर्ब्रह्मणः सुतः ॥ १ ॥
मरीचेः कश्यपस्तस्माद्विवस्वांस्तस्य पत्न्यपि।
संज्ञा राज्ञी(१) प्रभा तिस्रो राज्ञी रैवतपुत्रिका ॥ २ ॥
रेवन्तं सुषुवे पुत्रं प्रभातञ्च प्रभा रवेः।
त्वाष्ट्री संज्ञा मनुं पुत्रं यमलौ यमुनां यमम् ॥ ३ ॥
छाया संज्ञा च सावर्णिं मनुं वैवस्वतं सुतम्।
शनिञ्च तपतीं विष्टिं संज्ञायाञ्चाश्विनौ पुनः ॥ ४ ॥
मनोर्वैवस्वतस्यासन् पुत्रा वै न च तत्समाः।
इक्ष्वाकुश्चैव नाभागो धृष्टःशर्य्यातिरेव च ॥ ५ ॥
नरिष्यन्तस्तथा प्रांशुर्नाभागादिष्टसप्तमाः।
करूषश्च पृषध्रश्च अयोध्यायां महाबलाः ॥ ६ ॥
कन्येला च मनोरासीद्बुधात्तस्यां पुरूरवाः।
पुरूरवसमुत्पाद्य सेला सुद्युम्नताङ्गता ॥ ७ ॥

---

१ अत्र छायेतिपाठो युक्तः।

सुद्युम्नादुत्कलगयौ विनताश्वस्त्रयो नृपाः ।
उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमा ॥ ८ ॥
दिक् सर्व्वा राजवर्य्यस्य गयस्य तु गयापुरी ।
वशिष्ठवाक्यात् सुद्युम्नः प्रतिष्ठानमवाप ह ॥ ९ ॥
तत् पुरूरवसे प्रादात्सुद्युम्नो राज्यमाप्य तु ।
नरिष्यतः शकाः पुत्रा नाभागस्य च वैष्णवः ॥ १० ॥
अम्बरीषः प्रजापालो धार्ष्टकं धृष्टतः कुलम् ।
सुकन्यानर्त्तौ शर्य्यातेर्वै रोच्यानर्त्ततो नृपः ॥ ११ ॥
आनर्त्तविषयश्चासीत् पुरी चासीत् कुशस्थली ।
रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्म्मिकः ॥ १२ ॥
ज्येष्ठः पुत्रशतस्यासीद्राज्यं प्राप्य कुशस्थलीम् ।
स कन्यासहितः श्रुत्वा गान्धर्व्वं ब्रह्मणोऽन्तिके ॥ १३ ॥
मुहूर्त्तभूतं देवस्य मर्त्त्ये बहुयुगं गतम् ।
आजगाम जवेनाथ स्वां पुरीं यादवैर्वृताम् ॥ १४ ॥
कृतां द्वारवतीं नाम बहुद्वारां मनोरमाम् ।
भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः ॥ १५ ॥
रेवतीं बलदेवाय ददौ ज्ञात्वा ह्यनिन्दिताम् ।
तपः सुमेरुशिखरे तप्त्वा विष्णवालयं गतः ॥ १६ ॥
नाभागस्य च पुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ ।
करूषस्य तु कारूषाः क्षत्रिया युद्धदुर्म्मदाः ॥ १७ ॥
शूद्रत्वञ्च पृषध्रोऽगाद्धिंसयित्वा गुरोश्च गाम् ।
मनुपुत्रादथेक्ष्वाकोर्विकुक्षिर्देवराड्भूत् ॥ १८ ॥
विकुक्षेस्तु ककुत्स्थोऽभूत्तस्य पुत्रः सुयोधनः ।

तस्य पुत्रः पृथुर्नाम विश्वगश्वः पृथोः सुतः ॥ १९ ॥
आयुस्तस्य च पुत्रोऽभूद्युवनाश्वस्तथा सुतः ।
युवनाश्वाच्च आवन्तः पूर्वं आवन्तिका पुरी ॥ २० ॥
आवन्ताद् बृहदश्वोऽभूत् कुवलाश्वस्ततो नृपः ।
धुन्धुमारत्वमगमद्धुन्धोर्नाम्ना च वै पुरा ॥ २१ ॥
धुन्धुमारात्त्रयो भूपा दृढाश्वो दण्ड एव च ।
कपिलोऽथ दृढाश्वात्तु हर्य्यश्वश्च प्रमोदकः ॥ २२ ॥
हर्य्यश्वाच्च निकुम्भोऽभूत् संहताश्वो निकुम्भतः ।
अकृशाश्वो रणाश्वश्च संहताश्वसुतावुभौ ॥ २३ ॥
युवनाश्वो रणाश्वस्य मान्धाता युवनाश्वतः ।
मान्धातुः पुरुकुत्सोऽभून्मुचुकुन्दो द्वितीयकः ॥ २४ ॥
पुरुकुत्सादसस्युश्च सम्भूतो नर्मदाभवः ।
सम्भूतस्य सुधन्वाऽभूत्त्रिधन्वाथ सुधन्वनः ॥ २५ ॥
त्रिधन्वनस्तु तरुणस्तस्य सत्यव्रतः सुतः ।
सत्यव्रतात्सत्यरथो हरिश्चन्द्रश्च तत्सुतः ॥ २६ ॥
हरिश्चन्द्राद्रोहिताश्वो रोहिताश्वाद्वृकोऽभवत् ।
वृकाद्वाहुश्च बाहोश्च सगरस्तस्य च प्रिया ॥ २७ ॥
प्रभा षष्टिसहस्राणां सुतानां जननी ह्यभूत् ।
तुष्टादौर्वान्नृपादेकं भानुमत्यसमञ्जसम् ॥ २८ ॥
खनन्तः पृथिवीं दग्धा विष्णुना(१) बहुसागराः ।
असमञ्जसोऽंशुमांश्च दिलीपोऽंशुमतोऽभवत् ॥ २९ ॥
भगीरथो दिलीपात्तु येन गङ्गावतारिता ।

१ मुनिनेति क० ।

भगीरथात्तु नाभागो नाभागादम्बरीषकः ॥ २० ॥
सिन्धुद्वीपोऽम्बरीषात्तु श्रुतायुस्तत्सुतः स्मृतः।
श्रुतायोर्ऋतपर्णोऽभूत्तस्य कल्माषपादकः ॥ २१ ॥
कल्माषाङ्घ्रेः सर्व्वकर्म्मा(१) ह्यनरण्यस्ततोऽभवत्।
अनरण्यात्तु निघ्नोऽथ अनमित्रस्ततो रघुः ॥ २२ ॥
रघोरभूद्दिलीपस्तु दिलीपादाप्यजो नृपः।
दीर्घबाहुरजात् कालस्त्वजापालस्ततोऽभवत् ॥ २३ ॥
तथा दशरथो जातस्तस्य पुत्रचतुष्टयम्।
नारायणात्मकाः सर्व्वे रामस्तस्याग्रजोऽभवत् ॥ २४ ॥
रावणान्तकरो राजा ह्ययोध्यायां रघूत्तमः।
वाल्मीकिर्यस्य चरितं चक्रे तन्नारदश्रवात् ॥ २५ ॥
रामपुत्रौ कुशलवौ सीतायां कुलवर्द्धनौ।
अतिथिश्च कुशाज्जज्ञे निषधस्तस्य चात्मजः ॥ २६ ॥
निषधात्तु नलो जज्ञे नभोऽजायत वै नलात्।
नभसः पुण्डरीकोऽभूत् सुधन्वा च ततोऽभवत् ॥ २७ ॥
सुधन्वनो देवानीको ह्यहीनाश्च तत्सुतः।
अहीनाश्चात् सहस्राश्वश्चन्द्रालोकस्ततोऽभवत् ॥ २८ ॥
चन्द्रावलोकतस्तारापीडोऽस्याच्चन्द्रपर्व्वतः।
चन्द्रगिरेर्भानुरथः श्रुतायुस्तस्य चात्मजः।
इक्ष्वाकुवंशप्रभवाः सूर्य्यवंशधराः स्मृताः ॥ २९ ॥

इत्याग्नेये महापुराणे सूर्य्यवंशकीर्त्तनं नाम द्विसप्तत्यधिकद्विशततमोऽध्यायः।

---

१ वज्रनाभूदिति ख०, ङ० च।

# अथ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ।

———ooo———

## सोमवंशवर्णनं ।

अग्निरुवाच । सोमवंशं प्रवक्ष्यामि पठितं पापनाशनम् ।
विष्णुनाभ्यब्जजो ब्रह्मा ब्रह्मपुत्रोऽत्रिरत्रितः ॥ १ ॥
सोमश्चक्रे राजसूयं त्रैलोक्यं दक्षिणान्ददौ ।
समाप्तेऽवभृथे सोमं तद्रूपालोकनेच्छव: ॥ २ ॥
कामबाणाभितप्ताङ्ग्यो नवदेव्यः सिषेविरे ।
लक्ष्मीर्नारायणं त्यक्त्वा सिनीवाली च कर्दमम् ॥ ३ ॥
द्युतिं विभावसुन्त्यक्त्वा पुष्टिर्धातारमव्ययम् ।
प्रभा प्रभाकरन्त्यक्त्वा हविष्मन्तं कुहूः स्वयम् ॥ ४ ॥
कीर्त्तिर्जयन्तम्भर्त्तारं वसुर्मारीचकश्यपम् ।
धृतिस्त्यक्त्वा पतिं नन्दीं सोममेवाभजत्तदा ॥ ५ ॥
स्वकीया इव सोमोऽपि कामयामास तास्तदा ।
एवं कृतापचारस्य तासां भर्त्तृगणस्तदा ॥ ६ ॥
न शशाकापचाराय(१) शापैः शस्त्रादिभिः पुनः ।
सप्तलोकैकनाथत्वमवाप्तस्तपसा ह्युत ॥ ७ ॥
विबभ्राम मतिस्तस्य विनयादनया हृता ।
बृहस्पतेः स वै भार्य्यां तारां नाम यशस्विनीम् ॥ ८ ॥
जहार तरसा सोमो ह्यवमन्याङ्गिरःसुतम् ।
ततस्तद्युद्धमभवत् प्रख्यातं तारकामयम् ॥ ९ ॥

---

१ न शशाकापकारायेति ख० ।

देवानां दानवानाञ्च लोकक्षयकरं महत् ।
ब्रह्मा निवार्य्योशनसन्तारामङ्गिरसे ददौ ॥ १० ॥
तामन्तःप्रसवां दृष्ट्वा गर्भं त्यजाब्रवीद्गुरुः ।
गर्भस्त्यक्तः प्रदीप्तोऽथ प्राहाहं सोमसम्भवः ॥ ११ ॥
एवं सोमाद्बुधः पुत्रः पुत्रस्तस्य पुरूरवाः ।
स्वर्गन्त्यक्त्वोर्वशी सा तं वरयामास चाप्सराः ॥ १२ ॥
तया सहावसद्राजा दशवर्षाणि पञ्च च ।
पञ्च षट् सप्त चाष्टौ च दश चाष्टौ महामुने ॥ १३ ॥
एकोऽग्निरभवत् पूर्व्वं तेन त्रेता प्रवर्त्तिता ।
पुरूरवा योगशीलो गान्धर्व्वल्लोकमीयिवान् ॥ १४ ॥
आयुर्दृढायुरश्वायुर्धनायुर्धृतिमान् वसुः ।
दिविजातः शतायुश्च सुषुवे चोर्व्वशी नृपान् ॥ १५ ॥
आयुषो नहुषः पुत्रो वृद्धशर्म्मा रजिस्तथा ।
दर्भो विपाप्मा पञ्चाग्ना(१) रजेः पुत्रशतं ह्यभूत् ॥ १६ ॥
राजेया इति विख्याता विष्णुदत्तवरो रजिः ।
देवासुरे रणे दैत्यानवधीत्सुरयाचितः ॥ १७ ॥
गतायेन्द्राय पुत्रत्वं दत्वा राज्यं दिवङ्गतः ।
रजेः पुत्रैर्हृतं राज्यं शक्रस्याथ सुदुर्म्मनाः ॥ १८ ॥
ग्रहशान्त्यादिविधिना गुरुरिन्द्राय तद्ददौ ।
मोहयित्वा रजिसुतानासंस्ते निजधर्म्मगाः ॥ १९ ॥
नहुषस्य सुताः सप्त यतिर्य्ययातिरुत्तमः ।
उद्भवः पञ्चकश्चैव शर्य्यातिमेघपालकौ ॥ २० ॥

---

१ पञ्चाम्न्या इति ख॰ । पञ्चापाप्मिति ग॰ ।

यतिः कुमारभावेऽपि विष्णुं ध्यात्वा हरिं गतः।
देवयानी शुक्रकन्या ययातेः पत्न्यऽभूत्तदा ॥ २१ ॥
वृषपर्व्वजा शर्म्मिष्ठा ययातेः पञ्च तत्सुताः।
यदुञ्च तुर्व्वसुञ्चैव देवयानी व्यजायत ॥ २२ ॥
द्रुह्युञ्चानूञ्च पूरुञ्च शर्म्मिष्ठा वार्षपर्व्वणी।
यदुः पूरुश्चाभवतान्तेषां वंशविवर्द्धनौ ॥ २३ ॥

इत्याग्नेये महापुराणे सोमवंशवर्णनं नाम त्रिसप्तत्यधिक-
द्विशततमोऽध्यायः।

---

## अथ चतुःसप्तत्यधिकद्विशततमोऽध्यायः।

—000—

### यदुवंशवर्णनं।

अग्निरुवाच। यदोरासन्पञ्च पुत्रा ज्येष्ठस्तेषु सहस्रजित्।
नीलाञ्जिको रघुः क्रोष्टुः शतजिच्च सहस्रजित् ॥ १ ॥
शतजितैहयो रेणुहयो हय इति त्रयः।
धर्म्मनेत्रो हैहयस्य धर्म्मनेत्रस्य संहनः ॥ २ ॥
महिमा संहनस्यासीन्महिम्नो भद्रसेनकः।
भद्रसेनाद् दुर्गमोऽभूद्दुर्गमात्कनकोऽभवत् ॥ ३ ॥
कनकात् कृतवीर्य्यस्तु कृताग्निः करवीरकः।
कृतौजाश्च चतुर्थोऽभूत् कृतवीर्य्यात्तु सोऽर्जुनः ॥ ४ ॥
दत्तोऽर्ज्जुनाय तपते सप्तद्वीपमहीशताम्।
ददौ बाहुसहस्रञ्च अजेयत्वं रणेऽरिणा ॥ ५ ॥

अधर्म्मे वर्त्तमानस्य विष्णुहस्तान्मृतिर्भुवा ।
दश यज्ञसहस्राणि सोऽर्जुनः कृतवान्नृपः ॥ ६ ॥
अनष्टद्रव्यता राष्ट्रे तस्य संस्मरणादभूत् ।
न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति वै नृपाः ॥ ७ ॥
यज्ञैर्दानैस्तपोभिश्च विक्रमेण श्रुतेन च ।
कार्त्तवीर्यस्य च शतं पुत्त्राणां पञ्च वै पराः ॥ ८ ॥
शूरसेनश्च शूरश्च धृष्टोक्तः कृष्ण एव च ।
जयध्वजश्च नामासीदावन्त्यो नृपतिर्महान् ॥ ९ ॥
जयध्वजात्तालजङ्घस्तालजङ्घात्ततः सुताः ।
हैहयानां कुलाः पञ्च भोजाश्चावन्तयस्तथा ॥ १० ॥
वीतिहोत्राः स्वयं जाताः शौण्डिकेयास्तथैव च ।
वीतिहोत्रादनन्तोऽभूदनन्ताद्दुर्जयो नृपः ॥ ११ ॥
क्रोष्टोर्व्वंशं प्रवक्ष्यामि यत्र जातो हरिः स्वयम् ।
क्रोष्टोस्तु वृजिनीवांश्च स्वाहाऽभूद्वृजिनीवतः ॥ १२ ॥
स्वाहापुत्त्रो रुषद्गुश्च(१) तस्य चित्ररथः सुतः ।
शशविन्दुश्चित्ररथाच्चक्रवर्त्ती हरौ रतः ॥ १३ ॥
शशविन्दोश्च पुत्त्राणां शतानामभवच्छतम् ।
धीमतां चारुरूपाणां भूरिद्रविणतेजसाम् ॥ १४ ॥
पृथुश्रवाः प्रधानोऽभूत्तस्य पुत्त्रः सुयज्ञकः ।
सुयज्ञस्योशनाः पुत्त्रस्तितिक्षुरुशनःसुतः ॥ १५ ॥
तितिक्षोस्तु मरुत्तोऽभूत्तस्मात्कम्बलवर्हिषः ।
पञ्चाशद्रुक्मकवचाद्रुक्मेषुः पृथुरुक्मकः ॥ १६ ॥

---

१ चित्रांशुकेति ख० ।

हविर्ज्यामघः पापघ्नो ज्यामघः स्त्रीजितोऽभवत्।
शैव्यायां ज्यामघाद्दासीद्विदर्भस्तस्य कौशिकः॥ १७॥
लोमपादः क्रथः श्रेष्ठात् क्षतिः(१)स्याल्लोमपादतः।
कौशिकस्य चिदिः पुत्रस्तस्माच्चैद्या नृपाः स्मृताः॥ १८॥
क्रथाद्विदर्भपुत्राच्च कुन्तिः कुन्तेस्तु धृष्टकः।
धृष्टस्य निधृतिस्तस्य उदर्काखगो विदूरथः॥ १९॥
दशार्हपुत्रो व्योमस्तु व्योमाज्जीमूत उच्यते।
जीमूतपुत्रो विकलस्तस्य भीमरथः सुतः॥ २०॥
भीमरथान्नवरथस्ततो दृढ़रथोऽभवत्।
शकुन्तिश्च दृढ़रथात् शकुन्तेश्च करम्भकः॥ २१॥
करम्भाद्देवलातोऽभूत(२) देवक्षेत्रश्च तत्सुतः।
देवक्षेत्रान्मधुर्नाम मधोर्द्रवरसोऽभवत्॥ २२॥
द्रवरसात् पुरुस्ततोऽभूज्जन्तुरासीत्तु तत्सुतः।
गुणी तु यादवो राजा जन्तुपुत्रस्तु सात्वतः॥ २३॥
सात्वताद्भजमानस्तु वृष्णिरन्धक एव च।
देवावृधश्च चत्वारस्तेषां वंशास्तु विश्रुताः(३)॥ २४॥
भजमानस्य बाह्योऽभूद्वृष्टिः कृमिर्निमिस्तथा।
देवावृधाद्बभ्रुरासीत्तस्य श्लोकोऽत्र गीयते॥ २५॥
यथैव शृणुमो दूरात् गुणांस्तद्वत्समन्तिकात्।
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः॥ २६॥
चत्वारश्च सुता बभ्रोर्वासुदेवपरा नृपाः।

---

(१) धृतिरिति ञ०।

१ देवरातोऽभूदिति ख०, ग०, घ०, ङ०, ञ०, ट० च।

३ विश्रुता इति क०, ख०, घ०, [illegible]

कुकुरो भजमानस्तु(१) शिनिः कम्बलबर्हिषः ॥ २७ ॥
कुकुरस्य(२) सुतो धृष्णुर्धृष्णोस्तु तनयो धृतिः ।
धृतेः कपोतरोमाभूत्तस्य पुत्रस्तु तित्तिरिः ॥ २८ ॥
तित्तिरेस्तु नरः पुत्रस्तस्य चन्दनदुन्दुभिः ।
पुनर्वसुस्तस्य पुत्र आहुकश्चाहुकीसुतः ॥ २९ ॥
आहुकाद्देवको जज्ञे उग्रसेनस्ततोऽभवत् ।
देववानुपदेवश्च देवकस्य सुताः स्मृताः ॥ ३० ॥
तेषां स्वसारः सप्तासन् वसुदेवाय ता ददौ ।
देवकी श्रुतदेवी च मित्रदेवी यशोधरा ॥ ३१ ॥
श्रीदेवी सत्यदेवी च सुरापी चेति सप्तमी ।
नवोग्रसेनस्य सुताः कंसस्तेषाञ्च पूर्वजः ॥ ३२ ॥
न्यग्रोधश्च सुनामा च कङ्कः शङ्कुश्च भूमिपः ।
सुतनूराष्ट्रपालश्च युद्धमुष्टिः सुमुष्टिकः ॥ ३३ ॥
भजमानस्य पुत्रोऽथ रथमुख्यो विदूरथः ।
राजाधिदेवः शूरश्च विदूरथसुतोऽभवत् ॥ ३४ ॥
राजाधिदेवपुत्रौ द्वौ शोणाश्वः श्वेतवाहनः ।
शोणाश्वस्य सुताः पञ्च शमी शत्रुजिदादयः(३) ॥ ३५ ॥
शमीपुत्रः प्रतिक्षेत्रः प्रतिक्षेत्रस्य भोजकः ।
भोजस्य हृदिकः पुत्रो हृदिकस्य दशात्मजाः ॥ ३६ ॥
कृतवर्म्मा शतधन्वा देवार्हो भीषणादयः ।

१ कुकुरो भजमानस्त्विति क०। कुन्दरी भजमानस्त्विति अ० ।
२ कुकुरस्येति क० ।
३ शत्रुजिदादय इति ख० ।

देवार्हात् कम्बलवर्हिरसमौजास्ततोऽभवत् ॥ ३७ ॥
सुदंष्ट्रश्च सुवासश्च धृष्टोऽभूदसमौजसः ।
गान्धारी चैव माद्री च धृष्टभार्य्ये बभूवतुः ॥ ३८ ॥
सुमित्रोऽभूच्च गान्धार्य्यां माद्री जज्ञे युधाजितम्(१)।
अनमित्रः शिनिर्धृष्टात्ततो वै देवमीढुषः ॥ ३९ ॥
अनमित्रसुतो निघ्नो निघ्नस्यापि प्रसेनकः ।
सत्राजितः प्रसेनोऽथ मणिं सूर्यात्स्यमन्तकम् ॥ ४० ॥
प्राप्यारण्ये चरन्तन्तु सिंहो हत्वाऽग्रहीन्मणिं ।
हतो जाम्बवता सिंहो जाम्बवान् हरिणा जितः ॥ ४१ ॥
तस्मान्मणिं जाम्बवतीं प्राप्यागाद्द्वारकां पुरीम् ।
सत्राजिताय प्रददौ शतधन्वा जघान तम् ॥ ४२ ॥
हत्वा शतधनुं कृष्णो मणिमादाय कीर्त्तिभाक् ।
बलयादवमुख्याग्रे अक्रूरान्मणिमर्पयेत् ॥ ४३ ॥
मिथ्याभिशस्तिं कृष्णस्य त्यक्ता स्वर्गी च सम्पठन् ।
सत्राजितो भङ्गकारः सत्यभामा हरेः प्रिया ॥ ४४ ॥
अनमित्राच्छिनिर्ज्जज्ञे सत्यकस्तु शिनेः सुतः ।
सत्यकात्सात्यकिर्ज्जज्ञे युयुधानाद्धुनिस्त्वभूत् ॥ ४५ ॥
धुनेर्युगन्धरः पुत्रः स्वाह्योऽभूत्(२) स युधाजितः ।
ऋषभश्चैत्रकौ तस्य वृषभाच्च स्वफल्ककः ॥ ४६ ॥
स्वफल्कपुत्रो ह्यक्रूरो अक्रूराच्च सुधन्वकः ।
शूरात्तु वसुदेवाद्याः पृथा पाण्डोः प्रियाऽभवत् ॥ ४७ ॥

---

१ सुधाजितमिति ख०, ङ० च ।
२ स्वाह्योभूदिति क०, ङ० च । साह्वेऽभूदिति ज० ।

धर्म्माद्युधिष्ठिरः पाण्डोर्वायोः कुन्त्यां वृकोदरः ।
इन्द्राद्धनञ्जयो माद्र्यां नकुलः सहदेवकः ॥ ४८ ॥
वसुदेवाच्च रोहिण्यां रामः सारणदुर्गमौ ।
वसुदेवाच्च देवक्यामादौ जातः सुषेनकः ॥ ४९ ॥
कीर्त्तिमान् भद्रसेनश्च जारुख्यो विष्णुदासकः ।
भद्रदेहः कंस एतान् षड्गर्भान्निजघान ह ॥ ५० ॥
ततो बलस्ततः कृष्णः सुभद्रा भद्रभाषिणी ।
चारुदेष्णश्च शाम्बाद्याः कृष्णाज्जाम्बवतीसुताः ॥ ५१ ॥
इत्याग्नेये महापुराणे यदुवंशवर्णनं नाम चतुःसप्तत्यधिक-
द्विशततमोऽध्यायः ।

---

## अथ पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ।

——o*o——

### द्वादशसङ्ग्रामाः ।

अग्निरुवाच । कश्यपो वसुदेवोऽभूद्देवकी चादितिर्वरा ।
देवक्यां वसुदेवात्तु कृष्णोऽभूत्तपसान्वितः ॥ १ ॥
धर्म्मसंरक्षणार्थाय ह्यधर्म्महरणाय च ।
सुरादेः पालनार्थञ्च दैत्यादेर्म्मथनाय च ॥ २ ॥
रुक्मिणी सत्यभामा च सत्या नग्नजिती प्रिया ।
सत्यभामा हरेः सेव्या गान्धारी लक्ष्मणा तथा ॥ ३ ॥
मित्रविन्दा(१) च कालिन्दी देवी जाम्बवती तथा ।
सुशीला च तथा माद्री कौशल्या विजया जया ॥ ४ ॥

१ चित्रविन्देति ख०, ङ० च ।

एवमादीनि देवीनां सहस्राणि तु षोड़श ।
प्रद्युम्नाद्याश्च रुक्मिण्यां भौमाद्याः सत्यभामया ॥ ५ ॥
जाम्बवत्याश्च शाम्बाद्याः कृष्णस्यासंस्तथापरे ।
शतं शतसहस्राणां पुत्राणां तस्य धीमतः ॥ ६ ॥
अशीतिश्च सहस्राणि यादवाः कृष्णरक्षिताः ।
प्रद्युम्नस्य तु वैदर्भ्यामनिरुद्धो रणप्रियः ॥ ७ ॥
अनिरुद्धस्य वज्राद्या यादवाः सुमहाबलाः ।
तिस्रः कोट्यो यादवानां षष्टिर्लक्षाणि दानवाः ॥ ८ ॥
मनुष्ये बाधका ये तु तन्नाशाय बभूव सः ।
कर्त्तुं कर्मव्यवस्थानं मनुष्यो जायते हरिः ॥ ९ ॥
देवासुराणां सङ्ग्रामा दायार्थं द्वादशाभवन् ।
प्रथमो नारसिंहस्तु द्वितीयो वामनो रणः ॥ १० ॥
सङ्ग्रामस्त्वथ वाराहश्चतुर्थोऽमृतमन्थनः ।
तारकामयसङ्ग्रामः षष्ठो ह्याजीवको रणः ॥ ११ ॥
त्रैपुरश्चान्धकबधो नवमो वृत्रघातकः ।
जितो हालाहलश्चाथ घोरः कोलाहलो रणः ॥ १२ ॥
हिरण्यकशिपोश्चोरो विदार्य्य च नखैः पुरा ।
नारसिंहो देवपालः प्रह्लादं कृतवान् नृपम् ॥ १३ ॥
देवासुरे वामनश्च छलित्वा बलिमूर्ज्जितम् ।
महेन्द्राय ददौ राज्यं काश्यपोऽदितिसम्भवः ॥ १४ ॥
वराहस्तु हिरण्याक्षं हत्वा देवानपालयत् ।
उज्जहार भुवं मग्नां देवदेवैरभिष्टुतः ॥ १५ ॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ।

सुरासुरैश्च मथितं(१) देवेभ्यश्चामृतं ददौ ॥ १६ ॥
तारकामयसङ्ग्रामे तदा देवाश्च पालिताः ।
निवार्य्येन्द्रं गुरून् देवान् दानवान्सोमवंशकृत् ॥ १७ ॥
विश्वामित्रवशिष्ठात्रिकवयश्च रणे सुरान् ।
अपालयन्ते निवार्य्य रागद्वेषादिदानवान् ॥ १८ ॥
पृथ्वीरथे ब्रह्मयन्तुरीशस्य शरणो हरिः ।
ददाह त्रिपुरं देवपालको दैत्यमर्दनः ॥ १९ ॥
गौरीं जिहीर्षुणा रुद्रमन्धकेनार्दितं हरिः ।
असुरक्तश्च रेवत्यां चक्रे चान्धासुरार्दनम् ॥ २० ॥
अपां फेनमयो भूत्वा देवासुररणे हरन्(२) ।
वृत्रं देवहरं विष्णुर्देवधर्म्मानपालयत् ॥ २१ ॥
शाल्वादीन् दानवान् जित्वा हरिः परशुरामकः ।
अपालयत् सुरादींश्च दुष्टक्षत्रं निहत्य च ॥ २२ ॥
हालाहलं विषं दैत्यं निराकृत्य महेश्वरात् ।
भयं निर्णाशयामास देवानां मधुसूदनः ॥ २३ ॥
देवासुरे रणे यश्च दैत्यः कोलाहलो जितः ।
पालिताश्च सुराः सर्व्वे विष्णुना धर्म्मपालनात् ॥ २४ ॥
राजानो राजपुत्राश्च मुनयो देवता हरिः ।
यदुक्तं यच्च नैवोक्तमवतारा हरेरिमे ॥ २५ ॥

इत्याग्नेये महापुराणे द्वादशसङ्ग्रामा नाम पञ्चसप्तत्यधिक-
द्विशततमोऽध्यायः ।

---

१ सुरासुरैरमन्थाब्धिमिति क०, ख० च० ।
२ देवासुररणेऽभवदिति क०, ख०, ग०, ङ० च० ।

# अथ षट्सप्तत्यधिकद्विशततमोऽध्यायः।

———000———

## राजवंशवर्णनं।

अग्निरुवाच। तुर्व्वसोश्च सुतो वर्गो गोभानुस्तस्य चात्मजः(१)।
गोभानोरासीत्(२) त्रैशानिस्त्रैशानेस्तु करन्धमः॥ १॥
करन्धमान्मरुत्तोभूद्दुष्मन्तस्तस्य चात्मजः।
दुष्मन्तस्य वरूथोऽभूद्गाण्डीरस्तु वरूथतः॥ २॥
गाण्डीराच्चैव गान्धारः पञ्च जानपदास्ततः।
गान्धाराः केरलाश्चोलाः पाण्ड्याःकोला(३)महाबलाः॥३॥
द्रुह्युस्तु वभ्रुसेतुश्च वभ्रुसेतोः पुरोवसुः।
ततो गान्धारा गान्धारेर्धर्म्मो धर्म्माद् घृतोऽभवत्॥ ४॥
घृतात्तु विदुषस्तस्मात् प्रचेतास्तस्य वै शतम्।
आनद्रश्च सभानरश्चासुषः परमेषुकः॥ ५॥
सभानरात् कालानलः कालानलजसृञ्जयः।
पुरञ्जयः सृञ्जयस्य तत्सुतो जनमेजयः॥ ६॥
तत्पुत्रस्तु महाशालस्तत्पुत्रोऽभून्महामनाः।
तस्मादुशीनरो ब्रह्मनृगायान्तु नृगस्ततः॥ ७॥
नरायान्तु नरश्चासीत् क्रमिस्तु क्रमितः सुतः।

---

१ गोभानुस्तस्य चात्मज इति ख०।

२ गोभानोरासीदिति ख०।

३ कर्णा इति ग०, ङ० ख०।

दृशायां सुव्रतो जज्ञे दृषद्वत्यां शिविस्तथा ॥ ८ ॥
शिवेः पुत्रास्तु चत्वारः पृथुदर्भश्च वीरकः ।
कैकेयो भद्रकस्तेषां नाम्ना जनपदाः शुभाः ॥ ९ ॥
तितिक्षुरुशीनरजस्तितिक्षोश्च रुषद्रथः ।
रुषद्रथादभूत्पैलः पैलाच्च सुतपाः सुतः ॥ १० ॥
महायोगी बलिस्तस्मादङ्गो वङ्गश्च मुख्यकः ।
पुण्ड्रः कलिङ्गो बालेयो बलिर्योगी बलान्वितः ॥ ११ ॥
अङ्गाद्दधिवाहनोऽभूत्(१) तस्माद्दिविरथो नृपः ।
दिविरथाद्धर्म्मरथस्तस्य चित्ररथः सुतः ॥ १२ ॥
चित्ररथात्सत्यरथो लोमपादश्च तत्सुतः ।
लोमपादाच्चतुरङ्गः पृथुलाक्षश्च तत्सुतः ॥ १३ ॥
पृथुलाक्षाच्च चम्पोऽभूच्चम्पाद्धर्य्यङ्गकोऽभवत् ।
हर्य्यङ्गाच्च भद्ररथो बृहत्कर्म्मा च तत्सुतः ॥ १४ ॥
तस्मादभूद्बृहद्भानुर्बृहद्भानोर्बृहात्मवान् ।
तस्माज्जयद्रथो ह्यासोज्जयद्रथाद् दृढ्रथः ॥ १५ ॥
बृहद्रथाद्विश्वजिच्च कर्णो विश्वजितोऽभवत् ।
कर्णस्य वृषसेनस्तु पृथुसेनस्तदात्मजः ।
एतेऽङ्गवंशजा भूपाः पूरोर्वंशं निबोध मे ॥ १६ ॥

इत्याग्नेये महापुराणे राजवंशवर्णनं नाम षट्सप्तत्यधिक-
द्विशततमोऽध्यायः ।

---

१ दधिवाहनोऽभूदिति ख०, ग०, ज० च० ।

## अथ सप्तसप्तत्यधिकद्विशततमोऽध्यायः।

———000———

पुरुवंशवर्णनं ।

अग्निरुवाच। पुरोर्जनमेजयोऽभूत्प्राचीन्वांस्तु तत्सुतः ।
प्राचीन्वतो मनस्युस्तु तस्माद्वीतमयो नृपः ॥ १ ॥
शुन्धुर्वीतमयाच्चा ऽभूच्छुन्धोर्बहुविधः(१) सुतः ।
बहुविधाच्च संयातिरहोवादी च तत्सुतः ॥ २ ॥
तस्य पुत्रोऽथ भद्राश्वो भद्राश्वस्य दशात्मजाः ।
ऋचेयुश्च कृषेयुश्च सन्नतेयुस्तथात्मजः ॥ ३ ॥
घृतेयुश्च चितेयुश्च स्थण्डिलेयुश्च सत्तमः ।
धर्मेयुः सन्नतेयुश्च कृचेयुर्मतिनारकः ॥ ४ ॥
तंसुरोधः प्रतिरथः पुरस्तो मतिनारजाः ।
आसीत्प्रतिरथात्कण्वः कण्वान्मेधातिथिस्त्वभूत् ॥ ५ ॥
तंसुरोधाच्च चत्वारो दुष्मन्तोऽथ प्रवीरकः ।
सुमन्तश्चानयो वीरो दुष्मन्ताद्भरतोऽभवत् ॥ ६ ॥
शकुन्तलायान्तु बली यस्य नाम्ना तु भारताः ।
सुतेषु मातृकोपेन नष्टेषु भरतस्य च । ७ ॥
ततो मरुद्भिरानीय पुत्रः स तु वृहस्पतेः ।
संक्रामितो भरद्वाजः क्रतुभिर्वितथोऽभवत् ॥ ८ ॥
स चापि वितथः पुत्रान् जनयामास पञ्च वै ।

---

१ शन्धुर्वीतमयाच्चाभूच्छन्धोर्बहुविध इति ख०, ज० च० ।

सुहोत्रश्च सुहोतारङ्गयङ्गर्भस्तथैव च ॥ ६ ॥
कपिलश्च महात्मानं सुकेतुश्च सुतद्वयम्।
कौशिकश्च गृत्समपतिं तथा गृत्समपतेः सुताः ॥ १० ॥
ब्राह्मणाः क्षत्रिया वैश्याः काशो दीर्घतमाः(१) सुताः।
ततो धन्वन्तरिश्चासीत्तत्सुतोऽभूच्च केतुमान् ॥ ११ ॥
केतुमतो हेमरथो दिवोदास इतिश्रुतः।
प्रतर्द्दनो दिवोदासाद्भर्गवत्सौ प्रतर्द्दनात् ॥ १२ ॥
वत्सादनर्क आसीच्च अनर्कात् क्षेमकोऽभवत्।
क्षेमकाद्वर्षकेतुश्च वर्षकेतोऽर्विभुः स्मृतः(२) ॥ १३ ॥
विभोरानर्त्तः पुत्रोऽभूद्विभोश्च सुकुमारकः।
सुकुमारात्सत्यकेतुर्वत्सभूमिस्तु वत्सकात् ॥ १४ ॥
सहोत्रस्य बृहत्पुत्रो बृहतस्तनयास्त्रयः।
अजमीढो द्विमीढश्च पुरुमीढश्च वीर्य्यवान् ॥ १५ ॥
अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान्(३)।
जह्नोरभूदजकाश्वो बलाकाश्वस्तदात्मजः ॥ १६ ॥
बलाकाश्वस्य कुशिकः कुशिकात् गाधिरिन्द्रकः।
गाधेः सत्यवती कन्या विश्वामित्रः सुतोत्तमः ॥ १७ ॥
देवरातः कतिमुखा विश्वामित्रस्य ते सुताः।
शुनःशेफोऽष्टकश्चान्यो ह्यजमीढात् सुतोऽभवत् ॥ १८ ॥
नीलिन्यां शान्तिरपरः पुरुजातिः सुशान्तितः।

---

१ काशदीर्घतमा इति ज०।

२ सुत इति ख०, ग०, ज० च।

३ प्रभाववानिति ख०।

पुरुजातिस्तु वाह्याश्वो वाह्याश्वात् पञ्च पार्थिवाः ॥ १८ ॥
मुकुलः सृञ्जयश्चैव राजा बृहदिषुस्तथा ।
यवीनरश्च(१) क्रमिलः पाञ्चाला इति विश्रुताः ॥ २० ॥
मुकुलस्य तु मौकुल्याः चत्रोपेता द्विजातयः ।
चञ्चाश्वो मुकुलाज्जज्ञे चञ्चाश्वान्मिथुनं ह्यभूत् ॥ २१ ॥
दिवोदासो ह्यहल्या च अहल्यायां शरद्वतात् ।
शतानन्दः शतानन्दात् सत्यधृन्मिथुनन्ततः ॥ २२ ॥
कृपः कृपी दिवोदासान्मैत्रेयः सोमपस्ततः ।
सृञ्जयात् पञ्चधनुषः सोमदत्तश्च तत्सुतः ॥ २३ ॥
सहदेवः सोमदत्तात् सहदेवात्तु सोमकः ।
आसीच्च सोमकाज्जन्तुर्ज्जन्तोश्च पृषतः सुतः ॥ २४ ॥
पृषताद्द्रुपदस्तस्माद्धृष्टद्युम्नोऽथ तत्सुतः ।
धृष्टकेतुश्च धूमिन्यामृक्षोऽभूदजमीढतः ॥ २५ ॥
ऋक्षात्सम्वरणो जज्ञे कुरुः सम्वरणात्ततः ।
यः प्रयागादपाक्रम्य कुरुक्षेत्रञ्चकार ह ॥ २६ ॥
कुरोः सुधन्वा सुधनुःपरिक्षिच्चारिमेजयः ।
सुधन्वनः सुहोत्रोऽभूत् सुहोत्राच्च्यवनो ह्यभूत् ॥ २७ ॥
वशिष्ठपरिचाराभ्यां सप्तासन् गिरिकासुताः ।
बृहद्रथः कुशो वीरो यदुः प्रत्यग्रहो बलः ॥ २८ ॥
मत्स्यकाली कुशाग्रोऽतो ह्यासीद्राज्ञो बृहद्रथात् ।
कुशाग्राद्वृषभो जज्ञे तस्य सत्यहितः सुतः ॥ २९ ॥
सधन्वा तत्सुतश्चोर्ज्ज ऊर्ज्जादासीच्च सम्भवः ।

१ यवीनवश्चेति ख०, ब०, अ० च ।

सम्भवाश्च जरासन्धः सहदेवश्च तत्सुतः ॥ ३० ॥
सहदेवादुदापिश्च उदापेः श्रुतकर्मकः ।
परिक्षितस्य दायादो धार्मिको जनमेजयः ॥ ३१ ॥
जनमेजयात्त्वमदस्युर्जह्नोस्तु सुरथः सुतः ।
श्रुतसेनोग्रसेनौ च भीमसेनश्च नामतः ॥ ३२ ॥
जनमेजयस्य पुत्रौ तु सुरथो मतिमांस्तथा ।
सुरथाद्विदूरथोऽभूदृच आसीद्विदूरथात् ॥ ३३ ॥
ऋचस्य तु द्वितीयस्य भीमसेनोऽभवत् सुतः ।
प्रतीपो भीमसेनात्तु प्रतीपस्य तु शान्तनुः ॥ ३४ ॥
देवापिर्वाह्लिकश्चैव सोमदत्तस्तु शान्तनोः ।
वाह्लिकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवाः शलः ॥ ३५ ॥
गङ्गायां शान्तनोर्भीष्मः काल्यायां विचित्रवीर्य्यकः ।
कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्य्यके ॥ ३६ ॥
धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाप्यजीजनत् ।
पाण्डोर्युधिष्ठिरः कुन्त्यां भीमश्चैवार्जुनस्त्रयः ॥ ३७ ॥
नकुलः सहदेवश्च पाण्डोर्माद्र्याञ्च देवतः ।
अर्जुनस्य च सौभद्रः परिक्षिदभिमन्युतः ॥ ३८ ॥
द्रौपदी पाण्डवानाञ्च प्रिया तस्यां युधिष्ठिरात् ।
प्रतिविन्ध्यो भीमसेनाच्छ्रुतकीर्त्तिर्द्धनञ्जयात्(१) ॥ ३९ ॥
सहदेवाच्छ्रुतकर्मा शतानीकस्तु नाकुलिः ।
भीमसेनाद्धिडिम्बायामन्यं आसीद् घटोत्कचः ॥ ४० ॥
एते भूता भविष्याश्च नृपाः संख्या न विद्यते ।

१ अत्र पाठः पतितः धनञ्जयात् क उत्पन्न इति विशेषाप्राप्तेः ।

गताः कालेन काशी हि हरिस्तं पूजयेद्द्विज ।
होममग्नौसमुद्दिश्य कुरु सर्व्वप्रदं यतः ॥ ४१ ॥

इत्याग्नेये महापुराणे पुरुवंशवर्णनं नाम सप्तसप्तत्यधिक-द्विशततमोऽध्यायः ॥

---

## अथाष्टसप्तत्यधिकद्विशततमोऽध्यायः ।

---

### सिद्धौषधानि ।

अग्निरुवाच । आयुर्वेदं प्रवक्ष्यामि सुश्रुताय यमब्रवीत् ।
देवो धन्वन्तरिः सारं मृतसञ्जीवनीकरं ॥ १ ॥
सुश्रुत उवाच । आयुर्वेदं मम ब्रूहि नराश्वेभरुगर्दनम् ।
सिद्धयोगान्सिद्धमन्त्रान्मृतसञ्जीवनीकरान् ॥ २ ॥
धन्वन्तरिरुवाच । रक्षन् बलं हि ज्वरितं लङ्घितं भोजयेद्भिषक् ।
सविश्वं लाजमण्डन्तु तृड्ज्वरान्तं शृतं जलम् ॥ ३ ॥
मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः ।
षड़हे च व्यतिक्रान्ते तिक्तकं पाययेद्ध्रुवम् ॥ ४ ॥
स्नेहयेत्तत्क्वदोषन्तु(१) ततस्तञ्च विरेचयेत् ।
जीर्णाः षष्टिकनीवाररक्तशालिप्रमोदकाः ॥ ५ ॥
तद्विधास्ते ज्वरेष्विष्टा यवानां विकृतिस्तथा ।
मुद्गा मसूराश्च णकाः कुलत्थाश्च समुकुष्ठकाः ॥ ६ ॥

---

(१) पक्वदोषमिति क० ।

आटरूषो नारकाद्याश्च कर्क्कोटककटोल्वकम्।
पटोलं सफलं निम्बं पर्पटं दाडिमं ज्वरे ॥ ७ ॥
अधोगे वमनं शस्तमूर्द्ध्वगे च विरेचनम।
रक्तपित्ते तथा पानं षडङ्गं शुण्ठिवर्ज्जितम् ॥ ८ ॥
शालिगोधूमलाजाश्च यवशालिमसूरकाः।
सकुष्ठचणका मुद्गा भक्ष्या गोधूमका हिताः ॥ ९ ॥
साधिता घृतदुग्धाभ्यां चौद्रं शर्करा मधु।
अतीसारे पुराणानां शालीनां भक्षणं हितं ॥ १० ॥
अनभिष्यन्दि यच्चान्नं लोध्रवल्कलसंयुतम्।
मारुतं वर्ज्जयेद् यत्नः कार्य्यो गुल्मिषु सर्वथा ॥ ११ ॥
वाटंश्च चीरेण चाश्नीयाद्वास्तुकं घृतसाधितं।
गोधूमशालयस्तिक्ता हिता जठरिणामथ ॥ १२ ॥
गोधूमशालयो मुद्गा अम्लाः खदिरोऽभया।
पञ्चकोलञ्चाङ्गलाश्च निम्बवासाः पटोलकाः ॥ १३ ॥
मातुलङ्गरसाजातिशुष्कमूलकसैन्धवाः।
कुष्ठिनाञ्च तथा शस्तं पानार्थे खदिरोदकं ॥ १४ ॥
मसूरमुद्गौ पेयार्थे भोज्या जीर्णाश्च शालयः।
निम्बपर्पटकैः शाकैर्जाङ्गलानां तथा रसः॥ १५ ॥
विडङ्गं मरिचं मुस्तं कुष्ठं लोध्रं सुवर्च्चिका।
मनःशिला च वालेयः कुष्ठहा मूत्रपेषितः ॥ १६ ॥
अपूपकुष्ठकुल्माषयवाद्या मेहिनां हिताः।
यवान्नविकृतिर्मुद्गा कुलत्था जीर्णशालयः ॥ १७ ॥
तिक्तरूक्षाणि शाकानि तिक्तानि हरितानि च

तैलानि तिलशिग्रुकबिभीतकेङ्गुदानि च ॥ १८ ॥
मुद्गाः सयवगोधूमा धान्यं वर्षस्थितञ्च यत् ।
जाङ्गलस्य रसः शस्तो भोजने राजयक्ष्मिणां ॥ १९ ॥
कौलत्थमौद्गको रास्नाशुष्कमूलकजाङ्गलैः ।
यूषैर्वा विष्किरैः सिद्धैर्दधिदाड़िमसाधितैः ॥ २० ॥
मातुलङ्गरसक्षौद्रद्राक्षाव्योषादिसंस्कृतैः ।
यवगोधूमशाल्यन्नैर्भोजयेच्छासकासिनं ॥ २१ ॥
दशमूलबलारास्नाकुलत्थैरुपसाधिताः ।
पेयाः यूषरसाः क्वाथाः श्वासहिक्कानिवारणाः ॥ २२ ॥
शुष्कमूलककौलत्थमूलजाङ्गलजैरसैः ।
यवगोधूमशाल्यन्नं जीर्णं सोशीरमाचरेत् ॥ २३ ॥
सौथवान् सगुड़ां पथ्यां खादेद्वा गुड़नागरम् ।
तक्रञ्च चित्रकश्चोभौ ग्रहणीरोगनाशनौ ॥ २४ ॥
पुराणयवगोधूमशालयो जाङ्गलो रसः ।
मुद्गामलकखर्जूरमृद्वीकाबदराणि च ॥ २५ ॥
मधु सर्पिः पयः शक्रं निम्बपर्पटको वृषम् ।
तक्रारिष्टाश्च(१) शस्यन्ते सततं वातरोगिणाम् ॥ २६ ॥
हृद्रोगिणो विरेच्यास्तु पिप्पल्यो हिक्किनां हिताः ।
तक्रावलालसिन्धूनि मुक्तानि शिशिराम्भसा ॥ २७ ॥
मुक्ताः सौवर्चलाजादि मद्यं शस्तं मदात्यये(२) ।
सक्षौद्रपयसा लाक्षां पिबेच्च क्षतवान्नरः ॥ २८ ॥

१ भद्राविद्वाश्चेति ख० ।
२ सदामये इति ज० । इमात्यये इति ट० ।

अयं मांसरसाहारी वह्निसंरक्षणाज्जयेत् ।
शालयो भोजने रक्ता नीवारकलमादयः ॥ २९ ॥
यवान्नविकृतिर्म्मांसं शाकं सौवर्च्चलं शटी ।
पथ्या तथैवार्शसां यन्मण्डं तक्रञ्च वारिणा(१) ॥ ३० ॥
मुस्ताभ्यासस्तथा लेपश्चित्रकेण हरिद्रया ।
यवान्नविकृतिः शालिर्व्वास्तूकं ससुवर्च्चलम् ॥ ३१ ॥
त्रपुषवारुगोधूमाः क्षीरेक्षुघृतसंयुताः ।
मूत्रकृच्छ्रे च शस्ताः स्युः पाने मण्डसुरादयः ॥ ३२ ॥
लाजाः शक्तुस्तथा क्षौद्रं शूल्यं मांसं परूषकम् ।
वार्त्ताकुलावशिखिनश्छर्द्दिघ्नाः पानकानि च ॥ ३३ ॥
शाल्यन्नस्तोयपयसी केवलोष्णे शृतेऽपि वा ।
तृष्णाघ्ने मुस्तगुडयोर्गुटिका वा मुखे धृता ॥ ३४ ॥
यवान्नविकृतिः पूपं(२) शुष्कमूलकजन्तथा ।
शाकं पटोलवेत्राग्रमुक्तन्तश्वविनाशनम् ॥ ३५ ॥
मुद्गाढ़कमसूराणां सतिलैर्जाङ्गलैरसैः ।
ससैन्धवघृतद्राक्षाशुण्ठ्यामलककोलजैः ॥ ३६ ॥
यूषैः पुराणगोधूमयवशाल्यन्नमभ्यसेत् ।
विसर्पी समिताक्षौद्रमृद्वीकादाडिमोदकम् ॥ ३७ ॥
रक्तयष्टिकगोधूमयवमुद्गादिकं लघु ।
काकमाची च वेत्राग्रं वास्तुकञ्च सुवर्च्चला ॥ ३८ ॥
वातशोणितनाशाय तोयं शस्तं सितं मधु ।

---

१ पथ्या तथैव कासस्य मण्डं तक्रञ्च वारुणमिति ख०, ग० च ।
२ दूषमिति ख०, ग० च ।

नाशारोगेषु च हितं घृतं दुर्व्वाप्रसाधितम् ॥ ३९ ॥
भृङ्गराजरसे सिद्धं तैलं धात्रीरसेऽपि वा ।
नस्यं सर्व्वामयेष्विष्टं मूर्द्धजन्मगदेषु च ॥ ४० ॥
शीततोयान्नपानञ्च तिलानां विप्र भक्षणम् ।
द्विजदार्ढ्यकरं प्रोक्तं तथा तुष्टिकरम्परम् ॥ ४१ ॥
गण्डूषं तिलतैलेन द्विजदार्ढ्यकरं परं ।
विडङ्गचूर्णं गोमूत्रं सर्व्वत्र क्रिमिनाशने ॥ ४२ ॥
धात्रीफलान्यथाज्यञ्च शिरोलेपनमुत्तमम् ।
शिरोरोगविनाशाय स्निग्धमुष्णञ्च भोजनम् ॥ ४३ ॥
तैलं वा वस्तमूत्रञ्च कर्णपूरणमुत्तमम् ।
कर्णशूलविनाशाय सर्वशुक्तानि(१) वा द्विज ॥ ४४ ॥
शिरिमृच्चन्दनं लाक्षा मालती कलिका तथा ।
संयोज्या या कृता वर्त्तिः क्षतशुक्रहरी तु सा ॥ ४५ ॥
व्योषं त्रिफलया युक्तं तुत्थकञ्च तथा जलम् ।
सर्वाक्षिरोगशमनं तथा चैव रसाञ्जनं ॥ ४६ ॥
आज्यभृष्टं शिलापिष्टं लोध्रकाञ्जिकसैन्धवैः ।
आश्चोतनाविनाशाय सर्वनेत्रामये हितम् ॥ ४७ ॥
शिरिमृच्चन्दनैर्लेपो वह्निर्नेत्रस्य शस्यते ।
नेत्रामयविघातार्थं त्रिफलां शीलयेत् सदा ॥ ४८ ॥
रात्रौ तु मधुसर्पिर्भ्यां दीर्घमायुर्जिजीविषुः ।
शतावरीरसे सिद्धौ दुग्धे क्षीरघृतौ स्मृतौ ॥ ४९ ॥
कलम्बिकानि माषाश्च दुग्धे क्षीरघृतौ तथा ।

१ सर्व्वशुक्तानीति ख० ।

आयुष्या त्रिफला ज्ञेया पूर्ववन्मधुकान्विता ॥ ५० ॥
मधुकादिरसोपेता वलीपलितनाशिनी ।
वचासिद्धघृतं विप्र भूतदोषविनाशनम् ॥ ५१ ॥
काव्यं बुद्धिप्रदञ्चैव(१) तथा सर्व्वार्थसाधनम् ।
बलाकल्ककषायेण सिद्धमभ्यञ्जने हितम् ॥ ५२ ॥
रास्नासहचरैर्वापि तैलं वातविकारिणाम् ।
अनभिष्यन्दि यच्चान्नं तद्व्रणेषु प्रशस्यते ॥ ५३ ॥
शक्तुपिण्डी तथैवाम्ला पाचनाय प्रशस्यते ।
पक्वस्य च तथा भेदे निम्बचूर्णञ्च रोपणे ॥ ५४ ॥
तथा शुश्रुपचारश्च(२) बलिकर्म्म विशेषतः ।
सृतिका च तथा रक्षा प्राणिनान्तु सदा हिता ॥ ५५ ॥
भक्षणं निम्बपत्राणां सर्पदष्टस्य भेषजम् ।
तालनिम्बदलञ्चैव जीर्णन्तैलं यवाघृतम् ॥ ५६ ॥
धूपो वृश्चिकदष्टस्य शिखिपत्रघृतेन वा ।
अर्कक्षीरेण संपिष्टं लेपो बीजं पलाशजं ॥ ५७ ॥
वृश्चिकार्त्तस्य कृष्णा वा शिवा च फलसंयुता(३) ।
अर्कक्षीरं तिलं तैलं पललञ्च गुडं समम् ॥ ५८ ॥
पानाज्जयति दुर्व्वारं श्वविषं शीघ्रमेव तु ।
पीत्वा मूलं त्रिवृत्तुल्यं तण्डुलीयस्य सर्पिषा ॥ ५९ ॥
सर्पकीटविषाण्याशु जयत्युग्रबलान्यपि ।
चन्दनं पद्मकङ्कुष्ठं लताम्बूशीरपाटलाः ॥ ६० ॥

१ काव्यं दृष्टिप्रदञ्चैवेति ख० ।
२ प्रत्युपचारश्चेति ख० ।
३ फलसंयुतेति ञ० ।

निर्गुण्डी शारिवा मेलुर्नताविषहरो गदः ।
शिरोविरेचनं शस्तं गुडनागरकं द्विज ॥ ६१ ॥
स्नेहपाने तथा वस्तौ तैलं घृतमनुत्तमम् ।
स्वेदनीयः परो वह्निः शीताम्भःस्तम्भनं परम् ॥ ६२ ॥
त्रिवृद्वि रेचने श्रेष्ठा वमने मदनं तथा ।
वस्तिर्विरेको वमनं तैलं सर्पिस्तथा मधु ।
वातपित्तबलासानां क्रमेण परमौषधं ॥ ६३ ॥

इत्याग्नेये महापुराणे सिद्धौषधानि नामाष्टसप्तत्यधिक द्विशततमोऽध्यायः ।

---

## अथैकोनाशीत्यधिकद्विशततमोऽध्यायः ।

### सर्वरोगहराण्यौषधानि ।

धन्वन्तरिरुवाच । शारीरमानसागन्तुसहजा व्याधयो मताः ।
शारीरा ज्वरकुष्ठाद्या क्रोधाद्या मानसा मताः ॥ १ ॥
आगन्तवो विघातोत्था सहजाः क्षुज्जरादयः ।
शारीरागन्तुनाशाय सूर्य्यवारे घृतं गुडम् ॥ २ ॥
लवणं सहिरण्यञ्च विप्रायापूपमर्पयेत् ।
चन्द्रे चाभ्यङ्गदो विप्रे सर्वरोगैः प्रमुच्यते ॥ ३ ॥
तैलं शनैश्चरे दद्यादाश्विने गोरसान्नदः ।
घृतेन पयसा लिङ्गं संस्नाप्य स्याद्रुगुज्झितः ॥ ४ ॥

गायत्र्या स्नावयेद्‌गर्भ्भी दूर्वान्विमधुराम्रुताम् ।
यस्मिन् भे व्याधिमाप्नोति तस्मिन् स्नानं बलिः शुभे ॥ ५ ॥
मानमानां रुजादीनां विष्णोः स्तोत्रं हरं भवेत् ।
वातपित्तकफा दोषा धातवश्च तथा शृणु ॥ ६ ॥
भुक्तं पक्वाशयादन्नं द्विधा याति च सुश्रुत ।
अंशेनैकेन किट्टत्वं रसताञ्चापरेण च ॥ ७ ॥
किट्टभागो मलस्तत्र विण्मूत्रस्वेददूषिकाः ।
नासामलङ्कर्णमलं तथा देहम... यत् ॥ ८ ॥
रसभागाद्रसस्तत्र समाच्छोनिततां व्रजेत् ।
मांसं रक्तात्ततो मेदो मेदसोऽस्थ्न्यश्च मज्जनः ॥ ९ ॥
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्रागस्तथौजसः ।
देशमार्त्तिं बलं शक्तिं कालं प्रकृतिमेव च ॥ १० ॥
ज्ञात्वा चिकित्सितं कुर्य्याद्भेषजस्य तथा बलम् ।
तिथिं रिक्तान्त्यजेद्‌ भौमं मन्दमन्दाकर्णाग्रकम् ॥ ११ ॥
हरिगोद्विजचन्द्रार्कसुरादीन् प्रतिपूज्य च ।
शृणु मन्त्रमिमं विद्वन् भेषजारम्भमाचरेत् ॥ १२ ॥
ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कोऽनिलानलाः ।
ऋषयश्चौषधिग्रामा भूतसङ्घाश्च पान्तु ते ॥ १३ ॥
रसायनमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १४ ॥
वातश्लेष्मातको देशो बहुवृक्षो बहूदकः ।
अनूपदेशविख्यातो जाङ्गलस्तद्विवर्ज्जितः ॥ १५ ॥
किञ्चिदवृक्षोदको देशस्तथा साधारणः स्मृतः ।

आङ्गलः पित्तबहुलो मध्यः साधारणः स्मृतः ॥ १६ ॥
रूक्षः शीतचलो वायुः पित्तमुष्णं कटुत्रयम् ।
स्थिराम्लस्निग्धमधुरं बलाशश्च प्रचक्षते ॥ १७ ॥
वृद्धिः समानैरेतेषां विपरीतैर्विपर्य्ययः ।
रसाः स्वाद्वम्ललवणाः श्लेष्मला वायुनाशनाः ॥ १८ ॥
कटुतिक्तकषायाश्च वातलाः श्लेष्मनाशनाः ।
कट्वम्ललवणा ज्ञेयास्तथा पित्तविवर्द्धनाः ॥ १९ ॥
तिक्तस्वादुकषायाश्च तथा पित्तविनाशनाः ।
रसस्यैतद्गुणं नास्ति विपाकस्यैतदिष्यते ॥ २० ॥
वीर्य्योष्णाः कफवातघ्नाः शीताः पित्तविनाशनाः ।
प्रभावतस्तथा कर्म्म ते कुर्वन्ति च सुश्रुत ॥ २१ ॥
शिशिरे च वसन्ते च निदाघे च तथा क्रमात् ।
चयप्रकोपप्रशमाः कफस्य तु प्रकीर्त्तिताः ॥ २२ ॥
निदाघवर्षारात्रौ च तथा शरदि सुश्रुत ।
चयप्रकोपप्रशमाः पवनस्य प्रकीर्त्तिताः ॥ २३ ॥
मेघकाले च शरदि हेमन्ते च यथाक्रमात् ।
चयप्रकोपप्रशमास्तथा पित्तस्य कीर्त्तिताः ॥ २४ ॥
वर्षादयो विसर्गास्तु हेमन्ताद्यास्तथा त्रयः ।
शिशिराद्यास्तथादानं ग्रीष्मान्ता ऋतवस्त्रयः ॥ २५ ॥
सौम्यो विसर्गस्त्वादानमाग्नेयं परिकीर्त्तितम् ।
वर्षादींस्त्रीनृतून् सोमश्चरन् पर्य्यायशो रसान् ॥ २६ ॥
जनयत्यम्ललवणमधुरांस्त्रीन् यथाक्रमम् ।
शिशिरादीनृतूनर्कश्चरन् पर्य्यायशो रसान् ॥ २७ ॥

विवर्द्धयेत्तथा तिक्तकषायकटुकान् क्रमात्।
यथा रजन्यो वर्द्धन्ते बलमेकं हि वर्द्धते ॥ २८ ॥
क्रमशोऽथ मनुष्याणां क्षीयमानासु क्षीयते।
रात्रिभुक्तदिनानाञ्च वयसश्च तथैव च ॥ २९ ॥
आदिमध्यावसानेषु कफपित्तसमीरणाः।
प्रकोपं यान्ति कोपादौ काले तेषाञ्चयः स्मृतः ॥ ३० ॥
प्रकोपोत्तरके काले शमस्तेषां प्रकीर्त्तितः।
अतिभोजनतो विप्र तथा चाभोजनेन च ॥ ३१ ॥
रोगा हि सर्व्वे जायन्ते वेगोदीरणधारणैः।
अन्नेन कुक्षेर्द्वावंशावेकं पानेन पूरयेत् ॥ ३२ ॥
आश्रयं पवनादीनां तथैकमवशेषयेत्।
व्याधेर्निदानस्य तथा विपरीतमथौषधम् ॥ ३३ ॥
कर्त्तव्यमेतदेवात्र मया सारं प्रकीर्त्तितम्।
नाभेरूर्द्ध्वमधश्चैव गुदश्रोण्योस्तथैव च ॥ ३४ ॥
बलासपित्तवातानां देहे स्थानं प्रकीर्त्तितं।
तथापि सर्व्वगाश्चैते देहे वायुर्विशेषतः ॥ ३५ ॥
देहस्य मध्ये हृदयं स्थानं तन्मनसः स्मृतम्।
कृशोऽल्पकेशश्चपलो बहुवाग्विषमानलः ॥ ३६ ॥
व्योमगश्च तथा स्वप्ने वातप्रकृतिरुच्यते।
अकालपलितः क्रोधी प्रस्वेदी मधुरप्रियः ॥ ३७ ॥
स्वप्ने च दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते।
दृढाङ्गः स्थिरचित्तश्च सुप्रभः स्निग्धमूर्द्धजः ॥ ३८ ॥
शुक्लाम्बुदर्शी स्वप्ने च कफप्रकृतिको नरः।

तामसा राजसाश्चैव सात्त्विकाश्च तथा स्मृताः ॥ ३९ ॥
मनुष्या मुनिशार्दूल वातपित्तकफात्मकाः ।
रक्तपित्तं व्यवायाच्च गुरुकर्म्मप्रवर्त्तनैः ॥ ४० ॥
कट्वन्नभोजनाद्वायुर्देहे शोकाच्च कुप्यति
विदाहिनां तथोल्कानामुष्णान्नाध्वनिसेविनां(१) ॥ ४१ ॥
पित्तं प्रकोपमायाति भयेन च तथा द्विज ।
अत्यम्बुपानगुर्व्वन्नभोजिनां भुक्तशायिनाम् ॥ ४२ ॥
श्लेष्मा प्रकोपमायाति तथा ये चालसा जनाः ।
वाताद्युत्थानि रोगाणि ज्ञात्वा शाम्यानि लक्षणैः॥ ४३ ॥
अस्थिभङ्गः कषायत्वमास्ये शुष्कास्यता तथा ।
जृम्भणं लोमहर्षश्च वातिकव्याधिलक्षणम् ॥ ४४ ॥
नखनेत्रशिरागान्तु पीतत्वं कटुता मुखे ।
तृष्णा दाहोष्णता चैव पित्तव्याधिनिदर्शनम् ॥ ४५ ॥
आलस्यञ्च प्रसेकश्च गुरुता मधुरास्यता ।
उष्णाभिलाषिता चेति श्लैष्मिकव्याधिलक्षणम् ॥ ४६ ॥
स्निग्धोष्णमन्नमभ्यङ्गस्तैलपानादि वातनुत् ।
आज्यं क्षीरं सिताद्यञ्च चन्द्ररश्म्यादि पित्तनुत् ॥ ४७ ॥
सक्षौद्रं त्रिफलातैलं व्यायामादि कफापहम् ।
सर्व्वरोगप्रशान्त्यै स्याद्विष्णोर्ध्यानञ्च पूजनम् ॥ ४८ ॥

इत्याग्नेये महापुराणे सर्व्वरोगहराण्यौषधानि नामो-
नाशीत्यधिकद्विशततमोऽध्यायः ।

---

तथोल्कानामुष्णानामध्वसेविनामिति ख०

# अथाशीत्यधिकद्विशततमोऽध्यायः ॥

## रसादिलक्षणं ।

धन्वन्तरिरुवाच । रसादिलक्षणं वक्ष्ये भेषजानां गुणं शृणु ।
रसवीर्य्यविपाकज्ञो नृपादीनुच्चयेन्नरः ॥ १ ॥
रसाः स्वाद्वम्ललवणाः सौम्यजाः परिकीर्त्तिताः ।
कटुतिक्तकषायानि तथाग्नेया महाभुज ॥ २ ॥
त्रिधा विपाको द्रव्यस्य कट्वम्ललवणात्मकः ।
द्विधा वीर्य्यं समुद्दिष्टमुष्णं शीतं तथैव च ॥ ३ ॥
अनिर्द्देश्यप्रभावश्च ओषधीनां द्विजोत्तम ।
मधुरश्च कषायश्च तिक्तश्चैव तथा रसः ॥ ४ ॥
शीतवीर्य्याः समुद्दिष्टाः शेषास्तूष्णाः प्रकीर्त्तिताः ।
गुडुची तत्र तिक्तापि भवत्युष्णातिवीर्य्यतः ॥ ५ ॥
उष्णा कषायापि तथा पथ्या भवति मानद ।
मधुरोपि तथा मांस उष्ण एव प्रकीर्त्तितः ॥ ॥ ६ ॥
लवणो मधुरश्चैव विपाकमधुरौ स्मृतौ ।
आम्लोष्णश्च तथा प्रोक्तः शेषाः कटुविपाकिनः ॥ ७ ॥
वीर्य्यपाके विपर्य्यस्ते प्रभावात्तत्र निश्चयः ।
मधुरोऽपि कटुः पाके शस्त्रं चौद्रं(?) प्रकीर्त्तितं ॥ ८ ॥
क्वाथयेत् षोड़शगुणं पिबेद्द्रव्याच्चतुर्गुणम् ।

---

१ एवक्षौद्रमिति ख० ।

कल्पनैषा कषायस्य यत्र नोक्तो विधिर्भवेत्॥ ९॥
कषायन्तु भवेत्तोयं स्नेहपाके चतुर्गुणं(१)।
द्रव्यतुल्यं समुद्धृत्य द्रव्यं स्नेहं क्षिपेद्बुधः॥ १०॥
तावत्प्रमाणं द्रव्यस्य स्नेहपादं ततः क्षिपेत्।
तोयवर्ज्जन्तु यद्द्रव्यं स्नेहद्रव्यं तथा भवेत्॥ ११॥
संवर्त्तितौषधः पाकः स्नेहानां परिकीर्त्तितः।
तत्तुल्यता तु स्नेहस्य तथा भवति सुश्रुत(२)॥ १२॥
स्वक्षमन्यौषधं क्वाथं कषायश्चोक्तवद्भवेत्।
कर्षं चूर्णस्य निर्द्दिष्टं कषायस्य चतुष्पलं॥ १३॥
मध्यमैषा स्मृता मात्रा नास्ति मात्राविकल्पना।
वयः कालं बलं वह्निं देशं द्रव्यं रुजं तथा॥ १४॥
समवेक्ष्य महाभाग मात्रायाः कल्पना भवेत्।
सौम्यास्तत्र रसाः प्रायो विज्ञेया धातुवर्द्धनाः॥ १५॥
मधुरास्तु विशेषेण विज्ञेया धातुवर्द्धनाः।
दोषाणाञ्चैव धातूनां द्रव्यं समगुणन्तु यत्॥ १६॥
तदेव हृदये ज्ञेयं विपरीतं क्षमावहम्।
उपस्तम्भत्रयं प्रोक्तं देहेऽस्मिन्मनुजोत्तम॥ १७॥
आहारो मैथुनं निद्रा तेषु यत्नः सदा भवेत्।
असेवनात् सेवनाच्च अत्यन्तं नाशमाप्नुयात्॥ १८॥
क्षयस्य बृंहणं कार्य्यं स्थूलदेहस्य कर्षणम्।
रक्षणं मध्यकायस्य देहभेदास्त्रयो मताः॥ १९॥

---

१ स्नेहपाके च तद्द्रवमिति ख०।

२ तत्तुल्यताऽस्य तथा यथा भवति सुश्रुत इति ख०।

उपक्रमद्वयं प्रोक्तं तर्पणं चाप्यतर्पणं।
दीप्ताग्नी च मिताग्नी च जीर्णाग्नी च तथा भवेत् ॥ २० ॥
औषधीनां पञ्चविधा तथा भवति कल्पना।
रसः कल्कः सृतः शीतः फाण्टश्च मनुजोत्तम ॥ २१ ॥
रसश्च पीडको ज्ञेयः कल्क आलोडिताद् भवेत्।
वह्निश्च सृतो ज्ञेयः शीतः पर्युषितो निशां ॥ २२ ॥
सद्योभिसृतपूतं यत् तत् फाण्टमभिधीयते।
करणानां शतञ्चैव षष्टिश्चैवाधिका स्मृता ॥ २३ ॥
यो वेत्ति स त्वजेयः स्यात्सम्यक्षे चाङ्गरोग्निकः।
आहारशुद्धिरन्यर्थमग्निमूलं बलं नृणां ॥ २४ ॥
ससिन्धुतिफलाद्याद्यात्तुरागि अग्निवर्णदां।
जाङ्गलस्य रसं सिन्धुयुक्तं दधि पयःकणां ॥ २५ ॥
रसाधिकं समं कुर्य्यान्नरो वाताधिकोऽपि वा।
निदाघे मर्द्दनं प्रोक्तं शिशिरे च समं बहु ॥ २६ ॥
वसन्ते मध्यमं श्रेयन्निदाघे मर्द्दनोत्वणं।
त्वचन्तु प्रथमं मर्द्दमङ्गस्य तदनन्तरं ॥ २७ ॥
स्नायुरुधिरदेशेषु अस्थि भातीव मांसलं।
स्कन्धौ बाहू तथैवेह तथा जङ्घे मज्जागुनी ॥ २८ ॥
अरिवन्मर्द्दयेत् प्राज्ञो अनु वक्षश्च पूर्ववत्।
अङ्गसन्धिषु सर्व्वेषु निष्पीड्य बहुलं तथा ॥ २९ ॥
प्रसारयेदङ्गसन्धीश्च च क्षेपेण चाक्रमात्।
नाजीर्णे तु श्रमं कुर्य्यान्न भुक्त्वा पीतवाश्वरः ॥ ३० ॥
दिनस्य तु चतुर्भाग कुर्व्वन्तु प्रहरार्द्धके।

व्यायामं नैव कर्त्तव्यं स्नायाच्छीताम्बुना सज्जन् ॥ २१ ॥
वार्य्युष्णञ्च श्रमं जह्यात्तदा श्वासन्न धारयेत् ।
व्यायामश्च कफं हन्यात् वातं हन्याच्च मर्द्दनम् ॥ २२ ॥
स्नानं पित्ताधिकं हन्यात्तस्यान्ते चातपाः प्रियाः ।
आतपक्लेशकर्मादौ क्षेमव्यायामिनो नराः ॥ २३ ॥

इत्याग्नेये महापुराणे रसादिलक्षणं नामाशीत्यधिकद्विशततमोऽध्यायः ॥

---

## अथैकाशीत्यधिकद्विशततमोऽध्यायः ।

———000———

वृक्षायुर्वेदः ।

धन्वन्तरिरुवाच । वृक्षायुर्वेदमाख्यास्ये प्लक्षश्चोत्तरतः शुभः ।
प्राग्वटो याम्यतस्त्वाम्र आप्येऽश्वत्थः क्रमेण तु ॥ १ ॥
दक्षिणां दिशमुत्पन्नाः समीपे कण्टकद्रुमाः ।
उद्यानं गृहवासे(१)स्यात् तिलान् वाप्यथ पुष्पितान् ॥२॥
गृह्णीयाद्रोपयेद्वृक्षान् द्विजचन्द्रं प्रपूज्य च ।
ध्रुवाणि पञ्च वायव्यं हस्तं प्राजेशवैष्णवं ॥ ३ ॥
नक्षत्राणि तथा मूलं शस्यन्ते द्रुमरोपणे ।
प्रवेशयेन्नदीवाहान् पुष्करिण्यान्तु(२) कारयेत् ॥ ४ ॥

---

१ गृहवासे इति ख० ।
२ पुष्करिण्यान्विति पाठो न सम्यक् प्रतिभाति ।

हस्ता मघा तथा मैत्रमाद्यं पुष्यं सवासवं।
जलाशयसमारम्भे वारुणञ्चोत्तरात्रयम्॥ ५॥
संपूज्य वरुणं विष्णुं पर्ज्जन्यं तत् समाचरेत्।
अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः॥ ६॥
अशोकः कदली जम्बुस्तथा वकुलदाडिमाः।
सायं प्रातस्तु घर्म्मर्त्तौ शीतकाले दिनान्तरे॥ ७॥
वर्षारात्रौ भुवः शोषे सेक्तव्या रोपिता द्रुमाः।
उत्तमं विंशतिर्हस्ता मध्यमं षोड़शान्तरम्॥ ८॥
स्थानात् स्थानान्तरं कार्य्यं वृक्षाणां द्वादशावरं।
विफलाः स्युर्घना वृक्षाः शस्त्रेणादौ हि शोधनम्॥ ९॥
विड़ङ्गघृतपङ्काक्तान् सेचयेच्छीतवारिणा।
फलनाशे कुलत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः॥ १०॥
घृतशीतपयःसेकः फलपुष्पाय सर्वदा।
आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च॥ ११॥
गोमांसमुदकञ्चैव सप्तरात्रं निधापयेत्।
उत्सेकः सर्व्ववृक्षाणां फलपुष्पादिवृद्धिदः॥ १२॥
मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः।
विड़ङ्गतण्डुलोपेतं मत्स्यं मांसं हि दोहदं।
सर्वेषामविशेषेण वृक्षाणां रोगमर्द्दनम्॥ १३॥

इत्याग्नेये महापुराणे वृक्षायुर्वेदो नामैकाशीत्यधिक-
द्विशततमोऽध्यायः॥

——

# अथ द्व्यशीत्यधिकद्विशततमोऽध्यायः ।

---

## नानारोगहराण्यौषधानि ।

धन्वन्तरिरुवाच । सिंही शटी(१) निशायुग्मं वत्सकं क्वाथसेवनं ।
शिशोः सर्व्वातिसारेषु स्तन्यदोषेषु शस्यते ॥ १ ॥
शृङ्गीं सकृष्णातिविषां चूर्णितां मधुना लिहेत् ।
एका चातिविषा कासच्छर्द्दिज्वरहरी शिशोः ॥ २ ॥
बालैः सेव्या वचा साज्या सदुग्धा वाथ तैलयुक् ।
यष्टिकां शङ्खपुष्पीं वा बालः क्षीरान्वितां पिबेत् ॥ ३ ॥
वाग्रूपसम्पद्युक्तायुर्म्मेधाश्रीर्वर्द्धते शिशोः ।
वचाब्राह्मीनिशाखावासाशुण्ठीकृष्णानिशागदं ॥ ४ ॥
सयष्टिसैन्धवं बालः प्रातर्म्मेधाकरं पिबेत् ।
देवदारुमहाशिग्रुफलत्रयपयोमुचां ॥ ५ ॥
क्वाथः सकृष्णा मृद्वीका कल्कः सर्व्वान् क्रिमीन्हरेत् ।
त्रिफलाभृङ्गविश्वानां रसेषु मधुसर्पिषोः ॥ ६ ॥
मेषीक्षीरे च गोमूत्रे सिद्धं रोगे हितं शिशोः ।
नासारक्तहरो नस्याद्दुर्व्वारस इहोत्तमः ॥ ७ ॥
लशुनार्द्रकशिग्रूणां रसः कर्णस्य पूरणम् ।
तैलमार्द्रकजात्यं वा 'शूलहा(२) चौष्ठरोगनुत्(३) ॥ ८ ॥

---

१ सिंही पथ्येति ख० ।
२ मूत्रहा इत्यत्र पुस्तकभेदे पाठः ।
३ मूत्रहा शोषरोगनुदिति ञ० ।

जातीपत्रं फलं व्योषं कवलं मूत्रकं निशा ।
दुग्धक्वाथेऽभयाकल्के सिद्धं तैलं द्विजार्त्तिनुत् ॥ ९ ॥
धान्याम्बु नारिकेलं गोमूत्रं क्रमूकबिल्वयुक् ।
क्वाथितं कवलं कार्य्यमधिजिह्वाधिशान्तये ॥ १० ॥
साधितं लाङ्गलीकल्के तैलं निर्गुण्डिकारसैः ।
गण्डमालागलगण्डौ नाशयेन्नस्यकर्म्मणा ॥ ११ ॥
पल्लवैरर्कपूतीकस्नुहीकृतमालजातिकैः ।
उद्वर्त्तयेत् सगोमूत्रैः सर्वत्वग्दोषनाशनैः ॥ १२ ॥
वाकुचो सतिला भुक्ता वत्सरात् कुष्ठनाशनी ।
पथ्या भल्लातकी तैलगुडपिण्डी तु कुष्ठजित् ॥ १३ ॥
पूतीकवह्निरजनी त्रिफलाव्योषचूर्णयुक् ।
तक्रं गदाङ्कुरे पेयं भक्ष्या वा सगुडाऽभया ॥ १४ ॥
फलदार्व्वीविषाणान्तु क्वाथो धात्रीरसोऽथवा ।
पातव्यो रजनीकल्कः क्षौद्रात्क्षौद्रप्रमेहिणा ॥ १५ ॥
वासागर्भो व्याधिघातक्वाथ एरण्डतैलयुक् ।
वातशोणितहृत् पानात् पिप्पली स्यात् प्लीहहरी ॥१६॥
सेव्या जठरिणा कृष्णा स्नुहीरसबहुभाविता ।
पयो वा रुचदन्त्याग्निविडङ्गव्योषकल्कयुक् ॥ १७ ॥
ग्रन्थिकोषाभया कृष्णा विडङ्गाक्ता घृते स्थिता ।
मांसस्तक्रं यष्ठ्यम्बुः पाण्डुगुल्मकृमीन् हरेत् ॥ १८ ॥
फलत्रयामृता वासा तिक्तभूनिम्बजस्तथा ।
क्वाथः समाक्षिको हन्यात् पाण्डुरोगं सकामलं ॥ १९ ॥
रक्तपित्ती पिबेद्वासामाक्षुरसं ससितं मधु ।

वरीद्राक्षाबलायष्टीसाधितं वा पयः पृथक् ॥ २० ॥
वरी विदारी पथ्या च बलात्रयं सवासकं ।
खर्द्दूरामधुसर्पिर्भ्यामालिहेत् क्षयरोगवान् ॥ २१ ॥
पथ्याग्निमन्थकरञ्जार्कत्वक्सारं मधुसिन्धुमत् ।
समूत्रं विद्रधिं हन्ति परिपाकाय तन्नजित् ॥ २२ ॥
त्रिवृता जीवती दन्ती मञ्जिष्ठा शर्वरीद्वयं ।
तार्च्यजं निम्बपत्रञ्च लेपः शस्तो भगन्दरे ॥ २३ ॥
वृषघातरजश्चीलाचूर्णाजमोदसंयुता ।
वासोवर्त्तिर्व्रणे योज्या शोधनीगतिनाशनी ॥ २४ ॥
श्यामायष्टिनिशालोध्रपद्मकोत्पलचन्दनैः ।
समरीचैः शृतं तैलं क्षीरे स्याद्व्रणरोहणं ॥ २५ ॥
श्रीकार्पासदलैर्भञ्जफलोपलवणा निशा ।
तत्पिण्डीस्वेदनं ताम्रे सतैलं स्यात् क्षतौषधं ॥ २६ ॥
कुम्भीसारं पयोयुक्तं वह्निदग्धं व्रणे लिपेत् ।
तदेव नाशयेत्तैलकामारिकेलरजोहृतम् ॥ २७ ॥
बिल्वाजमोदसिन्धूत्थबिल्वात्वग्भिः समाभया ।
तक्रेणोष्णाम्बुना वाथ पीतातीसारनाशनी ॥ २८ ॥
बलाकातिविषाबिल्वविल्वमुस्तशृतं जलं ।
सामे पुराणेऽतीसारे सासृक्शूले च पाययेत् ॥ २९ ॥
अङ्गारदग्धं सुगतं सिन्धुसुखाम्बुना पिबेत् ।
शूलवानथ वा तद्वि सिन्धुहिंगुकणाभया ॥ ३० ॥
कटुरोहीत्कणातक्रलाजचूर्णं(१) मधुप्लुतं ।

१ कटुरोचोपकानक्रलाजचूर्णमिति ङ ।

वक्त्रच्छिद्रगतं वक्त्रे न्यस्तं तृष्णां विनाशयेत् ॥ ३१ ॥
पाठादार्वीजातिदलं द्राक्षामूलफलत्रयैः(१) ।
साधितं समधु क्वाथं कवलं मुखपाकहृत् ॥ ३२ ॥
कृष्णातिविषतिक्तेन्द्रदारुपाठापयोमुचां ।
क्वाथो मूत्रे स्मृतः क्षौद्री सर्वकण्ठगदापहः ॥ ३३ ॥
पथ्यागोक्षुरदुस्पर्शराजवृक्षशिलाभिदां ।
कषायः समधुः पीतो मूत्रकृच्छ्रं व्यपोहति ॥ ३४ ॥
वंशत्वग्वरुणक्वाथः शर्कराश्मविघातनः ।
आस्फोटक्वाथसक्षौद्रक्षीराशी श्लीपदी भवेत् ॥ ३५ ॥
मांसार्कत्वक्पयस्तैलं मधुसिक्ताश्च सैन्धवं ।
पादरोगं हरेत्सर्पिर्जालकुक्कुटजं तथा ॥ ३६ ॥
शुण्ठीसौवर्चलाहिङ्गुचूर्णं शुण्ठीरसैर्धृतम् ।
वजं हरेदथ क्वाथो विश्ववह्निसाधने ॥ ३७ ॥
सौवर्चलाग्निहिङ्गूनां सदीप्यानां रसैर्युतं ।
विडदीप्यकयुक्तं वा तक्रं गुल्मातुरः पिबेत् ॥ ३८ ॥
धात्रीपटोलमुद्गानां क्वाथः साज्यो विसर्पहा ।
शुण्ठीदारुवचाक्षीरक्वाथो मूत्रान्वितोऽपरः ॥ ३९ ॥
सव्योषायोरजःक्षारः फलक्वाथश्च शोथहृत् ।
गुडशिग्रुविडङ्गैश्च सैन्धवानां रजोयुतः ॥ ४० ॥
त्रिवृताफलकक्वाथः सगुडः स्याद्विरेचनः ।
वचाफलकषायोत्थं पयो वमनकृद्भवेत् ॥ ४१ ॥
त्रिफलायाः पलशतं पृथग्भृङ्गजभावितम् ।

---

१ द्राक्षाव्रतफलत्रयैरिति ख०, ड० च ।

विड्ङ्गं लोहचूर्णञ्च दशभागसमन्वितम् ॥ ४२ ॥
शतावरीगुडूच्यग्निपलानां शतविंशतिः(१)।
मध्वाज्यतिलजैर्लिह्याद्वलीपलितवर्ज्जितः ॥ ४३ ॥
शतमब्दं हि जीवेत सर्वरोगविवर्ज्जितः।
त्रिफला सर्वरोगघ्नी समधुः शर्करान्विता ॥ ४४ ॥
सितामधुघृतैर्युक्ता सकृष्णा त्रिफला तथा।
पथ्याचित्रकशुण्ठाश्च गुडूचीमुषलीरजः ॥ ४५ ॥
सगुडं भक्षितं रोगहरं त्रिशतवर्षकृत्।
किञ्चिच्चूर्णं जवापुष्पं पिण्डितं विसृजेज्जले ॥ ४६ ॥
तैलं भवेद् घृताकारं किञ्चिच्चूर्णं जलान्वितं।
धूपार्थं दृश्यते चित्रं हृषदंशजरायुना ॥ ४७ ॥
पुनर्म्माक्षिकधूपेन दृश्यते तद्यथा पुरा।
कर्पूरजलकाभेकतैलं(२) पाटलिमूलयुक् ॥ ४८ ॥
पिष्ट्वा लिप्य पदे द्वे च चरेदङ्गारके नरः।
तृणोत्थानादिकं व्यूह्य दर्शयन्वै कुतूहलं ॥ ४९ ॥
विषग्रहरुजध्वंसमुद्रनन्तं च कामिकं।
तस्मै षट्कर्म्मकं प्रोक्तं सिद्धिद्वयसमाश्रयं ॥ ५० ॥
मन्त्रध्यानौषधिकथामुद्रेज्या यत्र सुष्टयः।
चतुर्व्वर्गफलं प्रोक्तं यः पठेत्स दिवं व्रजेत् ॥ ५१ ॥

इत्याग्नेये महापुराणे नानारोगहराण्यौषधानि नाम
द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥]

---

१ पञ्चविंशतिरिति अ०, ड० च।

२ कर्पूरजङ्कातैलमिति च०। कर्पूरजामुकातैलमिति अ०।

## अथ त्र्यशीत्यधिकद्विशततमोऽध्यायः ।

——:○:——

मन्त्ररूपौषधकथनं ।

धन्वन्तरिरुवाच । आयुरारोग्यकर्त्तार ओंकाराद्यांश्च नाकदाः ।
ओंकारः परमो मन्त्रस्तं जप्त्वा चामरो भवेत् ॥ १ ॥
गायत्री परमो मन्त्रस्तं जप्त्वा भुक्तिमुक्तिभाक् ।
ओं नमो नारायणाय मन्त्रः सर्वार्थसाधकः ॥ २ ॥
ओं नमो भगवते वासुदेवाय सर्वदः ।
ओं ह्रूं नमो विष्णवे मन्त्रोयञ्चौषधं परं ॥ ३ ॥
अनेन देवा ह्यसुराः सश्रियो नीरुजोऽभवन् ।
भूतानामुपकारश्च तथा धर्मो महौषधम् ॥ ४ ॥
धर्म्मः सहर्म्मकर्म्मी एतैर्धर्म्मैश्च निर्म्मलः ।
श्रीदः श्रीशः श्रीनिवासः श्रीधरः श्रीनिकेतनः ॥ ५ ॥
श्रियः पतिः श्रीपरम एतैः श्रियमवाप्नुयात् ।
कामी कामप्रदः कामः कामपालस्तथा हरिः ॥ ६ ॥
आनन्दो माधवश्चैव नाम कामाय वै हरेः ।
रामः परशुरामश्च नृसिंहो विष्णुरेव च ॥ ७ ॥
त्रिविक्रमश्च नामानि जप्तव्यानि जिगीषुभिः ।
विद्यामभ्यस्यतां नित्यं जप्तव्यः पुरुषोत्तमः ॥ ८ ॥
दामोदरो बन्धहरः पुष्कराक्षोऽक्षिरोगनुत् ।
हृषीकेशो भयहरो जपेदौषधकर्म्मणि ॥ ९ ॥

अच्युतञ्चामृतं मन्त्रं सङ्ग्रामे चापराजितः।
जलतारे नारसिंहं पूर्व्वादौ क्षेमकामवान्॥ १०॥
चक्रिणञ्चदिनञ्चैव शार्ङ्गिणं खड्गिनं स्मरेत्।
नारायणं सर्वकाले नृसिंहोऽखिलभीतिनुत्॥ ११॥
गरुड़ध्वजश्च विषहृत् वासुदेवं सदा जपेत्।
धान्यादिस्थापने स्वप्ने अनन्ताच्युतमीरयेत्॥ १२॥
नारायणञ्च दुःस्वप्ने दाहादौ जलशायिनं।
हयग्रीवञ्च विद्यार्थी जगत्सूतिं सुतासये।
बलभद्रं शौरकार्य्ये(१) एकं नामार्थसाधकम्(२)॥ १३॥

इत्याग्नेये महापुराणे मन्त्ररूपौषधकथनं नाम त्र्यशी-
त्यधिकद्विशततमोऽध्यायः।

---

## अथ चतुरशीत्यधिकद्विशततमोऽध्यायः।

—:○:—

मृतसञ्जीवनीकरसिद्धयोगः।

धन्वन्तरिरुवाच। सिद्धयोगान् पुनर्वक्ष्ये मृतसञ्जीवनीकरान्।
आत्रेयभावितान् दिव्यान् सर्वव्याधिविमर्दनान्(३)॥ १॥
आत्रेय उवाच। विल्वादिपञ्चमूलस्य क्वाथः स्यादातिके ज्वरे।
पाचनं पिप्पलीमूलं गुडूची विश्वजोऽथ वा॥ २॥

---

१ शौरकार्य्ये इति ग०।
२ एकनामाथ सार्थकमिति ख०, ज० च।
३ सर्व्वव्याधिविनाशकानिति ख०।

आमलक्यभया कृष्णा वह्निः सर्वज्वरान्तकः।
बिल्वाग्निमन्थश्योनाककाश्मर्यः पाटला स्थिरा॥ ३॥
त्रिकण्टकं पृश्निपर्णी बृहती कण्टकारिका।
ज्वराविपाकपार्श्वार्त्तिकाशनुत् कुशमूलकम्॥ ४॥
गुडूची पर्पटी मुस्तं किरातं विश्वभेषजम्।
वातपित्तज्वरे देयं पञ्चभद्रमिदं स्मृतम्॥ ५॥
त्रिवृद्विशालकटुकात्रिफलारग्वधैः कृतः।
संस्कारी भेदनक्वाथः पेयः सर्वज्वरापहः॥ ६॥
देवदारुबलावासात्रिफलाव्योषपद्मकैः(१)।
सविडङ्गैः सितातुल्यं तच्चूर्णं पञ्चकासजित्॥ ७॥
दशमूलीशटीरास्नापिप्पलीबिल्वपौष्करैः।
शृङ्गीतामलकीभार्गीगुडूचीनागवल्लिभिः॥ ८॥
यवागूं विधिना सिद्धं कषायं वा पिबेन्नरः।
कासहृद्ग्रहणीपार्श्वहिक्काश्वासप्रशान्तये॥ ९॥
मधुकं मधुना युक्तं पिप्पलीं शर्करान्वितां।
नागरं गुड़संयुक्तं हिक्काघ्नं लावणत्रयम्॥ १०॥
कारव्यजाजीमरिचं द्राक्षा वृक्षाम्लदाड़िमम्।
सौवर्चलं गुड़ं क्षौद्रं सर्वारोचननाशनम्॥ ११॥
शृङ्गवेररसञ्चैव मधुना सह पाययेत्।
स्वरविश्वासकासघ्नं प्रतिश्यायकफान्तकम्॥ १२॥
वटं शृङ्गी शिलालोध्रदाड़िमं मधुकं मधु।
पिबेत् तण्डुलतोयेन छर्दितृष्णानिवारणम्॥ १३॥

१ देवदारुबलारास्नात्रिफलाव्योषपद्मकैरिति ख०।

गुडूची वासकं लोध्रं पिप्पलीक्षौद्रसंयुतम् ।
कफान्वितञ्जयेद्रक्तं तृष्णाकासज्वरापहम् ॥ १४ ॥
वासकस्य रसस्तद्वत् समधुस्ताम्रजो रसः ।
शिरीषपुष्पसुरसभावितं मरिचं हितं ॥ १५ ॥
सर्व्वार्त्तिनुत्प्रसूरोऽथ पित्तमुक् तण्डुलीयकं ।
निर्गुण्डी शारिवा शेलु रक्तोलय(१) विषापहः ॥ १६ ॥
महौषधं स्मृतां चुद्रां पुष्करं(२) ग्रन्थिकोद्भवं(३) ।
पिबेत् कषायुतं क्वाथं मूर्च्छायाञ्च मदेषु च ॥ १७ ॥
हिङ्गुसौवर्च्चलव्योषैर्द्विपलांशैर्घृताढकं ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनं ॥ १८ ॥
शङ्खपुष्पीवचाकुष्ठैः सिद्धं ब्राह्मीरसैर्युतं ।
पुराणं हन्त्यपस्मारं सोन्मादं मेध्यमुत्तमं ॥ १९ ॥
पञ्चगव्यं घृतं तद्वत् कुष्ठनुच्चाभयायुतं ।
पटोलत्रिफलानिम्बगुडुचीधावणीवृषैः ॥ २० ॥
सकरञ्जैर्घृतं सिद्धं कुष्ठनुद्वज्रकं स्मृतं ।
निम्बं पटोलं व्याघ्री च गुडूची वासकं तथा ॥ २१ ॥
कुर्य्याद्दशपलान् भागान् एकैकस्य सकुट्टितान् ।
जलद्रोणे विपक्तव्यं यावत्पादावशेषितं ॥ २२ ॥
घृतप्रस्थम्पचेत्तेन त्रिफलागर्भसंयुतं(४) ।
पञ्चतिक्तमिति ख्यातं सर्पिः कुष्ठविनाशनं ॥ २३ ॥
अशीतिं वातजान्रोगान् चत्वारिंशच्च पैत्तिकान् ।

---

१ रक्तोलच इति ख०, ज० च । ३ ग्रन्थिकोद्भवमिति ख० ।
२ पुष्करमिति ज० । ४ त्रिफलाशर्करायुतमिति ख०, ज०ग ।

विंशतिं श्लैष्मिकान् कासपीनसार्शोव्रणादिकान् ॥ २४ ॥
हन्यन्यान् योगराजोऽयं यथार्कस्तिमिरं खलु ।
त्रिफलायाः कषायेण भृङ्गराजरसेन च ॥ २५ ॥
व्रणप्रक्षालनं कुर्यादुपदंशप्रशान्तये ।
पटोलदलचूर्णेन दाडिमत्वग्रजोऽथ वा ॥ २६ ॥
गुण्ठयेद्व गजेनापि(१) त्रिफलाचूर्णकेन च ।
त्रिफलायोरजोयष्टिमार्कवोत्पलमारिचैः ॥ २७ ॥
ससैन्धवैः पचेत्तैलमभ्यङ्गाच्छर्दिकापहं ।
सक्षीरान् मार्कवरसान् द्विप्रस्थमधुकोत्पलैः ॥ २८ ॥
पचेत्तु तैलकुडवं तन्नस्यं पलितापहं ।
निम्बम्पटोलं त्रिफला गुडूची खदिरं वृषं ॥ २९ ॥
भूनिम्बपाठात्रिफलागुडूचीरक्तचन्दनं ।
योगद्वयं ज्वरं हन्ति कुष्ठविस्फोटकादिकं ॥ ३० ॥
पटोलामृतभूनिम्बवासारिष्टकपर्पटैः ।
खदिराब्दयुतैः क्वाथो विस्फोटज्वरशान्तिकृत् ॥ ३१ ॥
दशमूली च्छिन्नरुहा पथ्या दारु पुनर्नवा ।
ज्वरविद्रधिशोथेषु शिग्रु विश्वजिता हिताः ॥ ३२ ॥
मधूकं निम्बपत्राणि लेपः स्याद्व्रणशोधनः ।
त्रिफला खदिरो दार्वी न्यग्रोधातिबलाकुशाः ॥ ३३ ॥
निम्बमूलकपत्राणां कषायाः शोधने हिताः ।
करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणक्रिमीन् ॥ ३४ ॥

१ गुण्ठयेद्वजेनापीति ख०. ग०. घ।

धातकीचन्दनबलासमङ्गामधुकोत्पलैः ।
दार्वीमेदोन्वितैर्लेपः ससर्पिर्व्रणरोपणः ॥ ३५ ॥
गुग्गुलुस्त्रिफलाव्योषसमांशैर्घृतयोगतः ।
नाडी दुष्टव्रणं शूलभगन्दरमुखं हरेत् ॥ ३६ ॥
हरितकीं मूत्रसिद्धां सतैललवणान्विताम् ।
प्रातः प्रातश्च सेवेत कफवातामयापहाम्(१) ॥ ३७ ॥
त्रिकटुत्रिफलाक्वाथं(२) सक्षारलवणं पिबेत् ।
कफवातात्मकेष्वेव विरेकः कफहृद्भिनुत् ॥ ३८ ॥
पिप्पलीपिप्पलीमूलवचाचित्रकनागरैः ।
क्वाथितं वा पिबेत्पेयमामवातविनाशनम् ॥ ३९ ॥
रास्नां गुडूचीमेरण्डदेवदारुमहौषधं ।
पिबेत् सर्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥ ४० ॥
दशमूलकषायं वा पिबेद्वा नागराम्भसा ।
शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः ॥ ४१ ॥
सामवातकटीशूलपाचनो रुक्प्रणाशनः ।
समूलपत्रशाखायाः प्रसारण्याश्च तैलकं ॥ ४२ ॥
गुडूच्याः स्वरसः कल्कः चूर्णं वा क्वाथमेव च ।
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ ४३ ॥
पिप्पली वर्द्धमानं वा सेव्यं पथ्या गुडेन वा ।
पटोलत्रिफलातीव्रकटुकामृतसाधितं(३) ॥ ४४ ॥
पक्वं पीत्वा जयत्याशु सदाहं वातशोणितं ।

---

१ कफवातविनाशिनीमिति ञ० ।
२ त्रिकटुत्रिफलाकुष्ठमिति ञ० ।
३ पटोलत्रिफलाभीरुकटुकामृत-साधितमिति ख०, छ०, ञ० च ।

गुग्गुलं क्रोष्टुशीर्षे(१) तु गुडूची त्रिफलाम्भसा ॥ ४५ ॥
बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ।
सहिङ्गु लवणैः पीतं सद्यो वातरुजापहम् ॥ ४६ ॥
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ।
पिप्पली चित्रकं शुण्ठी त्रिफला त्रिवृता वचा ॥ ४७ ॥
द्वौ क्षारौ शाङ्खला दन्ती स्वर्णक्षीरी विषाणिका ।
कोलप्रमाणां गुटिकां पिबेत् सौवीरकायुताम् ॥ ४८ ॥
शोथाश्वपाके त्रिवृता प्रवृद्धे चोदरादिके ।
क्षीरं शोथहरं दारु वर्षाभूर्नागरैः शुभम् ॥ ४९ ॥
सेकस्तथार्कवर्षाभूनिम्बक्वाथेन शोथजित् ।
व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि ॥ ५० ॥
साधितं पिबतः सर्पिः पतत्यर्शो न संशयः ।
बिल्वकर्सेमावनिगुग्गुलोसाधितं चापि लावणम् ॥ ५१ ॥
विडङ्गानलसिन्धूत्थरास्नाग्रन्थारदारुभिः ।
तैलञ्चतुर्गुणं सिद्धं कटुद्रव्यं जलेन वा ॥ ५२ ॥
गण्डमालापहं तैलमभ्यङ्गात् गलगण्डनुत् ।
शटीकुनागबलयक्वाथः क्षीररसे युतम् ॥ ५३ ॥
पयस्यापिप्पलीवासाकल्कं सिद्धं क्षये हितम् ।
वचाविडभयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकान् ॥ ५४ ॥
द्वित्रिषट्चतुरेकांशसमपञ्चाशिकाः क्रमात् ।
चूर्णं पीतं हन्ति गुल्मं उदरं शूलकासनुत् ॥ ५५ ॥
पाठानिकुम्भत्रिकटुत्रिफलाग्निषु साधितम् ।

१ क्रोष्टुशीर्षेऽपीति ख० ।

मूत्रेण चूर्णगुटिका गुल्मप्लीहादिमर्द्दनी ॥ ५६ ॥
वासानिम्बपटोलानि त्रिफला वातपित्तनुत् (१)।
लिह्यात् क्षौद्रेण विड़ङ्गं चूर्णं क्रमिविनाशनम् ॥ ५७ ॥
विड़ङ्गसैन्धवक्षारमूत्रेनापि हरीतकी।
शल्लकीवदरीजम्बुपियालाम्रार्जुनत्वचः ॥ ५८ ॥
पीताः क्षीरेण मध्वक्ताः पृथक्शोणितवारणाः।
विल्वाम्रधातकीपाठाशुण्ठीमोचरसाः समाः ॥ ५९ ॥
पीता रुन्धन्त्यतीसारं गुड़तक्रेण दुर्जयम्।
चाङ्गेरीकोलदध्यम्बुनागरक्षारसंयुतम् ॥ ६० ॥
घृतयुक्क्वाथितं पेयं गुदभ्रंसे रुजापहम्।
विड़ङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम् ॥ ६१ ॥
मरीचेन समायुक्तं शोथातीसारनाशनम्।
शर्करासिन्धुशुण्ठीभिः कृष्णामधुगुड़ेन वा ॥ ६२ ॥
द्वे द्वे खादेद्धरीतक्यौ जीवेद्वर्षशतं सुखी।
त्रिफला पिप्पलीयुक्ता समध्वाज्या तथैव सा ॥ ६३ ॥
चूर्णमामलकं तेन सुरसेन तु भावितम्।
मध्वाज्यशर्करायुक्तं लिढ्वा क्षीरशः पयः पिवेत् ॥ ६४ ॥
माषपिप्पलिशालीनां यवगोधूमयोस्तथा।
चूर्णभागैः समांशैश्च पचेत् पिप्पलिकां शुभां ॥ ६५ ॥
तां भक्षयित्वा च पिवेत् शर्करामधुरं पयः।
नवघटकवज्ज्ञभिद् दशवारान् स्त्रियं भुवम् ॥ ६६ ॥
समङ्गाधातकीपुष्पलोध्रनीलोत्पलानि च।

१ तिफला वातपित्तनुद्दिति ख॰, अ॰ च।

एतत् क्षीरेण हातव्यं स्त्रीणां प्रदरनाशनं ॥ ६७ ॥
बीजपूरकमूलानि मधुकं श्वेतचन्दनं।
पद्मोत्पलस्य मूलानि मधुकं शर्करातिलान् ॥ ६८ ॥
द्रवमाणेषु गर्भेषु गर्भस्थापनमुत्तमं।
देवदारु नभः कुष्ठं(१) नलदं विश्वभेषजं ॥६९ ॥
लेपः काञ्जिकसम्पिष्टस्तैलयुक्तः शिरोर्त्तिनुत्।
वस्त्रपूतं क्षिपेत् कोष्णं शिग्रूत्थं कर्णशूलनुत् ॥ ७० ॥
लशुनार्द्रकशिग्रूणां कदल्या वा रसः पृथक्।
बलाशतावरीरास्नामृताः सैरीयकैः पिबेत् ॥ ७१ ॥
त्रिफलासहितं सर्पिस्तिमिरघ्नमनुत्तमं।
त्रिफलाव्योषसिन्धूत्थैर्घृतं सिद्धं पिबेन्नरः ॥ ७२ ॥
चाक्षुष्यभेदनं हृद्यं(२) दीपनं कफरोगनुत्।
नीलोत्पलस्य किञ्जल्कं गोशकृद्रससंयुतं ॥ ७३ ॥
गुटिकाञ्जनमेतत् स्यात् दिनरात्र्यन्धयोर्हितं।
यष्टीमधुवचाकृष्णाबीजानां कुटजस्य च ॥ ७४ ॥
कल्केनालोड्य निम्बस्य कषायो वमनाय सः।
स्निग्धस्विन्नशरीराय प्रदातव्यं विरेचनम् ॥ ७५ ॥
अन्यथा योजितं कुर्य्यात् मन्दाग्निं गौरवारुचिं।
पथ्यासैन्धवकृष्णानां(३) चूर्णमुष्णाम्भसा पिबेत् ॥ ७६ ॥
विरेकः सर्व्वरोगघ्नः श्रेष्ठो नाराचसंज्ञकः।

---

१ कुष्ठमिति ख०।
२ कुष्ठमिति ख०।
३ पथ्यासैन्धवकुष्ठानामिति ख०।

सिद्धयोगा मुनिभ्यो ये आत्रेयेण प्रदर्शिताः ।
सर्वरोगहराः सर्वे योगाग्र्याः सुश्रुतेन हि ॥ ७७ ॥

इत्याग्नेये महापुराणे मृतसञ्जीवनीकरसिद्धयोगो नाम चतुरशीत्यधिकद्विशततमोऽध्यायः ।

---

## अथ पञ्चाशीत्यधिकद्विशततमोऽध्यायः ।

कल्पसागरः ।

धन्वन्तरिरुवाच । कल्पान्मृत्युञ्जयान्वक्ष्ये ह्यायुर्दान्रोगमर्द्दनान् ।
त्रिशतो रोगहा सेव्या मध्वाज्यत्रिफलामृता ॥ १ ॥
पलं पलार्द्धं कर्षं वा त्रिफलां सकलां तथा ।
विल्वतैलस्य नस्यञ्च मासं पञ्चशती कविः ॥ २ ॥
रोगापमृत्युवलिजित् तिलं(१) भल्लातकं तथा ।
पञ्चाङ्गं वाकुचीचूर्णं षण्मासं खदिरोदकैः ॥ ३ ॥
माघैः कुष्ठञ्जयेत् सेव्यं चूर्णं नीलकुरण्टजम् ।
क्षीरेण मधुना वापि शतायुः खण्डदुग्धभुक् ॥ ४ ॥
मध्वाज्यशुण्ठीं संसेव्य पलं प्रातः स मृत्युजित् ।
वलीपलितजिज्जीवेद्ब्राह्मकीचूर्णदुग्धपाः ॥ ५ ॥
उच्चटामधुना कर्षं पयःपा मृत्युजिन्नरः ।
मध्वाज्यैः पयसा वापि निर्गुण्डी रोगमृत्युजित् ॥ ६ ॥

---

१ तैलमिति ख० ।

पलाशतैलं कर्षैकं षण्मासं मधुना पिबेत् ।
दुग्धभोजी पञ्चशती सहस्रायुर्भवेन्नरः ॥ ७ ॥
ज्योतिष्मतीपत्ररसं पयसा त्रिफलां पिबेत् ।
मधुनाज्यन्ततस्त्वद्यात् शतावर्य्या रजः पलं ॥ ८ ॥
क्षौद्राज्यैः पयसा वापि निर्गुण्डी रोगमृत्युजित् ।
पञ्चाङ्गं निम्बचूर्णस्य खदिरक्वाथभावितं ॥ ९ ॥
कर्षं भृङ्गरसेनापि रोगजिच्चामरो (१) भवेत् ।
रुदन्तिकाज्यमधुभुक् दुग्धभोजी च मृत्युजित् ॥ १० ॥
कर्षचूर्णं हरीतक्या भावितं भृङ्गराड्रसैः ।
घृतेन मधुना सेव्य त्रिशतायुश्च रोगजित् ॥ ११ ॥
वाराहिका भृङ्गरसं लोहचूर्णं शतावरी ।
साज्यं कर्षं(२) पञ्चशतो कार्त्तचूर्णं शतावरी ॥ १२ ॥
भावितं भृङ्गराजेन मध्वाज्यस्त्रिशती भवेत् ।
ताम्रं मृतं(३) मृततुल्यं(४) गन्धकञ्च कुमारिका ॥ १३ ॥
रसैर्विमृज्य द्वे गुञ्जे साज्यं पञ्चशताब्दवान् ।
अश्वगन्धा पलं तैलं साज्यं खण्डं शताब्दवान् ॥ १४ ॥
पलम्पुनर्नवाचूर्णं मध्वाज्यपयसा पिबन् ।
अशोकचूर्णस्य पलं मध्वाज्यं पयसार्त्तिनुत् ॥ १५ ॥
तिलस्य तैलं समधु नस्यात् कृष्णकचः शती ।
कर्षमन्नं समध्वाज्यं शतायुः पयसा पिबन् ॥ १६ ॥

---

१ रोगमृत्युचामरो भवेदिति ख० ।　　२ ताम्रामृतमिति ख० ।
३ साज्यं कर्षमिति ख० ।　　४ मृततुल्यमिति ज०, ञ० च ।

अभयं सगुडञ्चाश्ना घृतेन मधुरादिभिः।
दुग्धान्नभुक् तथाकेशोऽरोगी पञ्चशताब्दवान् ॥ १७ ॥
पलङ्कुआश्विकाचूर्णं मध्वाज्यपयसा पिबन्।
मासं दुग्धान्नभोजी च सहस्रायुर्विरोगवान् ॥ १८ ॥
शालूकचूर्णं भृङ्गाज्यं समध्वाज्यं शताब्दकृत्।
कटुतुम्बीतैलनस्यं कर्षं शतद्वयाब्दवान् ॥ १९ ॥
त्रिफला पिप्पली शुण्ठी सेविता त्रिशताब्दकृत्।
शतावर्य्याः पूर्वयोगः सहस्रायुर्बलातिकृत् ॥ २० ॥
चित्रकेन तथा पूर्वस्तथा शुण्ठीविडङ्गतः।
लौहेन भृङ्गराजेन बलया निम्बपञ्चकैः ॥ २१ ॥
खदिरेण च निर्गुण्ड्या कण्टकार्य्याथ वासकात्।
वर्षाभुवा तद्रसैर्वा भावितो वटिकाकृतः ॥ २२ ॥
चूर्णाहृतैर्वा मधुना गुडाद्यैर्वारिणा तथा।
ॐ हूं स इतिमन्त्रेण मन्त्रितो योगराजकः ॥ २३ ॥
मृतसञ्जीवनीकल्पो रोगमृत्युक्षयो भवेत्।
सुरासुरैश्च मुनिभिः सेविताः कल्पसागराः।
गजायुर्वेदं प्रोवाच पालकाप्योऽङ्गराजकं ॥ २४ ॥

इत्याग्नेये महापुराणे कल्पसागरो नाम पञ्चाशीत्यधिक-
द्विशततमोऽध्यायः।

---

## अथ षडशीत्यधिकद्विशततमोऽध्यायः ।

---000---

### गजचिकित्सा ।

पालकाप्य उवाच(१)। गजलक्ष्म चिकित्साञ्च लोमपाद वदामि ते ।
दीर्घहस्ता महोच्छ्वासाः प्रशस्तास्ते सहिष्णवः ॥ १ ॥
विंशत्यष्टादशनखाः शीतकालमदाश्च ये ।
दक्षिणश्चोन्नतन्दन्तं बृंहितं जलदोपमं ॥ २ ॥
कर्णौ च विपुलौ येषां सूक्ष्मविन्दूच्चितत्वचो ।
ते धार्य्या न तथा धार्य्या वामना ये च सङ्कुशाः(२) ॥३॥
हस्तिन्यः पार्श्वगर्भिण्यो ये च मूढा मतङ्गजाः ।
वर्णः सत्वं बलं रूपं कान्तिः संहननञ्जवः ॥ ४ ॥
समस्थितो गजश्रेष्ठः सङ्ग्रामेऽरीञ्जयेत्स च ।
कुञ्जराः परमा शोभा शिविरस्य बलस्य च ॥ ५ ॥
आयत्तं कुञ्जरैश्चैव विजयं पृथिवीक्षितां ।
पाकलेषु च सर्वेषु कर्त्तव्यमनुवासनं ॥ ६ ॥
घृततैलपरीपाकं स्नानं वातविवर्जितं ।
स्कन्धेषु च क्रिया कार्य्या तथा पालकवत्नृपाः ॥ ७ ॥
गोमूत्रं पाण्डुरोगेषु रजनीभ्यां घृतन्द्विज ।
आनाहे तैलसिक्तस्य निषेकस्तस्य शस्यते ॥ ८ ॥
लवणैः पञ्चभिर्मिश्रा प्रतिपानाय वारुणी ।

१ पालकाप्य उवाचेति ख० । २ सङ्कुशा इति ख० ।

विडङ्गत्रिफलाव्योषसैन्धवैः कवलान् कृतान् ॥ ९ ॥
मूर्च्छासु भोजयेन्नागं श्वोद्गन्तोयञ्च पाययेत्।
अभ्यङ्गः शिरसः शूले नस्यञ्चैव प्रशस्यते ॥ १० ॥
नागानां स्नेहपुटकः पादरोगानुपक्रमेत्।
पश्चात् कल्ककषायेण शोधनञ्च विधीयते ॥ ११ ॥
शिखितित्तिरिलावानां पिप्पलीमरिचान्वितैः।
रसैः सम्भोजयेन्नागं वेपथुर्यस्य जायते ॥ १२ ॥
बालविल्वं तथा लोध्रं धातकी सितया सह।
अतीसारविनाशाय पिण्डीं भुञ्जीत कुञ्जरः ॥ १३ ॥
नस्यं करग्रहे देयं घृतं लवणसंयुतम्।
मागधीनागराजाजीयवागूर्मुस्तसाधिता ॥ १४ ॥
उत्कर्णके तु दातव्या वाराहञ्च तथा रसम्।
दशमूलकुलत्थाम्लकाकमाचीविपाचितम् ॥ १५ ॥
तैलमूषणसंयुक्तं गलग्रहगदापहम्।
अष्टभिर्लवणैः पिष्टैः प्रसन्नाः पाययेद्घृतम् ॥ १६ ॥
मूत्रभङ्गेऽथ वा वीजं कथितं त्रपुषस्य च।
त्वग्दोषेषु पिबेन्निम्बं वृषं वा कथितं द्विपः ॥ १७ ॥
गवां मूत्रं विडङ्गानि क्रमिकोष्ठेषु शस्यते।
शृङ्गवेरकणाद्राक्षाशर्कराभिः शृतं पयः ॥ १८ ॥
क्षतक्षयकरं पानं तथा मांसरसः शुभः।
मुद्गौदनं व्योषयुतमरुचौ तु प्रशस्यते ॥ १९ ॥
त्रिवृत्शोभाग्निदन्त्यर्कश्यामाचीरेभपिप्पली।
एतैर्गुल्महरः स्नेहः कृतश्चैव तथापरः ॥२० ॥

भेदनद्रावणाभ्यङ्गैस्तेहपानानुवासनैः।
सर्वानेव समुत्पन्नान् विद्रधान् समुपाहरेत्॥ २१॥
यष्टिकं मुद्गसूपेन(१) शारदेन तथा पिबेत्।
बालबिल्वैस्तथा लेपः कटुरोगेषु शस्यते॥ २२॥
विडङ्गेन्द्रयवौ हिङ्गु सरलं रजनीद्वयम्।
पूर्वाह्णे पाययेत् पिण्डान् सर्वशूलोपशान्तये॥ २३॥
प्रधानभोजने तेषां यष्टिकश्रीहिशालयः।
मध्यमौ यवगोधूमौ शेषा दन्तिनि चाधमाः॥ २४॥
यवश्चैव तथैवेक्षुर्नागानां बलवर्द्धनः।
नागानां यवसं शुष्कं तथा धातुप्रकोपणं॥ २५॥
मदक्षीणस्य नागस्य पयःपानं प्रशस्यते।
दीपनीयैस्तथा द्रव्यैः शृतो मांसरसः शुभः॥ २६॥
वायसः कुक्कुटश्चोभौ काकोलूककुलौ हरिः।
भवेत् क्षौद्रेण संयुक्तः पिण्डो युद्धे महापदि(२)॥ २७॥
कटुमत्स्यविडङ्गानि क्षारः कोषातकी पयः।
हरिद्रा चेति धूपोऽयं कुञ्जरस्य जयावहः॥ २८॥
पिप्पलीतण्डुलास्तैलं माध्वीकं माक्षिकम् तथा।
नेत्रयोः परिषेकोऽयं दीपनीयः प्रशस्यते॥ २९॥
पुरीषघटकायाश्च तथा पारावतस्य च।
क्षीरवृक्षकरीषाश्च(३) प्रसन्नायेष्टमञ्जनं॥ ३०॥

---

१ मुद्गमूपेणेति ख०, ग० च।
२ महाय चेति ख०।
३ क्षीरवृक्षकरीराश्चेति ख०।

अनेनाञ्जितनेत्रस्तु करोति कदनं रणे ।
उत्पलानि च नीलानि सुस्तन्तगरमेव च ॥ ३१ ॥
तण्डुलोदकपिष्टानि नेत्रनिर्वापनं परम् ।
नखवृद्धौ नखच्छेदस्तैलसेकश्च मास्यपि ॥ ३२ ॥
शय्यास्थानं भवेच्चास्य करीषैः पांशुभिस्तथा ।
शरन्निदाघयोः सेकः सर्पिषा च तदिष्यते ॥ ३३ ॥

इत्याग्नेये महापुराणे गजचिकित्सा नाम षड़शीत्यधिक-द्विशततमोऽध्यायः ।

---

## अथ सप्ताशीत्यधिकद्विशततमोऽध्यायः ।

---

अश्ववाहनसारः ।

धन्वन्तरिरुवाच । अश्ववाहनसारञ्च वक्ष्ये चाश्वचिकित्सनम् ।
वाजिनां संग्रहः कार्य्यो धर्म्मकामार्थसिद्धये ॥ १ ॥
अश्विनी श्रवणं हस्तं उत्तरात्रितयन्तथा ।
नक्षत्राणि प्रशस्तानि हयानामादिवाहने ॥ २ ॥
हेमन्तः शिशिरश्चैव वसन्तश्चाश्ववाहने ।
ग्रीष्मशरदि वर्षासु निषिद्धं वाहनं हये ॥ ३ ॥
तीक्ष्णैश्च परैर्दण्डैरदेशे न च ताडयेत् ।
कीलास्थिसंकुले चैव विषमे कण्टकान्विते ॥ ४ ॥

वालुकापङ्कसंच्छन्ने, गर्त्तागर्त्तप्रदूषिते ।
अचिन्तज्ञो विनोपायैर्वाहनं कुरुते तु यः ॥ ५ ॥
स वाह्यते हयेनैव पृष्ठस्थः कटिकां विना(१) ।
छन्दं विज्ञापयेत् कोपि सुकृती धीमतां वरः ॥ ६ ॥
अभ्यासादभियोगाच्च विनाशास्त्रं स्ववाहकः ।
स्नातस्य प्राङ्मुखस्याथ देवान् वपुषि योजयेत् ॥ ७ ॥
प्रणवादिनमोन्तेन स्ववीजेन यथाक्रमम् ।
ब्रह्मा चित्ते बले विष्णुर्वैनतेयः पराक्रमे ॥ ८ ॥
पार्श्वे रुद्रा गुरुर्बुद्धौ विश्वेदेवाश्च मर्मसु ।
दृगावर्त्ते दृगीन्द्वर्कौ कर्णयोरश्विनौ तथा ॥ ९ ॥
जठरेऽग्निः स्वधा स्वेदे वाग्जिह्वायां जवेऽनिलः ।
पृष्ठतो नाकपृष्ठस्तु खुराग्रे सर्वपर्वताः ॥ १० ॥
ताराश्च रोमकूपेषु हृदि चान्द्रमसी कला ।
तेजस्यग्नीरतिः श्रोण्यां ललाटे च जगत्पतिः ॥ ११ ॥
ग्रहाश्च हेषिते चैव तथैवोरसि वासुकिः ।
उपोषितोऽर्च्चयेत् सादी हयं दक्षश्रुतौ जपेत् ॥ १२ ॥
हय गन्धर्वराजस्त्वं शृणुष्व वचनं मम ।
गन्धर्वकुलजातस्त्वं माभूस्त्वं कुलदूषकः ॥ १३ ॥
द्विजानां सत्यवाक्येन सोमस्य गरुडस्य च ।
रुद्रस्य वरुणस्यैव पवनस्य बलेन च ॥ १४ ॥
हुताशनस्य दीप्त्या च स्मर जातिं तुरङ्गम ।
स्मर राजेन्द्रपुत्रस्त्वं सत्यवाक्यमनुस्मर ॥ १५ ॥

---

१ कटिकां विनेति क०, ख० च ।

स्मर त्वं वारुणीं कन्यां स्मर त्वं कौस्तुभं मणिं ।
क्षीरोदसागरे चैव मथ्यमाने सुरासुरैः ॥ १६ ॥
तत्र देवकुले जातः स्ववाक्यं परिपालय ।
कुले जातस्त्वमश्वानां मित्रं मे भव शाश्वतम् ॥ १७ ॥
शृणु मित्र त्वमेतच्च सिद्धो मे भव वाहन ।
विजयं रक्ष माञ्चैव समरे सिद्धिमावह ॥ १८ ॥
तव पृष्ठं समारुह्य हता दैत्याः सुरैः पुरा ।
अधुना त्वां समारुह्य जेष्यामि रिपुवाहिनीं ॥ १९ ॥
कर्णजापन्ततः कृत्वा विमुह्य च तथा ष्यरीन्(१) ।
पर्य्यानयेद्धयं सादी वाहयेद्युद्धतो जयः ॥ २० ॥
सञ्जाताः स्वशरीरेण(२) दोषाः प्रायेण वाजिनां ।
हन्यास्तेऽतिप्रयत्नेन गुणाः सादिवरैः पुनः ॥ २१ ॥
सहजा इव दृश्यन्ते गुणाः सादिवरोद्भवाः ।
नाशयन्ति गुणानन्ये सादिनः सहजानपि ॥ २२ ॥
गुणानेको विजानाति वेत्ति दोषांस्तथाऽपरः ।
धन्यो धीमान् द्वयं वेत्ति नोभयं वेत्ति मन्दधीः ॥ २३ ॥
अकर्म्मज्ञोऽनुपायज्ञो वेगासक्तोऽतिकोपनः ।
घनदण्डरतिश्छिद्रे यः समोपि न शस्यते ॥ २४ ॥
उपायज्ञोऽथ चित्तज्ञो विशुद्धो दोषनाशनः ।
गुणार्ज्जनपरो नित्यं सर्वकर्म्मविशारदः ॥ २५ ॥
प्रयत्नेन गृहीत्वाऽथ प्रविष्टो वाहभूतलम् ।
सव्यापसव्यभेदेन वाहनीयः स्वसादिना ॥ २६ ॥

१ तथाङ्कुराणिति ज०, अ०, ङ० च । २ चव जाता शरीरेणेति अ० ।

आरुह्य सहसा नैव ताड़नीयो हयोत्तमः ।
ताड़नाद्भयमाप्नोति भयान्मोहश्च जायते ॥ २७ ॥
प्रातः सादी प्लुतेनैव वल्गामुद्धृत्य चालयेत् ।
मन्दं मन्दं विना नालं धृतवल्गो दिनान्तरे ॥ २८ ॥
प्रोक्तमाश्वसनं सामभेदोऽश्वेन नियोज्यते ।
कषादिताड़नं दण्डो दानं कालसहिष्णुता ॥ २९ ॥
पूर्व्वपूर्व्वविशुद्धो तु विदध्यादुत्तरोत्तरम् ।
जिह्वातले विनायोगं विदध्याद्वाहने हये ॥ ३० ॥
गुणेतरगतां वल्गां स्रक्कण्या सह गाहयेत् ।
विसार्य्य वाहनं कुर्य्याच्छिथिलानां शनैः शनैः ॥ ३१ ॥
हयं जिह्वाङ्गमाहीने जिह्वाग्रन्थिं विमोचयेत् ।
गाढतां मोचयेत्तावद्यावत् स्तोभं न मुञ्चति ॥ ३२ ॥
कुर्य्याच्छतमुरस्त्राणमविलालञ्च मुञ्चति ।
अर्व्वाननः स्वभावाद्यस्तस्योरस्त्राणमस्तथम् ॥ ३३ ॥
विधाय वाहयेद्दृष्ट्या लीलया सादिसत्तमः ।
तस्य सव्येन पूर्वेण संयुक्तं सव्यवल्गया ॥ ३४ ॥
यः कुर्य्यात्पश्चिमं पादं स्खलीतस्तेन दक्षिणः ।
क्रमेणानेन यो सेवां कुरुते वामवल्गया ॥ ३५ ॥
पादो तेनापि पादः स्यादुत्खलीतो वाम एव हि ।
भये चेश्वरणे त्यक्ते जायते सुदृढ़ासनं ॥ ३६ ॥
यो ह्रतो दुष्करे चैव मोटके नाटकायनं ।
सव्यहीनं खलीकारो हनने गुणने तथा ॥ ३७ ॥
अभावं हि तुरङ्गस्य मुखस्यावर्त्तनं पुनः ।

न चैवेत्थं तुरङ्गाणां पादग्रहणहेतवः ॥ ३८ ॥
विश्वस्तं हयमालोक्य गाढ़मापीड्य चासनं ।
दोकयित्वा मुखे पादं ग्राह्यतो लोकनं स्थितं ॥ ३९ ॥
गाढ़मापीड्य राणाभ्यां वल्गामाकृष्य गृह्यते ।
तद्बन्धनाद् युग्मपादं(१) तद्दवक्रनमुच्यते ॥ ४० ॥
संयोज्य वल्गया पादान् वल्गामामोच्य वाञ्छितम् ।
वाह्यपार्ष्णिप्रयोगात्तु(२) यत्र तत्ताड़नं मतम् ॥ ४१ ॥
प्लयानिप्लवे ज्ञात्वा क्रमेणानेन बुद्धिमान् ।
मोटनेन चतुर्थेन विधिरेष विधीयते ॥ ४२ ॥
नाधस्तेऽधश्च यः पादं योऽश्वो लघुनि मण्डले ।
मोटनोद्दङ्कनाभ्यान्तु ग्राहयेत् पादमीप्सितं ॥ ४३ ॥
घटयित्वासने(३) गाढं मन्दमादाय यो व्रजेत् ।
ग्राह्यते संग्रहाद्यत्र तत्संग्रहणमुच्यते ॥ ४४ ॥
हत्वा पार्ष्णि प्रहारेण स्थानस्थो व्ययमानसम् ।
वल्गामाकृष्य पादेन ग्राह्यकण्टकपायनम्(४) ॥ ४५ ॥
उत्थितो योऽङ्घ्रिणानेन पार्ष्णिपादान्तुरङ्गमः ।
गृह्यते यत् खलीकृत्य खलीकारः स चेष्यते ॥ ४६ ॥
गतिभये पियः पादमादत्ते नैव वाञ्छितः ।
हत्वा तु यत्र दण्डेन ग्राह्यते गहनं हि तत् ॥ ४७ ॥
खलीकृत्य चतुष्केण तुरङ्गो वल्गयाऽन्यया ।
उच्छ्रास्य ग्राह्यतेऽन्यत्र तत्स्यादुच्छ्रासनं पुनः ॥ ४८ ॥

---

१ भठकाशासचतुत्पादमिति ज० । २ वाह्यपार्श्वे प्रयोगाच्चिति ख० ।
३ वध्यवियित्वासन इति ख० । ४ ग्राषकण्टकपायनमिति ख० ।

स्वभावं वह्निरश्मं तस्यां दिशि पदायनं ।
नियोज्य वाहयेत्तत्तु मुखव्यावर्त्तनं मतम् ॥ ४८ ॥
वाहयित्वा ततः पादं त्रिविधासु यथाक्रमम् ।
साधयेत् पञ्चधारासु क्रमशो मण्डलादिषु ॥ ५० ॥
आजनोर्द्धाननं वाहं शिथिलं वाहयेत् सुधीः ।
अङ्गेषु लाघवं यावत्तावत्तं वाहयेद्धयं ॥ ५१ ॥
मृदुः स्कन्धे लघुर्वक्त्रे शिथिलः सर्वसन्धिषु ।
यदा स सादिनो वश्यः सङ्गृह्णीयात्तदा हयं ॥ ५२ ॥
न त्यजेत् पश्चिमं पादं यदा साधुर्भवेत्तदा ।
तदाकृष्टिर्व्विधातव्या पाणिभ्यामिह वल्गया ॥ ५३ ॥
तत्र विक्रो यथा तिष्ठेदुद्ग्रीवोश्वः समाननः ।
धरायां पश्चिमौ पादौ अन्तरीक्षे यदाग्रयौ ॥ ५४ ॥
तदा सन्धारणं कुर्य्यादृगाढवाहस्य मुष्टिना ।
सहसैवं समाकृष्टो यस्तुरङ्गो न तिष्ठति ॥ ५५ ॥
शरीरं विक्षिपंस्तस्य साधयेन्मण्डलभ्रमैः ।
क्षिपेत् स्कन्धस्य यो वाहं स च स्थाप्यो हि वल्गया ॥ ५६ ॥
गोमयं लवणं मूत्रं क्वथितं मृत्समन्वितम् ।
अङ्गलेपो मक्षिकादिदंशश्रमविनाशनः ॥ ५७ ॥
मध्ये भद्रादिजातीनां मण्डो देयो हि सादिना ।
दर्शनं भीतभीतस्य निरुत्साहः क्षुधा हयः ॥ ५८ ॥
यथा वश्यस्तथा शिक्षा विनश्यन्त्यतिवाहिताः ।
अवाहिता न सिध्यन्ति तुरङ्गमास्तु वाहयेत् ॥ ५९ ॥
सम्पीड्य जानुयुग्मे न स्थिरमुष्टिस्तुरङ्गमं ।

गोमूत्राकुटिला वेणी पद्ममण्डलमालिका ॥ ६० ॥
पञ्चोलूखलिका चार्य्या गर्विताश्चेऽतिकीर्त्तिताः(१) ।
संक्षिप्तश्चैव विक्षिप्तं कुञ्चितञ्च यथाचितम्(२) ॥ ६१ ॥
वल्गितावल्गितौ चैव घोटा चेत्थमुदाहृतम् ।
वीथीधनुःशतं यावदशीतिर्नवतिस्तथा ॥ ६२ ॥
भद्रः सुसाध्यो वाजी स्यान्मन्दो दण्डैकमानसः ।
मृगजङ्घो(३) मृगो वाजी सङ्कीर्णस्तत्समन्वयात् ॥ ६३ ॥
शर्करामधुलाजादः सुगन्धोऽश्वः शुचिर्द्विजः ।
तेजस्वी क्षत्रियश्चाश्वो विनीतो बुद्धिमांश्च यः ॥ ६४ ॥
शूद्रोऽशुचिश्चलो मन्दो विरूपो विमतिः खलः ।
वल्गया धार्य्यमाणोऽश्वो लालकं यश्च दर्शयेत् ॥ ६५ ॥
धारासु योजनीयोऽसौ प्रग्रहग्रहमोक्षणैः ।
अश्वादिलक्षणं वक्ष्ये शालिहोत्रो यथाऽवदत् ॥ ६६ ॥

इत्याग्नेये महापुराणे अश्ववाहनसारो नाम सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥

---

१ गर्जितास्तेऽतिकीर्त्तिता इति ख० ।
२ यथाचितमिति ख० ।
३ मृगजङ्घ इति ख०, ग० च ।

## अथाष्टाशीत्यधिकद्विशततमोऽध्यायः।

———०()०———

अश्वचिकित्सा।

शालिहोत्र उवाच। अश्वानां लक्षणं वक्ष्ये चिकित्साश्चैव(१)सुश्रुत।

हीनदन्तो विदन्तश्च करालो कृष्णतालुकः॥ १॥

कृष्णजिह्वश्च यमजोजातमुष्कश्च यस्तथा।

द्विशफश्च तथा शृङ्गी त्रिवर्णो व्याघ्रवर्णकः॥ २॥

खरवर्णो भस्मवर्णो जातवर्णश्च काकुदी।

श्वित्री च काकसादी च खरसारस्तथैव च॥ ३॥

वानराक्षः कृष्णशटः कृष्णगुह्यस्तथैव च।

कृष्णप्रोथश्च शूकश्च यश्च तित्तिरिसन्निभः॥ ४॥

विषमः श्वेतपादश्च ध्रुवावर्त्तविवर्जितः।

अशुभावर्त्तसंयुक्तो वर्जनीयस्तुरङ्गमः॥ ५॥

रन्ध्रोपरन्ध्रयोर्द्वौ द्वौ द्वौ मस्तकवक्षसोः।

प्रयाणे च ललाटे च कण्ठावर्त्ताः शुभा दश॥ ६॥

स्कन्धाश्च ललाटे च कर्णमूले निगालके।

बाहुमूले गले श्रेष्ठा आवर्त्तास्त्वशुभाः परे॥ ७॥

शुकेन्द्रगोपचन्द्राभा ये च वायससन्निभाः।

सुवर्णवर्णाः स्निग्धाश्च प्रशस्तास्तु सदैव हि॥ ८॥

दीर्घग्रीवाक्षिकूटाश्च ह्रस्वकर्णाश्च शोभनाः।

---

१ चिकित्साञ्चैवेति ङ०।

राज्ञान्तुरङ्गमा यत्र(१) विजयं वर्जयेत्ततः ॥ ९ ॥
पालितस्तु हयो दन्ती शुभदो दुःखदोऽन्यथा ।
स्त्रियः पुत्रास्तु गन्धर्व्वा वाजिनो रत्नमुत्तमम् ॥ १० ॥
अश्वमेधे तु तुरगः पवित्रत्वात्तु हूयते ।
वचा निम्बबृहत्यौ च गुडूची च समाक्षिका ॥ ११ ॥
सिंहा गन्धकरी पिण्डी स्वेदश्च शिरसस्तथा ।
हिङ्गु पुष्करमूलञ्च नागरं साम्लवेतसं ॥ १२ ॥
पिप्पलीसैन्धवयुतं शूलघ्नं चोष्णवारिणा ।
नागरातिविषा मुस्ता सानन्ता विल्वमालिका ॥ १३ ॥
क्वाथमेषां पिवेद्वाजी सर्व्वातीसारनाशनम् ।
प्रियङ्गुसारिवाभ्याञ्च युक्तमाजं शृतं(२) पयः ॥ १४ ॥
पर्य्याप्तशर्करं पीत्वा श्रमाद्वाजी विमुच्यते ।
द्रोणिकायान्तु दातव्या तैलवस्तिस्तुरङ्गमे ॥ १५ ॥
कोष्ठजा च शिरा वेध्या तेन तस्य सुखं भवेत् ।
दाड़िमं त्रिफला व्योषं गुड़ञ्च समभागिकम् ॥ १६ ॥
पिण्डमेतत् प्रदातव्यमश्वानां कासनाशनम् ।
प्रियङ्गुलोध्रमधुभिः पिवेद्दृषरसं हयः ॥ १७ ॥
क्षीरं वा पञ्चकोलाढ्यं कासनाद्वि प्रमुच्यते ।
प्रस्कन्धेषु च सर्व्वेषु श्रेय आदौ विशोधनम् ॥ १८ ॥
अभ्यङ्गोद्वर्त्तनैः स्नेहं नस्यवर्त्तिक्रमः स्मृतः ।
ज्वरितानां तुरङ्गाणां पयसैव क्रियाक्रमः ॥ १९ ॥
लोध्रकच्छरयोर्मूलं मातुलाङ्गाग्निनागराः ।

---

१ राज्ञीतुरङ्गमा यत्रेति ख० ।  २ हृतमिति ख० ।

कुष्ठहिङ्गुवचारास्नालेपोऽयं शोथनाशनः ॥ २० ॥
मञ्जिष्ठा मधुकं द्राक्षाबृहत्यौ रक्तचन्दनम् ।
प्रपुन्नाटबीजमूलानि शृङ्गाटककसेरुकम् ॥ २१ ॥
अजापयःशृतमिदं सुशीतं शर्करान्वितं ।
पीत्वा शीघ्रगमो वाजी रक्तमेहात् प्रमुच्यते ॥ २२ ॥
मन्याहनुनिगालस्थशिराशोथो गलग्रहः ।
अभ्यङ्गः कटुतैलेन(१) तत्र तेष्वेव शस्यते ॥ २३ ॥
गलग्रहगदो शोथः प्रायशो गलदेशके ।
प्रत्यक्पुष्पी तथा वह्निः सैन्धवं सौरसो रसः ॥ २४ ॥
कृष्णाहिङ्गुयुतैरेभिः कृत्वा नस्यं न सीदति ।
निशि ज्योतिष्मती पाठा कृष्णा कुष्ठं वचा मधु ॥ २५ ॥
जिह्वास्तम्भे च लेपोऽयं गुडमूत्रयुतो हितः ।
तिलैर्यष्ट्या रजन्या च निम्बपत्रैश्च योजिता ॥ २६ ॥
शोधिनी शोधनी पिण्डी सर्पिषा व्रणरोपणी ।
अभिघातेन खञ्जन्ति ये व्रणास्तीव्रवेदनाः ॥ २७ ॥
परिषेकक्रिया तेषां तैलेनाशु रुजापहा ।
दोषकोपाभिघाताभ्यां पञ्चभिर्व्रणनाशनः ॥ २८ ॥
अश्वत्थोदुम्बरप्लक्षमधूकवटकल्कनैः ॥ २९ ॥
प्रभूतसलिलः क्वाथः सुखोष्णः व्रणशोधनः ।
शताह्वा नागरं रास्ना मञ्जिष्ठाकुष्ठसैन्धवैः ॥ ३० ॥
देवदारुवचायुग्मरजनीरक्तचन्दनैः ।
तैलसिद्धं कषायेण गुडूच्याः पयसा सह ॥ ३१ ॥

१ तिलतैलेनेति पा० ।

अजथ्ये वस्तिमध्ये च योज्यं सर्वत्र लिङ्गिने ।
रक्तस्रावो जलौकाभिर्नेत्राक्ते नेत्ररोगिनः ॥ ३२ ॥
खादिरोडुम्बराश्वत्थकषायेण च साधनम् ।
धात्रीदुरालभातिक्ताप्रियङ्गुकुङ्कुमैः समैः ॥ ३३ ॥
गुडूच्या च क्षतः कल्को हितो युक्तावलम्बिने ।
उत्पाते च शिले श्लाघ्ये शुष्कशफे तथैव च ॥ ३४ ॥
क्षिप्रकारिणि दोषे च सद्यो विदलमिष्यते(१) ।
गोशकृन्मञ्जिकाकुष्ठरजनीतिलसर्षपैः ॥ ३५ ॥
गवां मूत्रेण पिष्टैश्च मर्द्दनं कण्डुनाशनम् ।
शीतो मधुयुतः क्वाथो नासिकायां सशर्करः ॥ ३६ ॥
रक्तपित्तहरः पानादश्वकर्णस्तथैव च ।
सप्तमे सप्तमे देयमश्वानां लवणं दिने ॥ ३७ ॥
तथा भुक्तवतां देया अतिपाने तु वारुणी ।
शीतसौधैः समधुरैर्मृद्वीकाशर्करायुतैः ॥ ३८ ॥
सपिप्पलीकैः शरदि प्रतिपानं सपद्मकैः ।
विडङ्गापिप्पलीधान्यशताह्वालोध्रसैन्धवैः ॥ ३८ ॥
सचित्रकैस्तुरङ्गाणां प्रतिपानं हिमागमे ।
लोध्रं प्रियङ्गुकामुस्तापिप्पलीविश्वभेषजैः ॥ ४० ॥
सक्षौद्रैः प्रतिपानं स्याद्वसन्ते कफनाशनम् ।
प्रियङ्गुपिप्पलीलोध्रयष्ट्याह्वैः समहौषधैः ॥ ४१ ॥
निदाघे सगुडा देया मदिरा प्रतिपानके ।

---

१ वेधनमिष्यत इति ख०, ग० च ।

लोध्रकाष्ठं सलवणं पिप्पल्यो विश्वभेषजम् ॥ ४२ ॥
भवेत्तैलयुतैरेभिः प्रतिपानं घनागमे ।
निदाघोद्धृतपित्तार्त्ताः शरत्सु पुष्टशोणिताः ॥ ४३ ॥
प्रावृड्भिन्नपुरीषाश्च पिबेयुर्वाजिनो घृतम् ।
पिबेयुर्वाजिनस्तैलं कफवायुधिकास्तु ये ॥ ४४ ॥
स्नेहव्यापद्भवो येषां कार्य्यं तेषां विरूक्षणम् ।
त्र्यहं यवागूरूक्षा स्याद् भोजनं तक्रसंयुतम् ॥ ४५ ॥
शरन्निदाघयोः सर्पिस्तैलं शीतवसन्तयोः ।
वर्षासु शिशिरे चैव वस्तौ यमकमिष्यते ॥ ४६ ॥
गुर्वभिष्यन्दिभक्तानि व्यायामं स्नानमातपम् ।
वायुवर्जञ्च वाहस्य स्नेहपीतस्य वर्जितम् ॥ ४७ ॥
स्नानं पानं शरत्कूटमश्वानां सलिलागमे ।
अत्यर्थं दुर्द्दिने काले पानमेकं प्रशस्यते ॥ ४८ ॥
युक्तशीतातपे काले द्विःपानं स्नपनं सकृत् ।
ग्रीष्मे त्रिःस्नानपानं स्याच्चिरं तस्यावगाहनम् ॥ ४९ ॥
निस्तुषाणां प्रदातव्या यवानां चतुराढकी ।
चणकव्रीहिमौद्गानि कलायं वापि दापयेत् ॥ ५० ॥
अहोरात्रेण चार्व्वस्य यवसस्य तुला दश ।
अष्टौ शुष्कस्य दातव्याश्चतस्रोऽथ बुषस्य वा ॥ ५१ ॥
दूर्वा पित्तं यवः कासं बुषश्च श्लेष्मसञ्चयम् ।
नाशयत्यर्जुनः श्वासं तथा मांसो बलक्षयम् ॥ ५२ ॥
वातिकाः पैत्तिकाश्चैव श्लेष्मजाः सान्निपातिकाः ।
न रोगाः पीडयिष्यन्ति दूर्वाहारन्तुरङ्गमम ॥ ५३ ॥

द्वौ रज्जुबन्धौ दुष्टानां पश्चयोरुभयोरपि ।
पश्चाद्बन्धश्च कर्त्तव्यो दूरकीलव्यपाश्रयः ॥ ५४ ॥
वासयेयुस्तथाश्वांस्ते स्थाने कृतधूपनभूमयः ।
यवोपभ्यस्तयवसाः सप्रदीपाः सुरक्षिताः ।
शुकवानरकपयो धार्य्याश्वास्तगृहे मृगाः ॥ ५५ ॥

इत्याग्नेये महापुराणे अश्वायुर्वेदो नामाष्टाशीत्यधिक-
द्विशततमोऽध्यायः ।

---

## अथोननवत्यधिकद्विशततमोऽध्यायः ।

---000---

अश्वशान्तिः ।

शालिहोत्र उवाच । अश्वशान्तिं प्रवक्ष्यामि वाजिरोगविमर्द्दनीं ।
नित्यां नैमित्तिकीं काम्यां त्रिविधां शृणु सुश्रुत ॥ १ ॥
शुभे दिने श्रीधरस्य श्रियमुच्चैःश्रवाश्च तं ।
हयराजं समभ्यर्च्य सावित्रैर्जुहुयाद्घृतं ॥ २ ॥
द्विजेभ्यो दक्षिणान्दद्याद्दश्वहृतिस्तथा भवेत् ।
अश्वयुक् शुक्लपक्षस्य पञ्चदश्याञ्च शान्तिकं ॥ ३ ॥
बहिः कुर्य्याद्विशेषेण नासत्यौ वरुणं यजेत् ।
समुल्लिख्य ततो देवीं शाखाभिः परिवारयेत् ॥ ४ ॥
घटान्पर्व्वरसैः पूर्णान् दिक्षु दद्यात्सवत्सकान् ।
यवाज्यं जुहुयात् प्रार्च्य यजेद्याश्च सादिनान् ॥ ५ ॥

विप्रेभ्यो दक्षिणाम्दद्यान्निमित्तकमतः शृणु ।
मकरादौ ह्ययनाख्ये पद्मैर्विष्णुं श्रियं यजेत् ॥ ६ ॥
ब्रह्माणं शङ्करं सोममादित्यञ्च तथाश्विनौ ।
देवन्तमुखैःश्रवसन्दिक्पालांश्च दलेष्वपि ॥ ७ ॥
प्रत्येकं पूर्णकुम्भेष वेद्यान्तसोम्यतः स्थले ।
तिलाक्षताज्यसिद्धार्थान् देवतानां शतं शतं ।
उपोषितेन कर्त्तव्यं कर्म चाक्षरजापकं ॥ ८ ॥

इत्याग्नेये महापुराणे पद्मशान्तिर्नामोननवत्यधिक-
द्विशततमोऽध्यायः ॥

---

## अथ नवत्यधिकद्विशततमोऽध्यायः ।

---

### गजशान्तिः ।

शालिहोत्र उवाच । गजशान्तिं प्रवक्ष्यामि गजरोगविमर्द्दनीम् ।
विष्णुं श्रियञ्च पञ्चम्यां नागमैरावतं यजेत् ॥ १ ॥
ब्रह्माणं शङ्करं विष्णुं शक्रं वैश्रवणं यमं ।
चन्द्रार्कौ वरुणं वायुमग्निं पृथ्वीं तथा च खं ॥ २ ॥
शेषं शैलान् कुञ्जरांश्च ये तेऽष्टौ देवयोनयः ।
विरूपाक्षं महापद्मं भद्रं सुमनसन्तथा ॥ ३ ॥
कुमुदैरावणः पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नागा अष्टौ होमोऽथ दक्षिणा ॥ ४ ॥

गजाः शान्त्युदकासिक्ता ह्यतो नैमित्तिकं शृणु ।
गजानामष्टकरादौ च ऐशान्यां नगराद्बहिः ॥ ५ ॥
स्थण्डिले कमले मध्ये विष्णुं लक्ष्मीञ्च केशरे ।
ब्रह्माणं भास्करं पृथ्वीं यजेत् स्कन्दं ह्यनन्तकं ॥ ६ ॥
खं शिवं सोममिन्द्रादींस्तदस्त्राणि दले क्रमात् ।
वज्रं शक्तिञ्च दण्डञ्च तोमरं पाशकं गदां ॥ ७ ॥
शूलं पद्मञ्च बहिर्वृत्ते चक्रे सूर्य्यस्तथाश्विनौ ।
वसूनष्टौ तथा साध्यान् याम्येऽथ नैर्ऋते दले ॥ ८ ॥
देवानाङ्गिरसश्चाश्विभृगवो मरुतोऽनिले(१) ।
विश्वेदेवांस्तथा दक्षे रुद्रा रौद्रेऽथ मण्डले ॥ ९ ॥
ततो वृत्तया रेखया तु देवान् वै वाह्यतो यजेत् ।
सुवकारानृषीन् वारुणे पूर्व्वादौ सरितो गिरीन् ॥ १० ॥
महाभूतानि कोणेषु ऐशान्यादिषु संयजेत् ।
पद्मं चक्रं गदां शङ्खं चतुरस्रन्तु मण्डलं ॥ ११ ॥
चतुर्द्वारं ततः कुम्भाः(२) अग्न्यादौ च पताकिकाः(३) ।
चत्वारस्तोरणा द्वारि नागानैरवतादिकान् ॥ १२ ॥
पूर्व्वादौ चौषधीभिश्च देवानां भाजनं पृथक् ।
पृथक्शताहुतीश्चाज्यैर्गजानर्च्य प्रदक्षिणं ॥ १३ ॥
नागं वह्निं देवतादीन् वाह्मेऽस्मः स्वकं गृहम् ।
द्विजेभ्यो दक्षिणां दद्यात् हयवैद्यादिकस्तथा ॥ १४ ॥
करिणोन्तु समारुह्य वदेत् कर्णन्तु कालवित् ।

१ मरुतोऽनल इति ख० । ३ पताकिन इति ख० ।
२ चतुःकुम्भा इति ख० ।

नागराजेऽमृते शान्तिं कृत्वाऽमुष्मिन्(१) जपेन्मनुम्॥१५॥
श्रीगजस्त्वं कृतो राज्ञा भवानस्य गजाग्रणीः ।
प्रभुर्माल्याग्रभक्तैस्त्वां पूजयिष्यति पार्थिवः ॥ १६ ॥
लोकस्तदाज्ञया पूजां करिष्यति तदा तव ।
पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे ॥ १७ ॥
तिर्य्यग्भावं समुत्सृज्य दिव्यं भावमनुस्मर ।
देवासुरे पुरा युद्धे श्रीगजस्त्रिदशैः कृतः ॥ १८ ॥
ऐरावणसुतः श्रीमानरिष्टो नाम वारणः ।
श्रीगजानान्तु तत् तेजः सर्व्वमेवोपतिष्ठते ॥ १९ ॥
तत्तेजस्तव नागेन्द्र दिव्यभावसमन्वितं ।
उपतिष्ठतु भद्रन्ते रक्ष राजानमाहवे ॥ २० ॥
इत्येवमभिषिक्तेनमारोहेत शुभे नृपः ।
तस्यानुगमनं कुर्युः सशस्त्रनवसद्गजाः ॥ २१ ॥
शालासमो स्थण्डिलेऽब्जे दिक्पालादीन् यजेद्बहिः ।
केशरेषु बलं नागं भुवञ्चैव सरस्वतीं ॥ २२ ॥
मध्येषु डिण्डिमं प्रार्च्च गन्धमाल्यानुलेपनैः ।
हुत्वा देयस्तु कलसो रसपूर्णो द्विजाय च ॥ २३ ॥
गजाध्यक्षं हस्तिपञ्च गणितज्ञञ्च पूजयेत् ।
गजाध्यक्षाय तन्दद्यात् डिण्डिमं सोपि वादयेत् ।
शुभगम्भीरशब्दैः स्यात्सम्पन्नस्त्रोऽभिवादयेत् ॥ २४ ॥

इत्याग्नेये महापुराणे गजशान्तिर्नाम नवत्यधिकद्विश-
ततमोऽध्यायः ॥

---

१ कृत्वामुष्मिन्निति ख०, ज०, ञ० च ।

# अथैकनवत्यधिकद्विशततमोऽध्यायः।

———000———

शान्त्यायुर्वेदः।

धन्वन्तरिरुवाच। गोविप्रपालनं कार्य्यं राज्ञा गोशान्तिमावदे।
गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः॥ १॥
शकृन्मूत्रं परं तासामलक्ष्मीनाशनं परं।
गवां कण्डूयनं वारि शृङ्गस्याघौघमर्द्दनम्॥ २॥
गोमूत्रं गोमयं चीरं दधि सर्पिश्च रोचना।
षडङ्गं परमं पाने दुःस्वप्नाद्यादिवारणं॥ ३॥
रोचना विषरक्षोघ्नी ग्रासदः स्वर्गगो गवां।
यद्गृहे दुःखिता गावः स याति नरकन्नरः॥ ४॥
परगोग्रासदः स्वर्गी गोहितो ब्रह्मलोकभाक्।
गोदानात्कीर्त्तनाद्रक्षां कृत्वा चोद्धरते कुलम्॥ ५॥
गवां श्वासात् पवित्रा भूः स्पर्शनात्किल्बिषक्षयः।
गोमूत्रं गोमयं चीरं दधि सर्पिः कुशोदकम्॥ ६॥
एकरात्रोपवासश्च श्वपाकमपि शोधयेत्।
सर्व्वाशुभविनाशाय पुराचरितमीश्वरैः॥ ७॥
प्रत्येकञ्च त्र्यहाभ्यस्तं महासान्तपनं स्मृतं।
सर्वकामप्रदञ्चैतत् सर्व्वाशुभविमर्द्दनम्॥ ८॥
कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिं।
निर्म्मलाः सर्व्वकामाप्त्या स्वर्गगाः स्युर्नरोत्तमाः॥ ९॥

त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं घृतं पिबेत् ।
त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् ॥ १० ॥
तप्तकृच्छ्रव्रतं सर्व्वपापघ्नं ब्रह्मलोकदं ।
शीतैस्तु शीतकृच्छ्रं स्याद्ब्रह्मोक्तं ब्रह्मलोकदं ॥ ११ ॥
गोमूत्रेणाचरेत्स्नानं वृत्तिं कुर्य्याच्च गोरसैः ।
गोभिर्व्रजेच्च भुक्तासु भुञ्जीताथ च गोव्रती ॥ १२ ॥
मासेनैकेन निष्पापो गोलोको स्वर्गगो भवेत् ।
विद्याच्च गोमतीं जप्त्वा गोलोकं परमं व्रजेत् ॥ १३ ॥
गीतैर्नृत्यैरप्सरोभिर्विमाने तत्र मोदते ।
गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः ॥ १४ ॥
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परं ।
अन्नमेव परं गावो देवानां हविरुत्तमम् ॥ १५ ॥
पावनं सर्व्वभूतानां क्षरन्ति च वदन्ति च ।
हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि ॥ १६ ॥
ऋषीणामग्निहोत्रेषु गावो होमेषु योजिताः ।
सर्व्वेषामेव भूतानां गावः शरणमुत्तमं ॥ १७ ॥
गावः पवित्रं परमं गावो माङ्गल्यमुत्तमं ।
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ॥ १८ ॥
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥ १९ ॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥ २० ॥

देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत् ।
धार्य्यते वै सदा तस्मात् सर्व्वे पूज्यतमा मताः ॥ २१ ॥
पिबन्ति यत्र तत्तीर्थं गङ्गाद्या गाव एव हि ।
गवां माहात्म्यमुक्तं हि चिकित्साञ्च तथा शृणु ॥ २२ ॥
शृङ्गामयेषु धेनूनां तैलं दद्यात् ससैन्धवं ।
शृङ्गवेरबलामांसकल्कसिद्धं समाक्षिकं ॥ २३ ॥
कर्णशूलेषु सर्वेषु मञ्जिष्ठाहिङ्गुसैन्धवैः ।
सिद्धं तैलं प्रदातव्यं रसोनेनाथ वा पुनः ॥ २४ ॥
बिल्वमूलमपामार्गन्धातकी च सपाटला ।
कुटजन्दन्तमूलेषु लेपास्तच्छूलनाशनं ॥ २५ ॥
दन्तशूलहरैर्द्रव्यैर्घृतं राम विपाचितं ।
मुखरोगहरं ज्ञेयं जिह्वारोगेषु सैन्धवं ॥ २६ ॥
शृङ्गवेरं हरिद्रे द्वे त्रिफला च गलग्रहे ।
हृच्छूले वस्तिशूले च वातरोगे क्षये तथा ॥ २७ ॥
त्रिफला घृतमिश्रा च गवां पाने प्रशस्यते ।
अतीसारे हरिद्रे द्वे पाठाञ्चैव प्रदापयेत् ॥ २८ ॥
सर्वेषु कोष्ठरोगेषु तथा शाखागदेषु च ।
शृङ्गवेरञ्च भार्गीञ्च कासे श्वासे प्रदापयेत् ॥ २९ ॥
दातव्या भग्नसन्धाने प्रियङ्गुर्लवणान्विता ।
तैलं वातहरं पित्ते मधुयष्टीविपाचितं ॥ ३० ॥
कफे व्योषञ्च समधु सपुष्करजोऽस्रजे ।
तैलाज्यं हरितालञ्च भग्नक्षतिसृतन्ददेत् ॥ ३१ ॥
माषास्तिलाः सगोधूमाः पशुक्षीरं घृतं तथा ।

एषां पिण्डी सलवणा वत्सानां पुष्टिदा त्वियं ॥ ३२ ॥
बलप्रदा विषाणां स्याद्ग्रहनाशाय धूपकः ।
देवदारु वचा मांसी गुग्गुलुर्हिङ्गु सर्षपाः ॥ ३३ ॥
ग्रहादिगदनाशाय एष धूपो गवां हितः ।
घण्टा चैव गवां कार्य्या धूपेनानेन धूपिता ॥ ३४ ॥
अश्वगन्धातिलैः शृङ्गं तेन गोः क्षीरिणी भवेत् ।
रसायनञ्च पिण्याकं मत्तो यो धार्य्यते गृहे ॥ ३५ ॥
गवां पुरीषे पञ्चम्यां नित्यं शान्त्यै श्रियं यजेत् ।
वासुदेवञ्च गन्धाद्यैरपरा शान्तिरुच्यते ॥ ३६ ॥
अश्वयुक्शुक्लपक्षस्य पञ्चदश्यां यजेद्धरिं ।
हरिं रुद्रमजं सूर्य्यं श्रियमग्निं घृतेन च ॥ ३७ ॥
दधि सम्प्राश्य गाः पूज्य कार्य्यं वह्निप्रदक्षिणं ।
वृषाणां योजयेद् युद्धं गीतवाद्यरवैर्बहिः ॥ ३८ ॥
गवान्तु लवणन्देयं ब्राह्मणानाञ्च दक्षिणा ।
नैमित्तिके माकरादौ यजेद्विष्णुं सह श्रिया ॥ ३९ ॥
स्थण्डिलेऽब्जे मध्यगते दिक्षु केशरगान् सुरान् ।
सुभद्राजो रविः पूज्यो बहुरूपो बलिर्बहिः ॥ ४० ॥
खं विश्वरूपा सिद्धिश्च ऋद्धिः शान्तिश्च रोहिणी ।
दिग्धेनवो हि पूर्वाद्याः क्रमशैचन्द्र ईश्वरः ॥ ४१ ॥
दिक्पालाः पद्मपत्रेषु कुम्भेष्वग्नौ च होमयेत् ।
क्षीरवृक्षस्य समिधः सर्षपाक्षततण्डुलान् ॥ ४२ ॥
शतं शतं सुवर्णञ्च कांस्यादिकं द्विजे ददेत् ।
गावः पूज्या विमोक्तव्याः शान्त्यै क्षीरादिसंयुताः ॥ ४३ ॥

अग्निरुवाच । शालिहोत्रः सुश्रुताय हयायुर्वेदमुक्तवान् ।
पालकाप्योऽङ्गराजाय गजायुर्वेदमब्रवीत् ॥ ४४ ॥

इत्याग्नेये महापुराणे शान्त्यायुर्वेदो नामैकनवत्यधिकद्विशततमोऽध्यायः ।

---

## अथ द्विनवत्यधिकद्विशततमोऽध्यायः ।

—:○:—

### मन्त्रपरिभाषा ।

अग्निरुवाच । मन्त्रविद्याहरं वक्ष्ये भुक्तिमुक्तिप्रदं शृणु ।
विंशत्यर्णाधिका मन्त्रा मालामन्त्राः स्मृता द्विज ॥ १ ॥
दशाक्षराधिका मन्त्रास्तदर्वाग्बीजसंज्ञिताः ।
वार्द्धक्ये सिद्धिदा ह्येते मालामन्त्रास्तु यौवने ॥ २ ॥
पञ्चाक्षराधिका मन्त्राः सिद्धिदाः सर्वदापरे ।
स्त्रीपुंनपुंसकत्वेन त्रिधाः स्युर्मन्त्रजातयः ॥ ३ ॥
स्त्रीमन्त्रा वह्निजायान्ता नमोन्ताश्च नपुंसकाः ।
शेषाः पुमांसस्ते शस्ता वश्योच्चाटविषेषु च(१) ॥ ४ ॥
क्षुद्रक्रियामयध्वंसे स्त्रियोऽन्यत्र(२) नपुंसकाः ।
मन्त्रावाग्नेयसौम्याख्यौ तारायन्ताद्वयोर्जपेत् ॥ ५ ॥
ताराद्याग्निवियत्प्रायो मन्त्र आग्नेय इष्यते ।
शिष्टः सौम्यः प्रशस्तौ तौ कर्म्मणोः क्रूरसौम्ययोः ॥ ६ ॥

---

१ वश्योच्चाटवधेषु चेति ज० । २ स्त्रियो मात्येति ख० ।

आग्नेयमन्त्रः सौम्यः स्यात्प्रायशोऽन्ते नमोऽन्वितः ।
सौम्यमन्त्रस्तथाग्नेयः फट्कारेणान्ततो युतः ॥ ७ ॥
सुप्तः प्रबुद्धमात्रो वा मन्त्रः सिद्धिं न यच्छति ।
स्वापकालो महावाहो जागरो दक्षिणावहः ॥ ८ ॥
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्य्ययात् ।
प्रबोधकालं जानीयादुभयोरुभयोरहः ॥ ९ ॥
दुष्टर्क्षराशिविद्वेषिवर्णादीन् वर्ज्जयेन्मनून् ।
राज्यलाभोपकाराय प्रारभ्यारिः स्वरः कुरून् ॥ १० ॥
गोपालककुटीं प्रायात् पूर्णामित्युदिता लिपिः ।
नक्षत्रचक्रमाद्योऽन्त्या स्वरान्त्यौ रेवतीयुजौ ॥ ११ ॥
वेला गुरुः स्वराः शोणः कर्म्मणेवेतिभेदिताः ।
लिप्यर्णा वशिषु ज्ञेया षष्ठेशादींश्च योजयेत् ॥ १२ ॥
लिपौ चतुष्कशस्तायामाख्यवर्णपदाक्षराः ।
सिद्धाः साध्या द्वितीयस्याः सुसिद्धा वैरिणः परे ॥ १३ ॥
सिद्धादीन् कल्पयेदेवं सिद्धात्यन्तगुणैरपि(१) ।
सिद्धे सिद्धो जपात् साध्यो जपपूजाहुतादिना(२) ॥ १४ ॥
सुसिद्धो ध्यानमात्रेण साधकं नाशयेदरिः ।
दुष्टार्णप्रचुरो यः स्यान्मन्त्रः सर्व्वविनिन्दितः ॥ १५ ॥
प्रविश्य विधिवद्दीक्षामभिषेकावमानिकाम् ।
श्रुत्वा तन्त्रं गुरोर्लब्धं साधयेदीप्सितं मनुम् ॥ १६ ॥
धीरो दक्षः शुचिर्भक्तो जपध्यानादितत्परः ।

---

१ सिद्धाद्यन्तदलैरपीति ज० ।　　२ जपपूजाक्षतादिनेति ख० ।

सिद्धस्तपस्वी कुशलस्तन्त्रज्ञः सत्यभाषणः ॥ १७ ॥
निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ।
शान्तो दान्तः पटुश्चीर्णब्रह्मचर्य्यो हविष्यभुक् ॥ १८ ॥
कुर्वन्नाचार्य्यशुश्रूषां सिद्धोत्साहो स शिष्यकः ।
स तूपदेश्यः पुत्रश्च विनयी वसुदस्तथा ॥ १९ ॥
मन्त्रन्दद्यात् सुसिद्धो तु सहस्रं देशिकं जपेत् ।
यदृच्छया श्रुतं मन्त्रं छलेनाथ बलेन वा ॥ २० ॥
पत्रे स्थितञ्च गाथाञ्च जनयेद्यद्यनर्थकम् ।
मन्त्रं यः साधयेदेकं जपहोमार्च्चनादिभिः ॥ २१ ॥
क्रियाभिर्भूरिभिस्तस्य सिध्यन्ते स्वल्पसाधनात् ।
सम्यक्सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन ॥ २२ ॥
बहुमन्त्रवतः पुंसः का कथा शिव एव सः ।
दशलक्षजपादेक वर्णो मन्त्रः प्रसिध्यति ॥ २३ ॥
वर्णवृद्ध्या जपह्रासस्तेनान्येषां समूहयेत् ।
बीजाद्द्विगुणान्मन्त्रान्मालामन्त्रे जपक्रिया ॥ २४ ॥
सङ्ख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिषु ।
जपाद्दशांशं सर्व्वत्र साभिषेकं हुतं विदुः ॥ २५ ॥
द्रव्यानुक्तौ घृतं होमे जपोऽशक्तस्य सर्व्वतः ।
मूलमन्त्राद्दशांशः स्यादङ्गादीनां जपादिकम् ॥ २६ ॥
जपात्तशक्तिमन्त्रस्य कामदा मन्त्रदेवताः ।
साधकस्य भवेत् तृप्ता ध्यानहोमार्च्चनादिना ॥ २७ ॥
उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
जिह्वाजपे शतगुणः सहस्रो मानसः स्मृतः ॥ २८ ॥

प्राङ्मुखोऽवाङ्मुखो वापि मन्त्रकर्म्म समारभेत् ।
प्रणवाद्याः सर्व्वमन्त्रा वाग्यतो विहितात्मनः ॥ २९ ॥
आसीनस्तु जपेन्मन्त्रान्देवताचार्य्यतुल्यदृक् ।
कुटीविविक्ता देशाः स्युर्देवालयनदीह्रदाः ॥ ३० ॥
सिद्धौ यवागूपूपैर्व्वा पयो भक्ष्यं हविष्यकम् ।
मन्त्रस्य देवता तावत्(१) तिथिवारेषु वै जपेत् ॥ ३१ ॥
कृष्णाष्टमीचतुर्द्दश्योर्ग्रहणादौ च साधकः ।
दस्रो यमोऽनलो धाता शशी रुद्रो गुरुर्दितिः ॥ ३२ ॥
सर्पाः पितरोऽथ भगोऽर्य्यमा शीतितरश्रुतिः ।
त्वष्टा मरुत इन्द्राग्नी मित्रेन्द्रौ निर्ऋतिर्ज्जलम् ॥ ३३ ॥
विश्वेदेवा हृषीकेशो वायवः सलिलाधिपः ।
अजैकपादहिर्ब्रध्नः पूषाश्विन्यादिदेवताः ॥ ३४ ॥
अग्निर्दस्रावुमा निघ्नो नागश्चन्द्रो दिवाकरः ।
मातृदुर्गा दिशामीशः कृष्णो वैवस्वतः शिवः ॥ ३५ ॥
पञ्चदश्याः शशाङ्कस्तु पितरस्तिथिदेवताः ।
हरो दुर्गा गुरुर्विष्णुर्ब्रह्मा लक्ष्मीर्धनेश्वरः ॥ ३६ ॥
एते सूर्य्यादिवारेशा लिपिन्यासोऽथ कथ्यते ।
केशान्तेषु च हृत्तेषु चक्षुषोः श्रवणद्वये ॥ ३७ ॥
नासागण्डोष्ठदन्तानां द्वे द्वे मूर्द्धास्ययोः क्रमात् ।
वर्णान् पञ्चसुवर्गाणां(२) बाहुचरणसन्धिषु ॥ ३८ ॥
पार्श्वयोः पृष्ठतो नाभौ हृदये च क्रमान्यसेत् ।

---

१ तावदिति ख० ।  २ पञ्चस्वरवर्गाणामिति ख० ।

यादींश्च हृदये न्यस्येदेषां स्युः सप्तधातवः ॥ ३९ ॥
त्वगसृङ्मांसकस्नायुमेदोमज्जाशुक्राणि धातवः ।
वसाः पयो वासको लिख्यन्ते चैव लिपीश्वराः ॥ ४० ॥
श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्त्तिरमरेश्वरः ।
अर्घीशो भावभूतिश्च तिथीशः स्थाणुको हरः ॥ ४१ ॥
दण्डीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनः शरण्या देवता अमूः ॥ ४२ ॥
ततः क्रोधीशचण्डौ च पश्चान्तकशिवोत्तमौ ।
तथैव रुद्रकूर्म्मौ च त्रिनेत्रौ चतुराननः ॥ ४३ ॥
अजेशः शर्म्मसोमेशौ तथा लाङ्गलिदारुकौ ।
अर्द्धनारीश्वरश्चोमा कान्तश्चाषाढिदण्डिनौ ॥ ४४ ॥
अत्रिर्म्मीनश्च मेषश्च लोहितश्च शिखी तथा ।
छगलण्डद्विरण्डौ द्वौ समहाकालवालिनौ ॥ ४५ ॥
भुजङ्गश्च पिनाकी च खड्गीशश्च वकः पुनः ।
श्वेतो भृगुर्लगुडीशाख्यश्च सम्वर्त्तकः स्मृतः ॥ ४६ ॥
रुद्रात्मशक्तान् लिख्यादीन् नमोन्तान् विन्यसेत् क्रमात् ।
अङ्गानि विन्यसेत्सर्व्वे मन्त्राःसाङ्गास्तु सिद्धिदाः ॥ ४७ ॥
हृल्लेखाव्योमसपूर्व्वाण्येतान्यङ्गानि विन्यसेत् ।
हृदादीन्यङ्गमन्त्रान्तैर्यो जपेद्धृदये नमः ॥ ४८ ॥
स्वाहा शिरस्यथ वषट्शिखायां कवचे च हुं ।
वौषट् नेत्रेऽस्त्राय फटस्यात् पश्चाङ्गं नेत्रवर्जितम् ॥४९॥
निरङ्गस्यात्मना चाङ्गं न्यसेमात्रियुतं जपेत् ।
क्रमाभ्यां देवीं वागीशीं यथोक्तांस्तु तिलान् हुनेत् ॥ ५० ॥

लिपिर्देवी साक्षसूत्रकुम्भपुस्तकपद्मधृक् ।
कवित्वादि प्रयच्छेत कर्म्मादौ सिद्धये न्यसेत् ।
निष्कविर्निर्म्मलः सर्व्वे मन्त्राः सिध्यन्ति मातृभिः ॥५१॥

इत्याग्नेये महापुराणे मन्त्रपरिभाषा नाम द्विनवत्यधिक-
द्विशततमोऽध्यायः ।

---

## अथ त्रिनवत्यधिकद्विशततमोऽध्यायः ।

---

### नागलक्षणानि ।

अग्निरुवाच । नागादयोऽथ भावादिदशस्थानानि कर्म्म च ।
सूतकं दष्टचेष्टेति सप्तलक्षणमुच्यते ॥ १ ॥
शेषवासुकितक्षाख्याः कर्कटोऽब्जो महाम्बुजः ।
शङ्खपालश्च कुलिक इत्यष्टौ नागवर्य्यकाः ॥ २ ॥
दशाष्टपञ्चत्रिगुणशतमूर्द्धान्वितौ क्रमात् ।
विप्रौ नृपौ विशौ शूद्रौ द्वौ द्वौ नागेषु कीर्त्तितौ ॥ ३ ॥
तदन्वयाः पञ्चशतं तेभ्यो जाता असंख्यकाः ।
फणिमण्डलिराजीलवातपित्तकफात्मकाः ॥ ४ ॥
व्यन्तरा दोषमिश्रास्ते सर्पा दर्व्वीकराः स्मृताः ।
रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः(१) ॥ ५ ॥
गोनसा मन्दगा दीर्घा मण्डलैर्विविधैश्चिताः(२) ।

---

१ रथाङ्गलाङ्गलच्छत्रमुद्रिकाङ्कुशधारिण इति च० ।　　२ चिता इति च० ।

राजिलाश्चित्रिताः स्निग्धास्तिर्य्यगूर्द्ध्वं च वाजिभिः ॥ ६ ॥
व्यन्तरा मिश्रचिह्नाश्च भूवर्षाग्नेयवायवः।
चतुर्विधास्ते षड्विंशभेदाः षोड़श गोनसाः ॥ ७ ॥
त्रयोदश च राजीला व्यन्तरा एकविंशतिः।
येऽनुक्तकाले जायन्ते सर्पास्ते व्यन्तराः स्मृताः ॥ ८ ॥
आषाढादित्रिमासैः स्याद्गर्भो मासचतुष्टये।
अण्डकानां शते द्वे च चत्वारिंशत् प्रसूयते ॥ ९ ॥
सर्पा ग्रसन्ति सूतौघान् विना स्त्रीपुन्नपुंसकान्।
उन्मीलतेऽक्षि सप्ताहात् कृष्णो मासाद्भवेद्बहिः ॥ १० ॥
द्वादशाहात् सुबोधः स्यात् दन्ताः स्युः सूर्य्यदर्शनात्।
द्वात्रिंशद्दिनविंशत्या चतस्रस्तेषु दंष्ट्रिकाः ॥ ११ ॥
कराली मकरी कालरात्री च यमदूतिका।
एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः ॥ १२ ॥
षण्मासान्मुच्यते कृत्तिं जीवेत्षष्टिसमाद्वयं।
नागाः सूर्य्यादिवारेशाः सप्त उक्ता दिवा निशि ॥ १३ ॥
स्वेषां षट् प्रतिवारेषु कुलिकः सर्व्वसन्धिषु।
शङ्खेन वा महाब्जेन सह तस्योदयोऽथवा ॥ १४ ॥
द्वयोर्व्वा नाड़िकामन्त्रमन्त्रकं(१) कुलिकोदयः।
दुष्टः स कालः सर्व्वत्र सर्पदंशे विशेषतः(२) ॥ १५ ॥
कृत्तिका भरणी स्वाती मूलं पूर्व्वत्रयाश्विनी।
विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी ॥ १६ ॥
हस्ता मन्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः।

१ नाड़िकामात्रममन्त्रकमिति ग०। २ विर्जिर्हिंसेदिति क०, ख०, ज०, ट० च।

षष्ठी रिक्ता शिवा निन्द्या पञ्चमी च चतुर्दशी ॥ १७ ॥
सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः ।
एकद्विबहवो दंशा दष्टविद्धञ्च खण्डितम् ॥ १८ ॥
अदंशमवगुप्तं(१) स्याद्दंशमेवं चतुर्विधम् ।
त्रयो द्व्येकक्षता दंशा वेदना रुधिरोल्वणा ॥ १९ ॥
नक्तन्त्वेकाङ्घ्रिकूर्म्माभा दंशाश्च यमचोदिताः ।
दौर्ब्बल्यपिपीलिकास्पर्शी कण्ठशोथरुजान्वितः(२) ॥ २० ॥
सतोदो ग्रन्थितो दंशः सविषो न्यस्तनिर्व्विषः ।
देवालये शून्यगृहे वल्मीकोद्यानकोटरे ॥ २१ ॥
रथ्यासन्धौ श्मशाने च नद्याञ्च सिन्धुसङ्गमे ।
द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्व्वताग्रतः ॥ २२ ॥
बिलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके ।
शिग्रुश्लेष्मातकाक्षेषु जम्बूडुम्बरणेषु च ॥ २३ ॥
वटे च जीर्णप्राकारे खास्यहृत्कक्षजत्रुणि ।
तालौ शङ्खे गले मूर्ध्नि चिबुके नाभिपादयोः ॥ २४ ॥
दंशोऽशुभः शुभो दूतः पुष्पहस्तः सुवाक् सुधीः ।
लिङ्गवर्णसमानश्च शुक्लवस्त्रोऽमलः शुचिः ॥ २६ ॥
अपद्वारगतः शस्त्री प्रमादी भूगतेक्षणः ।
विवर्णवासाः पाशादिहस्तो गद्गदवर्णभाक् ॥ २७ ॥
शुष्ककाष्ठान्वितः खिन्नस्तिलाक्तककरांशुकः ॥ २५ ॥
आर्द्रवासाः कृष्णरक्तपुष्पयुक्तशिरोरुहः ।
कुचमर्दी नखच्छेदी गुदस्पृक् पादलेखकः ।

---

१ अदंशमवलुप्तमिति ञ० ।   २ कण्ठशोथरुजान्वित इति ञ० ।

कोशमुखौ हृणच्छेदौ दुष्टा दूतास्तथैकशः॥ २८॥
द्वाभ्या वा वहेद्देधा यदि दूतस्य चात्मनः।
आभ्यां द्वाभ्यां पुष्टयासात् विद्यास्त्रीपुन्नपुंसकान्॥ २९॥
दूतः स्पृशति यद्गात्रं तस्मिन् दंशमुदाहरेत्।
दूताङ्घ्रिचलनं दुष्टमुत्थितिर्निश्चला शुभा॥ ३०॥
जीवपार्श्वे शुभो दूतो दुष्टोऽन्यत्र समागतः।
जीवो गतागतैर्दुष्टः शुभो दूतनिवेदने॥ ३१॥
दूतस्य वाक् प्रदुष्टा सा पूर्व्वामजार्द्धनिन्दिता।
विभक्तैस्तस्य वाक्यान्तैर्विषनिर्व्विषकालता॥ ३२॥
आद्यैः स्वरैश्च काद्यैश्च वर्गैर्भिन्नलिपिर्द्विधा।
स्वरजो वसुमान्वर्गी इतिचेपा च मातृका॥ ३३॥
वाताग्नीन्द्रजलात्मानो वर्गेषु च चतुष्टयम्।
नपुंसकाः पञ्चमाः स्युः स्वराः शक्राम्बुयोनयः॥ ३४॥
दुष्टौ दूतस्य वाक्पादौ वाताग्नी मध्यमो हरिः।
प्रशस्ता वारुणा वर्णा अतिदुष्टा नपुंसकाः॥ ३५॥
प्रस्थाने मङ्गलं वाक्यं गर्ज्जितं मेघहस्तिनोः।
प्रदक्षिणं फले वृक्षे वामस्य च रुतं जितं॥ ३६॥
शुभा गीतादिशब्दाः स्युरीदृशं स्यादसिद्धये।
अनर्थगीरथाक्रन्दो दक्षिणे विरुतं क्षुतम्॥ ३७॥
वेश्या च्युतो नृपः कन्या गौर्द्दन्ती मुरजध्वजौ।
क्षीराज्यदधिशङ्खाम्बु छत्रं भेरी फलं सुराः॥ ३८॥
तण्डुला हेम रूप्यञ्च सिद्धयेऽभिमुखा अमी।
सकाष्ठः सानलः कारुर्मलिनाम्बरभावभृत्॥ ३९॥

गलस्फोटश्च गोमायुगृध्रोलूककपर्दिकाः।
तैलं कपालकार्पासा निबेधे भस्म नष्टये ॥ ४० ॥
विषरोगाश्च सप्त स्युर्धातोर्धात्वन्तराप्तितः।
विषदंष्ट्री ललाटं यात्यतोनेत्रं ततो मुखम्।
आस्याच्च वचनीनाड्यो धातून् प्राप्नोति हि क्रमात् ॥४१॥

इत्याग्नेये महापुराणे नागलक्षणादिर्नाम त्रिनवत्यधिक
द्विशततमोऽध्यायः।

---

## अथ चतुर्नवत्यधिकद्विशततमोऽध्यायः।

——000——

दष्टचिकित्सा।

अग्निरुवाच। मन्त्रध्यानौषधैर्दष्टचिकित्सां प्रवदामि ते।
ॐ नमो भगवते नीलकण्ठायेति।
जपनाद्विषहानिः स्यादौषधं जीवरक्षणं ॥ १ ॥
साज्यं सक्षद्रसं पेयं द्विविधं विषमुच्यते।
जङ्गमं सर्पमूषादि शृङ्ग्यादि स्थावरं विषं ॥ २ ॥
शान्तस्वरान्वितौ ब्रह्मा लोहितं तारकं(१) शिवः।
विषतेर्नाममन्त्रोऽयं तार्क्ष्यः शब्दमयः स्मृतः ॥ ३ ॥

ॐ ज्वल महामते हृदयाय गरुडविरालशिरसे(२) गरुडशिखायै गरुड विषभञ्जन प्रभेदन प्रभेदन वित्रासय वित्रासय विम-

---

१ तारकः इति ख०। २ गरुडविशालशिरसे इति ख०।

हृंय विमर्हय कवचाय अप्रतिहतशासन वं ह्रूं फट् अस्त्राय उग्र-रूपधारक सर्वभयङ्कर भीषण सर्वं दह दह भस्मीकुरु कुरु स्वाहा नेत्राय ।

सप्तवर्गान्तयुग्माष्टदिग्दलस्वर केशरादिवर्णकहं वह्निराभूत-कर्णिकं मातृकाम्बुजं ।

कृत्वा हृदिस्थं तन्मन्त्री वामहस्ततले स्मरेत् ।
अङ्गुष्ठादौ न्यसेद्वर्णान्वियतैर्भेदिताः कलाः(१) ॥ ४ ॥
पीतं वज्रचतुष्कोणं पार्थिवं शक्रदैवतं ।
कृत्वार्धमाप्यपद्मार्धं शुक्लं वरुणदैवतं ॥ ५ ॥
त्र्यस्रं स्वस्तिकयुक्तञ्च तैजसं वह्निदैवतं ।
वृत्तं विन्दुवृतं वायुदैवतं कृष्णमालिनम् ॥ ६ ॥
अङ्गुष्ठाद्यङ्गुलीमध्ये पर्वस्थेषु स्ववेश्मसु ।
सुवर्णनागवाहेन वेष्टितेषु न्यसेत् क्रमात् ॥ ७ ॥
वियतैश्चतुरो वर्णान् सुमण्डलसमन्वितः ।
अरूपे रवतन्मात्रे(२) आकाशेशिवदैवते ।। ८ ॥
कनिष्ठामध्यपर्वस्थे न्यसेत्तस्याद्यमक्षरम् ।
नागानामादिवर्णांश्च स्वमण्डलगतान्न्यसेत् ॥ ९ ॥
भूतादिवर्णान् विन्यसेदङ्गुष्ठाद्यन्तपर्वसु ।
तन्मात्रादिगुणाभ्यर्णानङ्गुलीषु न्यसेद्बुधः ॥ १० ॥
स्पर्शनाद्देवतार्च्चेण हस्ते हन्याद्विषद्वयं ।
मण्डलादिषु तान् वर्णान् वियतैः कवयो जितान् । ११ ॥
ज्येष्ठाद्यङ्गुलिभिर्हन्नाभिस्थानेषु पर्वसु ।

---

१ भेदिकाक्षवेति ख० । २ वरतन्मात्रे इति ख० ।

आजानुतः सुवर्णाभमानाभेस्तुहिनप्रभम् ॥ १२ ॥
कुङ्कुमारुणमाकण्ठादाकेशान्तात् सितेतरं ।
ब्रह्माण्डव्यापिनं तार्क्षं चन्द्राख्यं नागभूषणम् । १३ ॥
नीलोग्रनासमात्मानं महापक्षं स्मरेद्बुधः ।
एवन्तार्क्षात्मनो वाक्यान्मन्त्रः स्यान्मन्त्रिणो विषे ॥ १४ ॥
मुष्टिस्तार्क्षंकरस्यान्तःस्थिताङ्गुष्ठविषापहा ।
तार्क्षं हस्तं समुद्यम्य तत्पञ्चाङ्गुलिचालनात् ॥ १५ ॥
कुर्य्याद्विषस्य स्तम्भादींस्तदुक्तमदवीषया ।
आकाशादेष भूवीजः पञ्चार्णाधिपतिर्मनुः ॥ १६ ॥
संस्तम्भयेतिविषतो भाषया स्तम्भयेद्विषम् ।
व्यत्यस्तभूषया वीजो मन्त्रोऽयं साधुसाधितः ॥ १७ ॥
संप्लवः प्लावय यमः(१) ग्रन्थ्यः संहरेद्विषं ।
दष्टमुत्थापयेदेष सुजसान्तोऽभिषिकतः ॥ १८ ॥
सुजसशङ्खभेर्य्यादिनिस्वनश्रवणेन वा ।
संदहत्येव संयुक्तो भूतेजोव्यत्ययात् स्थितः ॥ १९ ॥
भूवायुव्यत्ययान्मन्त्रो विषं संक्रामयत्यसौ ।
अन्तस्थो निजवेश्मस्थो वीजान्मौन्दुजलात्मभिः ॥ २० ॥
एतत् कर्म्म नयेन्मन्त्री गरुडाकृतिविग्रहः ।
तार्क्षंवरुणगेहस्थस्तत्र्यपानाशयेद्विषम् ॥ २१ ॥
जानुदघ्नोदमुदितं सुधाश्रीवीजलाञ्छितं ।
स्नानपानात्सर्व्वंविषं ज्वरारोगापमृत्युजित् ॥ २२ ॥
पक्षि पक्षि महापक्षि महापक्षि विधि स्वाहा ।

---

१ यम इति ख० ।

पक्षि पक्षि महापक्षि महापक्षि क्षि क्षि स्वाहा ।
हावेतौ पक्षिराड्मन्त्रौ विषघ्नावभिमन्त्रणात् ।
पक्षिराजाय विद्महे पक्षिदेवाय धीमहि तन्नो गरुड़ प्रचोदयात् ।
वक्त्रिणौ पार्श्वतत्पूर्वौ दन्तश्रीकौ च दक्षिणौ ॥ २३ ॥
सकालौ लाङ्गली चेति नीलकण्ठाद्यमीरितं ।
वक्षःकण्ठशिखास्वेतं न्यसेत्स्तम्भे सुसंस्कृतौ ॥ २४ ॥
हर हर हृदयाय नमः कपर्दिने च शिरसे नीलकण्ठाय
वै शिखां कालकूटविषभक्षणाय स्वाहा ।
अथ वर्णं च कण्ठे नेत्रं कृत्तिवासास्त्रमेवं पूर्वादैराननैर्युक्तं
श्वेतपीतारुणासितैः ।
अभयं वरदं चापं वासुकिञ्च दधद्भुजैः ।
यज्ञोपवीतपार्श्वस्थगौरीरुद्रोऽस्य देवता ॥ २५ ॥
पादजानुगुह्यनाभिहृत्कण्ठाननमूर्द्धसु ।
मन्त्रार्णान्विन्यस्य करयोरङ्गुष्ठाद्यङ्गुलीषु च ॥ २६ ॥
तर्जन्यादितदन्तासु सर्वमङ्गुष्ठयोर्न्यसेत् ।
ध्यात्वैवं संहरेत् क्षिप्रं वध्या मूलमुद्रया ॥ २७ ॥
कनिष्ठा ज्येष्ठया बद्धा तिस्रोऽन्याः प्रसृतेर्जवाः ।
विषनाशे वामहस्तमन्यस्मिन् दक्षिणं करं ॥ २८ ॥
ॐ नमो भगवते नीलकण्ठाय चिः अमलकण्ठाय चिः ।
सर्वज्ञकण्ठाय चिः क्षिप ॐ स्वाहा ।
अमलनीलकण्ठाय नैकसर्वविषापहाय ।
नमस्ते रुद्रमन्यव इतिसर्पाज्ञनाहिषं विनश्यति न सन्देहः
कर्णजाप्या उपानहावा ।

यजेद्रुद्रविधानेन नीलग्रीवं महेश्वरम् ।
विषव्याधिविनाशः स्यात् कृत्वा रुद्रविधानकं ॥ १८ ॥

इत्याग्नेये महापुराणे दष्टचिकित्सा नाम चतुर्णवत्यधिकद्विशततमोऽध्यायः ॥

---

## अथ पञ्चनवत्यधिकद्विशततमोऽध्यायः ।

---

पञ्चाङ्गरुद्रविधानं ।

अग्निरुवाच । वक्ष्ये रुद्रविधानन्तु पञ्चाङ्गं सर्व्वदं परं ।
हृदयं शिवसङ्कल्पः शिवः सूक्तन्तु पौरुषम् ॥ १ ॥
शिखाभ्यः सम्भृतं सूक्तमाशुः कवचमेव च ।
शतरुद्रियमस्त्रञ्च रुद्रस्याङ्गानि पञ्च हि ॥ २ ॥
पञ्चाङ्गाश्रस्य तं ध्यात्वा जपेद्रुद्रांस्ततः क्रमात् ।
यज्जाग्रत इति सूक्तं यदृचं मानसं विदुः ॥ ३ ॥
ऋषिः स्याच्छिवसङ्कल्पश्छन्दस्त्रिष्टुबुदाहृतं ।
शिवः सहस्रशीर्षेति तस्य नारायणोऽप्यृषिः ॥ ४ ॥
देवता पुरुषोऽनुष्टुप्छन्दो ज्ञेयञ्च चेष्टुभम् ।
अभ्यस्रसम्भृतं सूक्तमृषिरुत्तरगोनरः(१) ॥ ५ ॥
आद्यानान्तिसृणां त्रिष्टुप्छन्दोऽनुष्टुवद्वयोरपि ।

१ उत्तरगोनम इति ग०, ङ० च ।

छन्दस्त्रैष्टुभमन्त्यायाः पुरुषोऽस्यापि देवता ॥ ६ ॥
आशुरिन्द्रो द्वादशानां छन्दस्त्रिष्टुबुदाहृतं ।
ऋषिः प्रोक्तः प्रतिरथः सूक्ते सप्तदशार्चके ॥ ७ ॥
पृथक् पृथक् देवताः स्युः पुरुविदङ्गदेवता ।
अवशिष्टदैवतेषु छन्दोऽनुष्टुबुदाहृतं ॥ ८ ॥
असौ यमो भवित्रीन्द्रः पुरुलिङ्गोक्तदेवताः(१) ।
पङ्क्तिश्छन्दोऽथ मर्म्माणि त्वपलिङ्गोक्तदेवताः ॥ ९ ॥
रौद्राध्याये च सर्व्वस्मिन्नार्षं स्यात् परमेष्वपि ।
प्रजापतिर्व्वा देवानां कुत्सस्य तिसृणां पुनः ॥ १० ॥
मनोद्वयोरुमैका स्याद्रुद्रो रुद्राश्च देवताः ।
आद्योनुवाकोऽथ पूर्व्वं एकरुद्राख्यदैवतः ॥ ११ ॥
छन्दो गायत्रमाद्याया अनुष्टुप् तिसृणामृचाम् ।
तिसृणाञ्च तथा पङ्क्तिरनुष्टुवथ संस्मृतम् ॥ १२ ॥
द्वयोश्च जगतीछन्दो रुद्राणामप्यशीतयः ।
हिरण्यबाहवस्तिस्रो नमो वः किरिकाय च ॥ १३ ॥
पञ्चर्षी रुद्रदेवाः स्युर्मन्त्रे रुद्रानुवाककः(२) ।
विंशके रुद्रदेवास्ताः प्रथमा बृहती स्मृता ॥ १४ ॥
ऋग्द्वितीया त्रिजगती तृतीया त्रिष्टुवेव च ।
अनुष्टुभो यजुस्तिस्र आर्य्यादिभिः सुसिद्धिभाक् ॥ १५ ॥
त्रैलोक्यमोहनेनापि विषव्याध्यरिमर्द्दनं(३) ।

१ भवित्रीति त्रिष्टुप् लिङ्गोक्तदेवतेति ख॰ ।
२ रुद्राश्चवाचक इति ज॰, ट॰ च ।
३ विषव्याधिविमर्द्दनमिति ज॰ ।

हूं श्रीं क्लीं क्षौं हूं(१) त्रैलोक्यमोहनाय विष्णवे नमः ।
अनुष्टुभं नृसिंहेन विषव्याधिविनाशनं ॥ १६ ॥
ॐ ह्रूं ह्रूं(२) उग्रवीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युवमाम्यहं ॥ १७ ॥
अयमेव तु पञ्चाङ्गो मन्त्रः सर्वार्थसाधकः ।
द्वादशाष्टाक्षरौ मन्त्रौ विषव्याधिविमर्द्दनौ ॥ १८ ॥
कुब्जिका त्रिपुरा गौरी चन्द्रिका(३) विषहारिणी ।
प्रसादमन्त्रो विषहृदायुरारोग्यवर्द्धनः ।
सौरो विनायकस्तद्वद्रुद्रमन्त्राः सदाखिलाः ॥ १९ ॥

इत्याग्नेये महापुराणे पञ्चाङ्गरुद्रविधानंनाम पञ्च-
नवत्यधिकद्विशततमोऽध्यायः ॥

---

## अथ षन्नवत्यधिकद्विशततमोऽध्यायः ।

---

### विषहृन्मन्त्रौषधं ।

अग्निरुवाच । ओँ नमो भगवते रुद्राय छिन्द २ विषं ज्वलितपरशुपाणये च । नमो भगवते पक्षिरुद्राय दष्टकं उत्थापय २ दष्टकं कम्पय २ जल्पय २ सर्प्पदष्टमुत्थापय लल २ बन्ध २ मोचय २ वररुद्र गच्छ २ बध २ त्रुट २ बुक २ भीषय २ मुष्टिना संहर विषं ठ ठ ।

---

१ ॐ ह्रां ह्रीं ह्रूमिति ख० ।

२ ॐ ह्रौँ ह्रँ इति ख० ।

३ चण्डिका इति ख० ।

पक्षिरुद्रेण ह विषं नाशमायाति मन्त्रणात् ।

ॐ नमो भगवते रुद्र नाशय विषं स्थावरजङ्गमं कृत्रिमाकृत्रिमविषमुपविषं नाशय नानाविषं दष्टकविषं नाशय धम २ दम २ वम २ मेघान्धकारधाराकर्षनिर्विषयीभव संहर २ गच्छ२ आवेशय २ विषोत्थापनरूपं मन्त्रान्ताद्विषधारणं ॐ क्षिप ॐ क्षिप स्वाहा ।

ॐ क्रां क्रीं खीं सः ठन्द्रीं क्रीं ठः ।
जपादिना साधितस्तु सर्पान् बध्नाति नित्यशः ॥ १ ॥
एकद्वित्रिचतुर्बीजः कृष्णचक्राङ्गपञ्चकः ।
गोपीजनवल्लभाय स्वाहा सर्वार्थसाधकः ॥ २ ॥

ओं नमो भगवते रुद्राय प्रेताधिपतये गुल्व २(१) गर्ज्ज २ भ्रामय २ मुञ्च २ मुह्य २ कट २ आविश २ सुवर्णपतङ्ग रुद्रो ज्ञापयति ठ २ ।

पातालक्षोभमन्त्रोयं मन्त्रणाद्विषनाशनः ।
दंशकाद्विर्दंशे सद्यो दष्टः काष्ठशिलादिना ॥ ३ ॥
विषशान्त्यै दहेद्दंशं ज्वालकोकनदादिना(२) ।
शिरीषवीजपुष्पार्कक्षीरवीजकटुत्रयं ॥ ४ ॥
विषं विनाशयेत् पानलेपनेनाञ्जनादिना ।
शिरीषपुष्पस्य रसभावितं मरिचं सितं ॥ ५ ॥
पाननस्याञ्जनाद्यैश्च विषं हन्यान्न संशयः ।
कोषातकीवचाहिङ्गु शिरीषार्कपयोयुतं ॥ ६ ॥

---

१ गुल्ल १ इति ख० ।
२ ज्वालकोकनदादिभिरिति ख० ।

कुटुत्रयं समैषाभो हरेन्नस्यादिना विषं।
रामठेक्ष्वाकुसर्वाङ्गचूर्णं नस्याद्विषापहं॥ ७॥
इन्द्रवलाग्निकन्द्रोणं तुलसी देविका सहा।
तद्रसाक्तं त्रिकटुकं चूर्णञ्चाखुविषापहं।
पञ्चाङ्गं कृष्णपञ्चम्यां शिरीषस्य विषापहं॥ ८॥

इत्याग्नेये महापुराणे विषहृन्मन्त्रौषधं नाम षन्नवत्यधिक-द्विशततमोऽध्यायः।

---

## अथ सप्तनवत्यधिकद्विशततमोऽध्यायः।

---

### गोनसादिचिकित्सा।

अग्निरुवाच। गोनसादिचिकित्साञ्च वशिष्ठ शृणु वच्मि ते।
क्रौं क्रौं अमलपक्षि स्वाहा।
ताम्बूलखादनान्मन्त्री हरेन्मण्डलिनो विषं॥ १॥
लशुनं रामठफलं कुष्ठाग्निव्योषकं विषे।
स्नुहीक्षीरं गव्यघृतं पक्वं पीत्वाऽहिजे विषे॥ २॥
अथ राजिलदष्टे च पेया कृष्णा ससैन्धवा।
आज्यक्षौद्रशकृत्तोयं पुरीतत्या विषापहं॥ ३॥
मकृष्णाखण्डदुग्धाज्यं पातव्यन्तेन माक्षिकं।
व्योषं पिच्छं विडालास्थि नकुलाङ्गरुहैः समैः॥ ४॥
चर्णितैर्मेषदुग्धाक्तैर्धूपः सर्वविषापहः।

रोमनिर्गुण्डिकाकोलवर्णैर्वा लशुनं समं ॥ ५ ॥
मुनिपत्रैः क्ततस्वेदं दष्टं काञ्जिकपाचितैः ।
मूषिकाः षोडश प्रोक्ता रसङ्कार्पासजम्पिवेत् ॥ ६ ॥
सतैलं मूषिकार्त्तिघ्नं फलिनीकुसुमन्तथा ।
सनागरगुडभक्ष्यं तद्विषारोचकापहं ॥ ७ ॥
चिकित्सा विंशतिर्भूता लूताविषहरो गणः ।
पद्मकं पाटली कुष्ठं नतमूशीरचन्दनं ॥ ८ ॥
निर्गुण्डी शारिवा शेलु लूतार्त्तं सेचयेज्जलैः ।
गुञ्जानिर्गुण्डिकङ्कोलपर्णं शुण्ठी निशाद्वयं ॥ ९ ॥
करञ्जास्थि च तत्पङ्कैः(१) वृश्चिकार्त्तिहरं शृणु ।
मञ्जिष्ठा चन्दनं व्योषपुष्पं शिरीषकौमुदं ॥ १० ॥
संयोज्यायतुरो योगा लेपादौ वृश्चिकापहाः ।

ॐ नमो भगवते रुद्राय चिवि २(२) छिन्द २ किरि २ भिन्द २ खड्गेन छेदय २ शूलेन भेदय २ चक्रेण दारय २ ॐ ह्रूं फट् ।

मन्त्रेण मन्त्रितो देयो गर्द्दभादौविक्रन्तति ॥ ११ ॥
त्रिफलोशीरमुस्ताम्बुमांसीपद्मकचन्दनं ।
अजाक्षीरेण पानादेर्गर्द्दभादेर्विषं हरेत् ॥ १२ ॥
हरेत् शिरीषपञ्चाङ्गं व्योषं शतपदीविषं ।
सकाञ्चरं शिरीषास्थि हरेदुन्दुरजं विषं ॥ १३ ॥
व्योषं ससर्पिः पिण्डीतमूलमस्य विषं हरेत् ।

---

१ तत्पत्रैरिति ज०; ज०, ठ० च ।

२ चिरि २ इति ज० ।

चारव्योषवचाहिङ्गु विडङ्गं सैन्धवन्नतं ॥ १४ ॥
अम्बष्ठातिबलाकुष्ठं सर्वकीटविषं हरेत् ।
यष्टिव्योषगुडक्षीरयोगः(१) शुनो विषापहः ॥ १५ ॥
ॐ सुभद्रायै नमः ॐ सुप्रभायै नमः ।
यान्यौषधानि गृह्यन्ते विधानेन विना जनैः ॥ १६ ॥
तेषां वीजन्त्वया माह्यमिति ब्रह्माऽब्रवीच्च ताम् ।
ताम्प्रणम्यौषधीम्पश्चात् यवान् प्रक्षिप्य मुष्टिना । ॥ १७ ॥
इम जप्वा मन्त्रमिदं नमस्कुर्य्यात्तदौषधं ।
त्वामुद्धराम्यूर्द्धनेत्रामनेनैव च भक्षयेत् ॥ १८ ॥
नमः पुरुषसिंहाय नमो गोपालकाय च ।
आत्मनैवाभिजानाति रणे कृष्णपराजयं ॥ १९ ॥
एतेन सत्यवाक्येन अगदो मेऽस्तु सिध्यतु ।

नमो वैदूर्य्यमाते तत्र २ रक्ष मां सर्वविषेभ्यो गौरि गान्धारि चाण्डालि मातङ्गिनि स्वाहा हरिमाये।

औषधादौ प्रयोक्तव्यो मन्त्रोऽयं स्थावरे विषे ॥ २० ॥
भुक्तमात्रे स्थिते ज्वाले पद्मं शीताम्बु सेवितं ।
पाययेत्सघृतं क्षौद्रं विषघ्नमदनन्तरं ॥ २१ ॥

इत्याग्नेये महापुराणे गोनसादिचिकित्सा नाम सप्तनवत्यधिकद्विशततमोऽध्यायः ।

---

१ यष्टिव्योषगुडक्षीरयोग इति क०, ग०, घ०, ङ० च ।

# अथाष्टनवत्यधिकद्विशततमोऽध्यायः ।

———000———

## बालग्रहहरबालतन्त्रम् ।

अग्निरुवाच । बालतन्त्रं प्रवक्ष्यामि बालादिग्रहमर्द्दनं ।
अथ जातदिने वत्सं ग्रही गृह्णाति पापिनी ॥ १ ॥
गात्रोद्वेगो निराहारो नानाग्रीवाविवर्त्तनं ।
तच्चेष्टितमिदं तस्यास्मातृणाञ्च बलं हरेत् ॥ २ ॥
मत्स्यमांससुराभक्ष्यगन्धस्रग्धूपदीपकैः ।
लिम्पेच्च धातकीलोध्रमञ्जिष्ठातालचन्दनैः ॥ ३ ॥
महिषाक्षेण धूपश्च द्विरात्रे भीषणी ग्रही ।
तच्चेष्टा कासनिश्वासौ गात्रसङ्कोचनं मुहुः ॥ ४ ॥
अजमूत्रैर्लिपेत् कृष्णासेव्यापामार्गचन्दनैः ।
गोशृङ्गदन्तकेशैश्च धूपयेत् पूर्ववद्बलिः ॥ ५ ॥
ग्रही त्रिरात्रे घण्टाली तच्चेष्टा क्रन्दनं मुहुः ।
जृम्भणं स्वनितन्त्रासौ गात्रोद्वेगमरोचनं ॥ ६ ॥
केशराञ्जनगोहस्तिदन्तं साजपयो लिपेत् ।
नखराजीविल्वदलैर्धूपयेच्च बलिं हरेत् ॥ ७ ॥
ग्रही चतुर्थीं काकोली गात्रोद्वेगप्ररोचनं ।
फेनोद्गारो दिशो दृष्टिः कुल्माषैः सासवैर्बलिः ॥ ८ ॥
गजदन्ताहिनिर्म्मोकवाजिमूत्रप्रलेपनं ।
सराजीनिम्बपत्रेण धूतकेशेन धूपयेत् ॥ ९ ॥
हंसाधिका पञ्चमी स्याज्जृम्भाश्वासोर्द्धधारिणी ।

मुष्टिबन्धश्च तच्चेष्टा बलिं मत्स्यादिना हरेत् ॥ १० ॥
मेषशृङ्गबलालोध्रशिलातालैः शिशुं लिपेत् ।
फट्कारी तु ग्रही षष्ठी भयमोहप्ररोदनं ॥ ११ ॥
निराहारोऽङ्गविक्षेपो हरेन्मत्स्यादिना बलिं ।
राजीगुग्गुलकुष्ठेभदन्ताद्यैर्धूपलेपनैः ॥ १२ ॥
सप्तमे मुक्तकेशार्त्तः पूतिगन्धो विजृम्भणं ।
सादः प्ररोदनङ्कासो धूपो व्याघ्रनखैर्लिपेत् ॥ १३ ॥
वचागोमयगोमूत्रैः श्रीदण्डी चाष्टमे ग्रही ।
दिशो निरीक्षणं जिह्वाचालनङ्कासरोदनं ॥ १४ ॥
बलिः पूर्ववं मत्स्याद्यैर्धूपलेपे च(१) हिङ्गुना ।
वचासिद्धार्थलशुनैर्थोर्द्ध्वग्राही महाग्रही ॥ १५ ॥
उद्वेजनोर्द्धनिःश्वासः स्वमुष्टिद्वयखादनं ।
रक्तचन्दनकुष्ठाद्यैर्धूपयेल्लेपयेच्छिशुं ॥ १६ ॥
कपिरोमनखैर्धूपो दशमी रोदनी ग्रही ।
तच्चेष्टा रोदनं शश्वत् सुगन्धो नीलवर्णता॥ १७ ॥
धूपो निम्बेन भूतोग्रराजीसर्ज्जरसैर्लिपेत् ।
बलिं बहिर्हरेल्लाजकुल्माषकवकौदनम्(२) ॥ १८ ॥
यायत्त्रयोदशाहं स्यादेवं धूपादिका क्रिया ।
गृह्णाति मासिकं वत्सं पूतनासकुली ग्रही ॥ १९ ॥
काकवद्रोदनं श्वासो मूत्रगन्धोऽक्षिमीलनं ।
गोमूत्रस्नपनं तस्य गोदन्तेन च धूपनम् ॥ २० ॥

---

१ धूपदीपे चेति ट० ।
२ कारकौदनमिति ख० ।

पीतवस्त्रं ददेद्रक्तस्रग्गन्धौ तैलदीपकः ।
त्रिविधं पायसन्नाद्यं तिलमासञ्चतुर्व्विधम् ॥ २१ ॥
करञ्जाधो यमदिशि सप्ताहं तैर्बलिं हरेत् ।
द्विमासिकञ्च मुकुटा वपुः शीतञ्च शीतलं ॥ २२ ॥
छर्द्दिः स्यान्मुखशोषादिपुष्पगन्धांशुकानि च ।
अपूपमोदनं दीपः कृष्णं नीरादि धूपकम् ॥ २३ ॥
तृतीये गोमुखी निद्रा सविन्मूत्रप्ररोदनम् ।
यवाः प्रियङ्गुः पललं कुल्माषं शाकमोदनम् ॥ २४ ॥
क्षीरं पूर्व्वे ददेन्मध्येऽहनि धूपश्च सर्पिषा ।
पञ्चभङ्गेन तत् स्नानं चतुर्थे पिङ्गलार्त्तिहृत् ॥ २५ ॥
तनुः शीता पूतिगन्धः शोषः स म्रियते ध्रुवम् ।
पञ्चमी ललना गात्रसादः स्यान्मुखशोषणं ॥ २६ ॥
अपानः पीतवर्णश्च मत्स्याद्यैर्द्दक्षिणे बलिः ।
षण्मासे पङ्कजा चेष्टा रोदनं विकृतः स्वरः ॥ २७ ॥
मत्स्यमांससुराभक्तपुष्पगन्धादिभिर्बलिः ।
सप्तमे तु निराहारा पूतिगन्धादिदन्तरुक् ॥ २८ ॥
पिष्टमांससुरामांसैर्बलिः स्याद्यमुनाष्टमे ।
विस्फोटशोषणाद्यं स्यात् तच्चिकित्सान्न कारयेत् ॥ २९ ॥
नवमे कुम्भकर्ण्यार्त्तौ ज्वरो च्छर्द्दति पालकम् ।
रोदनं मांसकुल्माषमद्याद्यैर्व्वैश्वके बलिः ॥ ३० ॥
दशमे तापसी चेष्टा निराहारोऽक्षिमीलनम् ।
घण्टा पताका पिष्टोक्ता सुरामांसबलिः समे ॥ ३१ ॥
राक्षस्येकादशी पीड़ा नेत्राद्यं न चिकित्सनम् ।

चञ्चला द्वादशे श्वासः त्रासादिकविचेष्टितम् ॥ ३२ ॥
बलिः पूर्वेऽथ मध्याह्ने कुल्माषाद्यैस्तिलादिभिः ।
यातना तु द्वितीयेऽब्दे यातनं रोदनादिकम् ॥ ३३ ॥
तिलमांसमद्यमांसैर्बलिः स्नानादि पूर्ववत् ।
तृतीये रोदनी कम्पो रोदनं रक्तमूत्रकं ॥ ३४ ॥
गुडौदनं तिलापूपः प्रतिमा तिलपिष्टजा ।
तिलस्नानं पञ्चपत्रैर्धूपो राजफलत्वचा ॥ ३५ ॥
चतुर्थे चटकाशोफो ज्वरः सर्वाङ्गसादनम् ।
मत्स्यमांसतिलाद्यैश्च बलिः स्नानञ्च धूपनम् ॥ ३६ ॥
चञ्चला पञ्चमेऽब्दे तु ज्वरस्त्रासोऽङ्गसादनम् ।
मांसौदनाद्यैश्च बलिर्मेषशृङ्गेण धूपनम् ॥ ३७ ॥
पलाशोदुम्बराश्वत्थवटबिल्वदलाम्बुधृक् ।
षष्ठेऽब्दे धावनीशोषो वैरस्यं(१) गात्रसादनम् ॥ ३८ ॥
सप्ताहोभिर्बलिः पूर्वैर्धूपस्नानञ्च भञ्जकैः(२) ।
सप्तमे यमुनाच्छर्दिरवनोहासरोदनम् ॥ ३९ ॥
मांसपायसमद्याद्यैर्बलिः स्नानञ्च धूपनम् ।
अष्टमे वा जातवेदा निराहारं प्ररोदनम् ॥ ४० ॥
कृशरापूपदध्याद्यैर्बलिः स्नानञ्च धूपनम् ।
कालाब्दे नवमे वार्त्तास्फोटा गर्जनं भयम् ॥ ४१ ॥
बलिः स्यात् कृशरापूपशक्तुकुल्माषपायसैः ।
दशमेऽब्दे कलहंसी दाहोऽङ्गकृशता ज्वरः ॥ ४२ ॥

---

१ वैवर्ण्यमिति ङ० ।
२ भागकैरिति ख० ।

पौलिकापपद्मपत्रैः पञ्चरात्रं बलिं हरेत् ।
निम्बधूपकुष्ठलेप एकादशमके ग्रही ॥ ४३ ॥
देवदूती निष्ठुरवाक् बलिर्लेपादि पूर्ववत् ।
बलिका द्वादशे श्वासो बलिर्लेपादि पूर्ववत् ॥ ४४ ॥
त्रयोदशे वायवी च मुखवाह्याङ्गसादनम् ।
रक्तान्नगन्धमाल्याद्यैर्बलिः पञ्चदलैः स्नपेत् ॥ ४५ ॥
राजीनिम्बदलैर्धूपो यक्षिणी च चतुर्दशे ।
चेष्टा शूलं ज्वरो दाहो मांसभक्षादिकैर्बलिः ॥ ४६ ॥
स्नानादि पूर्ववच्छान्त्यै मुण्डिकाख्यस्त्रिपञ्चके ।
तच्चेष्टासृक्स्रवः शश्वन्कुर्य्यान्मातृचिकित्सनम् ॥ ४७ ॥
वानरी षोडशी भूमौ पतेन्निद्रा सदा ज्वरः ।
पायसाद्यैस्त्रिरात्रञ्च बलिः स्नानादि पूर्ववत् ॥ ४८ ॥
गन्धवती सप्तदशे गात्रोद्वेगः प्ररोदनम् ।
कुल्माषाद्यैर्बलिः स्नानधूपलेपादि पूर्ववत् ॥ ४९ ॥
दिनेशाः पूतना नाम वर्षेशाः सुकुमारिकाः ।

ओं नमः सर्वमातृभ्यो बालपीड़ासंयोगं भुञ्ज भुञ्ज चुट चुट स्फोटय स्फोटय स्फुर स्फुर गृह्ण गृह्ण आकट्टय आकट्टय एवं सिद्धरूपो ज्ञापयति । हर हर निर्दोषं कुरु कुरु बालिकां बालं स्त्रियम् पुरुषं वा सर्वग्रहाणामुपक्रमात् ।

चामुण्डे नमो देव्यै ह्रूं ह्रूं ह्रीं अपसर अपसर दुष्टग्रहान् ह्रूं तद्यथा गच्छन्तु गृह्यकाः अन्यत्र पन्थानं रुद्रो ज्ञापयति ।

सर्वबालग्रहेषु स्यान्मन्त्रोऽयं सर्वकामिकः ॥ ५० ॥

ओं नमो भगवति चामुण्डे मुञ्च मुञ्च बलिं बालिकां वा ।

बलिं गृह्ण गृह्ण जय जय वस वस।
सर्व्वत्र बलिदानेऽयं रक्षाकृत् पठति मनुः।
ब्रह्मा विष्णुः शिवः स्कन्दो गौरी लक्ष्मीर्गणादयः।
रक्षन्तु च ज्वराभ्यान्तं मुञ्चन्तु च कुमारकम्॥ ५१॥
इत्याग्नेये महापुराणे बालग्रहहरं बालतन्त्रं नाम
अष्टनवत्यधिकद्विशततमोऽध्यायः।

## अथ नवनवत्यधिकद्विशततमोऽध्यायः।

### ग्रहहृन्मन्त्रादिकम्।

अग्निरुवाच। ग्रहापहारमन्त्रादीन् वक्ष्ये ग्रहविमर्द्दनान्।
हर्षेच्छाभयशोकादिविरुद्धाशुचिभोजनात्॥ १॥
गुरुदेवादिकोपाच्च पञ्चोन्मादा भवन्त्यथ।
त्रिदोषजा* सन्निपाता आगन्तुरिति ते स्मृताः॥ २॥
देवादयो ग्रहा जाता रुद्रक्रोधादनेकधा।
सरित्सरस्तडागादौ शैलोपवनसेतुषु॥ ३॥
नदीसङ्गे शून्यगृहे बिलद्वार्य्येकवृक्षके।
ग्रहा गृह्णन्ति पुंसश्च स्त्रियः(१) सुप्ताश्च गर्भिणीम्॥ ४॥
आसन्नपुष्पान्नग्नाश्च ऋतुस्नानं करोति या।
अवमानं नृणां वैरं विघ्नं भाग्यविपर्य्ययः॥ ५॥
देवतागुरुधर्म्मादिसदाचारादिलङ्घनम्।

* त्रिदोष इति ञ॰, ट॰ च।

पतनं शेलवृक्षादेर्विधुन्वन्मूर्द्धजं मुहुः ॥ ६ ॥
रुदन्नृत्यति रक्ताक्षो ग्रं कपोऽनुग्रही नरः ।
उद्विग्नः शूलदाहार्त्तः क्षुत्तृष्णार्त्तः शिरोर्त्तिमान् ॥ ७ ॥
देहि देहीति याचेत बलिकामग्रही नरः ।
स्त्रीमालाभोगस्नानेच्छू रतिकामग्रही नरः ॥ ८ ॥
महासुदर्शनो व्योमव्यापी विटपनासिकः(१) ।
पातालनारसिंहाद्या चण्डीमन्त्रा ग्रहार्दनाः ॥ ९ ॥
धृस्रोहिङ्गुवचाचक्रशिरीषदयितम्परम् ।
पाशाङ्कुशधरं देवमक्षमालाकपालिनम् ॥ १० ॥
खट्वाङ्गाब्जादिशक्तिञ्च दधानं चतुराननम् ।
अन्तर्वीजादिखट्वाङ्गपद्मस्थं रविमण्डले ॥ ११ ॥
आदित्यादियुतं प्राच्य उदितेर्कोऽर्धार्कं ददेत् ।
स्नामस्त्रिपाग्निविप्रकुण्डीचक्रलेखासकर्त्ता भृगुः ॥ १२ ॥
अर्काय भूर्भुवःस्वश्च ज्वालिनीं कुलमुद्गरम् ।
पद्मासनोऽरुणो रक्तवस्त्रसद्युतिविग्रहकः ॥ १३ ॥
उदारः पद्मधृग्दोर्भ्यां सौम्यः सर्वाङ्गभूषितः ।
रक्ता हृदादयः सौम्या वरदाः पद्मधारिणः ॥ १४ ॥
विद्युत्पुञ्जनिभं वस्त्रं श्वेतः सौम्योऽरुणः कुजः ।
बुधस्तद्वद्गुरुः पीतः शुक्लः शुक्रः शनैश्चरः ॥ १५ ॥
कृष्णाङ्गारनिभो राहुर्धूम्रः केतुरुदाहृतः ।
वामोरुवामहस्तान्ते दक्षहस्ताभयप्रदा ॥ १६ ॥
स्वनामाद्यन्तु बीजास्ते हस्तौ संशोध्य चास्त्रतः ।

---

१ विपिटनासिक इति ञ० ।

अङ्गुष्ठादौ तले नेत्रे हृदाद्यं व्यापकं न्यसेत् ॥ १७ ॥
मूलबीजैस्त्रिभिः प्राणायामं कृत्वा साङ्गकम् ।
प्रक्षाल्य पात्रमस्त्रेण मूलेनापूर्य वारिणा ॥ १८ ॥
गन्धपुष्पाक्षतं न्यस्य दूर्व्वामर्घाञ्च मन्त्रयेत् ।
आत्मानं तेन सम्प्रोक्ष्य पूजाद्रव्यञ्च वै भुवम् ॥ १९ ॥
प्रभूतं विमलं सारमाराध्यं परमं सुखम् ।
पीठाद्यान् कल्पयेदेतान् हृदा मध्ये विदिक्षु च ॥ २० ॥
पीठोपरि हृदा मध्ये दिक्षु चैव विदिक्षु च ।
पीठोपरि हृदाब्जञ्च केशवेष्वष्टशक्तयः ॥ २१ ॥
वां दीप्तां वीं तथा सूक्ष्मां वुञ्जयां वूञ्च भद्रिकां ।
वें विभूतीं वैं विमलां वोममिघार्तविद्युताम् ॥ २२ ॥
वौं सर्वतोमुखीं वं पीठं वः प्रार्थ्य रविं यजेत् ।
आवाह्य दद्यात् पाद्यादि हृत्पङ्क्तेन सुव्रत ॥ २३ ॥
खकारौ दण्डिनौ चण्डौ मज्जा दशनसंयुता ।
मांसदीर्घा जरद्वायुहृदेतत् सर्वदं रवेः ॥ २४ ॥
वह्नीशरक्षो मरुतां दिक्षु पूज्या हृदादयः ।
स्वमन्त्रैःकर्णिकान्तस्था दिक्ष्वस्त्रं पुरतः सट्टक् ॥ २५ ॥
पूर्व्वादिदिक्षु सम्पूज्याश्चन्द्रज्ञगुरुभार्गवाः ।
नस्याञ्जनादि कुर्वीत मांजमन्त्रैर्ग्रहापहैः ॥ २६ ॥
पाठापथ्यावचाशिग्रुसिन्धूव्योषैः पृथक् फलैः ।
अजाक्षीराढके पक्वसर्पिः सर्वग्रहान् हरेत् ॥ २७ ॥
वृश्चिकालीफलीकुष्ठं लवणानि च शार्ङ्गकम् ।
अपस्मारविनाशाय तज्जलं त्वभिभोजयेत् ॥ २८ ॥

विदारीकुशकाशेक्षुक्काथजं पाययेत् पयः ।
द्राणे सयष्टिकुष्माण्डरसे सर्पिश्च संस्कृतौ ॥ २९ ॥
पञ्चगव्यं घृतं तद्वद्योगं ज्वरहरं शृणु ।
ओं भस्मास्त्राय विद्महे एकदंष्ट्राय
धीमहि तन्नो ज्वरः प्रचोदयात् ।
कृष्णोपणनिशारास्नाद्राक्षातैलं गुडं लिहेत् ॥ ३० ॥
श्वासवानथ वा भार्गीं सयष्टिमधुसर्पिषा ।
पाठा तिक्ता कणा भार्गी अथवा मधुना लिहेत् ॥ ३१ ॥
धात्री विश्वसिता कृष्णा मुस्ता खर्जूरमागधी ।
पिवरश्चेति हिक्काघ्नं तत् त्रयं मधुना लिहेत् ॥ ३२ ॥
कामली जीरमाण्डूकीनिशाधात्रीरसं पिवेत् ।
व्योषपद्मकत्रिफलाविडङ्गदेवदारवः ।
रास्नाचूर्णं समं खण्डैर्जग्ध्वा कासहरं ध्रुवम् ॥ ३३ ॥
इत्याग्नेये महापुराणे ग्रहहृन्मन्त्रादिकं नाम
नवनवत्यधिकद्विशततमोऽध्यायः ॥

---

## अथ त्रिशततमोऽध्यायः ।

### सूर्य्यार्च्चनम् ।

अग्निरुवाच । शय्या तु दण्डिसाजेशपावकश्चतुराननः ।
सर्व्वार्थसाधकमिदं बीजं पिण्डार्थमुच्यते ॥ १ ॥
स्वयं दीर्घस्वराद्यञ्च बीजेष्वङ्गानि सर्वशः ।
ख्यातं साधु त्रिपञ्चैव सबिन्दुं सकलं तथा ॥ २ ॥

गणस्य पञ्च बीजानि पृथगिष्टफलं महत् ।

गणं जयाय नमः एकदंष्ट्राय अचल-

कर्णिने गजवक्त्राय महोदरहस्ताय ।

पञ्चाङ्गं सर्व्वसामान्यं सिद्धिः स्याल्लक्षजाप्यतः ॥ ३ ॥

गणाधिपतये गणेश्वराय गणनायकाय गणक्रीडाय ।

द्विग्दले पूजयेन्मूर्त्तीः पुरावच्चाङ्गपञ्चकम् ।

वक्रतुण्डाय एकदंष्ट्राय महोदराय गजवक्त्राय ।

विकटाय विघ्नराजाय धूम्रवर्णाय ।

दिग्विदिक्षु यजेदेतांल्लोकांशांश्चैव मुद्रया ॥ ४ ॥

मध्यमातर्ज्जनीमध्यगताङ्गुष्ठौ समुष्टिकौ ।

चतुर्भुजो मोदकाढ्यो दण्डपाशाङ्कुशान्वितः ॥ ५ ॥

दन्तभक्षधरं रक्तं साब्जं पाशाङ्कुशैर्युतम् ।

पूजयेत्तं चतुर्थ्याञ्च विशेषेणाथ नित्यशः ॥ ६ ॥

श्वेतार्कमूलेन कृतं सर्व्वाप्तिः स्यात्तिलैर्घृतैः ।

तण्डुलैर्दधिमध्वाज्यैः सौभाग्यं वश्यता भवेत् ॥ ७ ॥

घोषासृक्प्राणधात्वर्द्दी दण्डी मार्त्तण्डभैरवः ।

धर्म्मार्थकाममोक्षाणां कर्त्ता विश्वपुटावृतः ॥ ८ ॥

कृत्वाः स्युर्मूर्त्तयः पञ्च दीर्घा अङ्गानि तस्य च ।

सिन्दूरारुणमीशाने वामार्द्धदयितं रविं ॥ ९ ॥

आग्नेयादिषु कोणेषु कुजमन्दाहिकेतवः ।

ज्ञात्वा विधिवदादित्यमाराध्यार्घपुरःसरं ॥ १० ॥

कृतान्तमैशे निर्म्माल्यं तेजश्चण्डाय दीपितं ।

रोचना कुङ्कुमं वारि रक्तगन्धाक्षताङ्कुराः ॥ ११ ॥

वेणुबीजयवाः शालिश्यामाकतिलराजिकाः ।
जवापुष्पान्वितां दत्वा पात्रैः शिरसि धार्य्य तत्(१) ॥१२॥
जानुभ्यामवनीङ्गत्वा सूर्य्यायार्घं निवेदयेत् ।
स्वविद्यामन्त्रितैः कुम्भैर्नवभिः प्राच्य वै ग्रहान् ॥ १३ ॥
ग्रहादिशान्तये स्नानं जप्तार्कं सर्वमाप्नुयात् ।
संग्रामविजयं साग्नि बीजदीषं सबिन्दुकं ॥ १४ ॥
न्यस्य मूर्द्धादिपादान्तं मूलं पूज्य तु मुद्रया ।
स्वाङ्गानि च यथान्यासमात्मानं भावयेद्रविं ॥ १५ ॥
ध्यानञ्च मारणस्तम्भे पीतमाप्यायने सितम् ।
रिपुघातविधौ(२) कृष्णं मोहयेच्छक्रचापवत् ॥ १६ ॥
योऽभिषेकजपध्यानपूजाहोमपरः सदा ।
तेजस्वी स्वजयः श्रीमान् समुद्रादौ जयं लभेत् ॥ १७ ॥
ताम्बूलादाविदं न्यस्य जप्ता दद्यादुशीरकं ।
न्यस्तबीजेन हस्तेन स्पर्शनं तद्वशे स्मृतं ॥ २८ ॥
इत्याग्नेये महापुराणे सूर्य्यार्च्चनं नाम त्रिशततमोऽध्यायः ॥

---

## अथैकाधिकत्रिशततमोऽध्यायः ।

———000@000———

नानामन्त्राः ।

अग्निरुवाच । वाक्कर्म्मपार्श्वयुक्शुक्रतोकक्रते मतो प्लवः ।
हुताश्ना देशवर्ण्ययं विद्या मुख्या सरस्वती ॥ १ ॥

---

१ धार्य्यं चेति ख० ।

२ रिपुघातविधाविति ध०, ज०, क०, ङ० च ।

अष्टाराग्नौ वर्णलक्षं जपेत् स मतिमान् भवेत् ।
अत्रिः सवङ्क्रिर्वामाक्षिबिन्दुरिन्द्राय हृत्परः ॥ २ ॥
वज्रपद्मधरं शक्रं पीतमावाह्य पूजयेत् ।
नियुतं होमयेदाज्यतिलांस्तेनाभिषेचयेत् ॥ ३ ॥
नृपादिर्भ्रष्टराज्यादीन्राज्यपुत्रादिमाप्नुयात् ।
हृल्लेखा शक्तिदेवाख्या दोषाग्निर्दण्डिदण्डवान् ॥ ४ ॥
शिवमिष्ट्वा जपेच्छक्तिमष्टम्यादिचतुर्दशीं ।
चक्रपाशाङ्कुशधरां साभयां वरदायिकां ॥ ५ ॥
होमादिना च सौभाग्यं कवित्वं पुत्रवान् भवेत् ।
ओं क्लीं ओं नमः कामाय सर्व्वजनहिताय सर्व्वजनमोह-
नाय प्रज्वलिताय सर्व्वजनहृदयं ममात्मगतं कुरु२ ओं ।
एतज्जपादिना मन्त्रो वशयेत् सकलं जगत् ॥ ६ ॥
ओं ह्रीं चामुण्डे अमुकन्दह२ पच२ मम वशमानय२ ठ२ ।
वशीकरणकृन्मन्त्रश्चामुण्डायाः प्रकीर्त्तितः ।
फलत्रयकषायेण वराङ्गं क्षालयेद्वशे ॥ ७ ॥
अश्वगन्धायवैः स्त्री तु निशाकर्पूरकादिना ।
पिप्पलीतण्डुलान्यष्टौ मरिचानि च विंशतिः ॥ ८ ॥
बृहतीरसलेपश्च वशे स्यान्मरणान्तिकं ।
कटीरमूलत्रिकटुक्षौद्रलेपस्तथा भवेत् ॥ ९ ॥
हिमं कपित्थकरसं मागधी मधुकं मधु ।
तेषां लेपः प्रयुक्तस्तु दम्पत्योः स्वस्तिमावहेत् ॥ १० ॥
सशर्करयोनिलेपात् कदम्बरसको मधु ।
सहदेवी महालक्ष्मीः पुत्रजीवी कृताञ्जलिः ॥ ११ ॥

एतच्चूर्णं शिरःक्षिप्तं लोकस्य वशमुत्तमम् ।
त्रिफलाचन्दनक्वाथप्रस्था द्विकुडवम् पृथक् ॥ १२ ॥
भृङ्गहेमरसन्दोषातावती चुञ्चुकं मधु ।
घृतैः पक्वा निशा छाया शुष्का लोप्या तु रञ्जनी ॥ १३ ॥
विदारीं सोच्चटामाषचूर्णीभूतां सशर्करां ।
मथितां यः पिवेत् क्षीरैर्नित्यं स्त्रीशतकं व्रजेत् ॥ १४ ॥
गुल्ममाषतिलव्रीहिचूर्णक्षीरसितान्वितं ।
अश्वत्थवंशदर्भाणां मूलं वै वैष्णवीश्रियोः ॥ १५ ॥
मूलं दूर्व्वाश्वगन्धोत्थं पिवेत् क्षीरैः सुतार्थिनी ।
कौम्मीलक्ष्मणः शिफा धात्री वज्रं लोध्रं वटाङ्कुरम् ॥१६॥
आज्यक्षीरमृतौ पेयं पुत्रार्थं त्रिदिवं स्त्रिया ।
पुत्रार्थिनी पिवेत् क्षीरं श्रीमूलं सवटाङ्कुरम् ॥ १७ ॥
श्रीवटाङ्कुरदेवीनां रसं नस्ये पिवेच्च सा ।
श्रीपद्ममूलमुत्क्षीरमश्वत्थोत्तरमूलयुक् ॥ १८ ॥
तरलं पयसा युक्तं कार्पासफलपल्लवं ।
अपामार्गस्य पुष्पाग्रं नवं समहिषीपयः ॥ १९ ॥
पुत्रार्थश्चाश्वषट्शाकैर्योगाश्चत्वार ईरिताः ।
शर्करोत्पलपुष्पाक्षलोध्रचन्दनसारिवाः ॥ २० ॥
स्रवमाणे स्त्रिया गर्भे दातव्यास्तण्डुलाम्भसा ।
लाजा यष्टिसिताद्राक्षाक्षौद्रसर्पींषि वा लिहेत् ॥ २१ ॥
पाटयष्ककलाङ्गुल्यः कोकमाच्याः शिफा पृथक् ।
नाभेरधः समालिप्य प्रसूते प्रमदा सुखम् ॥ २२ ॥
रक्तं शुक्लं जावापुष्पं रक्तशुक्लस्रुतौ पिवेत् ।

केशरं बृहतीमूलं गोपीयष्टिर्वृणोत्पलम् ॥ २३ ॥
साजचीरं सतैलं तं स्नानं रोमजन्मकृत् ।
शीर्य्यमाणेषु केशेषु स्थापनञ्च भवेदिदम् ॥ २४ ॥
धात्रीभृङ्गरसप्रस्थतैलञ्च चीरमाढकम् ।

ओँ नमो भगवते त्र्यम्बकाय उपशमय२ चुलु२ मिलि२ भिद२ गोमानिनि चक्रिणि ह्रूँ फट् ॥

अस्मिन् ग्रामे गोकुलस्य रक्षां कुरु२ शान्तिं कुरु२ ।
घण्टाकर्णो महासेनो वीरः प्रोक्तो महाबलः ॥ २५ ॥
मारीनिर्नाशनकरः स मां पातु जगत्पतिः ।
श्लोकौ चैव न्यसेदेतौ मन्त्रौ गोरक्षकौ पृथक् ॥ २६ ॥

इत्याग्नेये महापुराणे नानामन्त्रा नामैकाधिक-
त्रिशततमोऽध्यायः ॥

---

## अथ द्व्यधिकत्रिशततमोऽध्यायः ।

———ooo@ooo———

### अङ्गारवार्च्चनम् ।

अग्निरुवाच । यदा जन्मर्चगश्चन्द्रो भानुः सप्तमराशिगः ।
पौष्णः कालः स विज्ञेयस्तदा ग्रासं परीक्षयेत् ॥ १ ॥
कण्ठोष्ठौ चलतः स्थानाद्यस्य वक्रा च नासिका ।
कृष्णा च जिह्वा सप्ताहं जीवितं तस्य वै भवेत् ॥ २ ॥
तारो मेषो विषं दन्ती नरो दीर्घो घणा रसः ।
कूचोल्काय महोल्काय वीरोल्काय शिखा भवेत् ॥ ३ ॥

ह्युल्काय महासोल्काय वैष्णवोष्टाक्षरो मनुः ।
कनिष्ठादितदष्टानामङ्गुलीनाञ्च पर्वसु ॥ ४ ॥
ज्येष्ठाग्रेण क्रमात्तावन् मूर्द्धन्याष्टाक्षरं न्यसेत् ।
तर्ज्जन्यान्तारमङ्गुष्ठे लग्ने मध्यमया च तत् ॥ ५ ॥
तलेङ्गुष्ठे तदुच्चारं वीजोच्चारं ततो न्यसेत् ।
रक्तगौरधूम्रहरिज्जातरूपाः सितास्त्रयः ॥ ६ ॥
एवं रूपानिमान् वर्णान् भावबुद्धांश्चसेत् क्रमात् ।
हृदास्यनेत्रमूर्द्धाङ्घ्रितालुगुह्यकरादिषु(१) ॥ ७ ॥
अङ्गानि च न्यसेद्वीजाश्चस्याश्च करदेहयोः ।
यथात्मनि तथा देवे न्यासः कार्य्यः करं विना ॥ ८ ॥
हृदादिस्थानगान् वर्णान् गन्धपुष्पैः समर्च्चयेत् ।
धर्म्माद्यग्न्याद्यधर्मादि गात्रे पीठेऽम्बुजे न्यसेत् ॥ ९ ॥
यत्र केशरकिञ्जल्कव्यापिसूर्य्येन्दुदाहिनां ।
मण्डलन्त्रितयन्तावद् भेदैस्तत्र न्यसेत् क्रमात् ॥ १० ॥
गुणाश्च तत्त्वसत्त्वाद्याः केशरस्थाश्च शक्तयः ।
विमलोत्कर्षणीज्ञानक्रियायोगाश्च वै क्रमात् ॥ ११ ॥
प्रह्वी सत्या तथेशानानुग्रहा मध्यतस्ततः ।
योगपीठं समभ्यर्च्य समावाह्य हरिं यजेत् ॥ १२ ॥
पाद्यार्घ्याचमनीयञ्च पीतवस्त्रविभूषणं ।
एतत् पञ्चोपचारञ्च सर्व्वं मूलेन दीयते ॥ १३ ॥
वासुदेवादयः पूज्याश्चत्वारो दिक्षु मूर्त्तयः ।
विदिक्षु श्रीसरस्वत्यै रतिशान्त्यै च पूजयेत् ॥ १४ ॥

---

१ हृदास्यनेत्रमूर्द्धाङ्घ्रितालुगुह्यकरादिष्विति ख० ।

शङ्खं चक्रं गदां पद्मं मुषलं खड्गशार्ङ्गके ।
वनमालान्वितं दिक्षु विदिक्षु च यजेत् क्रमात् ॥ १५ ॥
अभ्यर्च्य च बहिस्तार्क्ष्यं देवस्य पुरतोऽर्च्चयेत् ।
विष्वक्सेनञ्च सोमेशं मध्ये आवरणाद्बहिः(१) ।
इन्द्रादिपरिवारेण पूज्य सर्व्वमवाप्नुयात् ॥ १६ ॥

इत्याग्नेये महापुराणे शङ्खाचरार्च्चनं नाम द्व्यधिक-
त्रिशततमोऽध्यायः ॥

---

## अथ त्र्यधिकत्रिशततमोऽध्यायः ।

---

### पञ्चाक्षरादिपूजामन्त्राः ।

अग्निरुवाच । मेषः संज्ञा विषं साज्यमस्ति दीर्घोदकं रसः ।
एतत् पञ्चाक्षरं मन्त्रं शिवदञ्च शिवात्मकं ॥ १ ॥
तारकादि समभ्यर्च्य देवत्वादि समाप्नुयात् ।
ज्ञानात्मकं परं ब्रह्म परं बुद्धिः शिवो हृदि ॥ २ ॥
तच्छक्तिभूतः सर्व्वगो भिन्नो ब्रह्मादिमूर्त्तिभिः ।
मन्त्रार्णाः पञ्च भूतानि तन्मन्त्रा विषयास्तथा ॥ ३ ॥
प्राणादिवायवः पञ्च ज्ञानकर्म्मेन्द्रियाणि च ।
सर्वं पञ्चाक्षरं ब्रह्म तद्वद्दष्टाक्षरात्मकः ॥ ४ ॥
गव्येन प्रच्यवेद्दीक्षाख्यानं मन्त्रेण चोदितं ।
तन्मन्त्रसम्भूतसम्भावः शिवमिष्ट्वा विधानतः ॥ ५ ॥

---

१ मध्येषु तीरवाद्वहिरिति ख०, ज०, ञ० च ।

मूलमूर्त्यङ्गविद्याभिस्तण्डुलक्षेपणादिकम् ।
कृत्वा चरुञ्च यत् क्षीरं पुनस्तद्विभजेत् त्रिधा ॥ ६ ॥
निवेद्यैकं परं हुत्वा सशिष्योऽन्यद्भजेद् गुरुः ।
आचम्य सकलीकृत्य दद्याच्छिष्याय देशिकः ॥ ७ ॥
दन्तकाष्ठं हृदा जप्तं क्षीरवृक्षादिसम्भवम् ।
संशोध्य दन्तान् संक्षिप्ता प्रक्षाल्यैतत् क्षिपेद्भुवि ॥ ८ ॥
पूर्व्वेण सौम्यवारीशगतं शुभमतो शुभम् ।
पुनस्तं शिष्यमायान्तं(१) शिखाबन्धादिरक्षितं ॥ ९ ॥
कृत्वा वेद्यां सहानेन स्वपेद्दर्भास्तरे बुधः ।
सुषुप्तं वीक्ष्य तं शिष्यः प्रभाते श्रावयेद्गुरुं ॥ १० ॥
शुभैः सिद्धिप्रदैर्भक्तिस्तैः पुनर्म्मण्डलार्चनम् ।
मण्डलं भद्रकाद्युक्तं पूजयेत्सर्व्वसिद्धिदं ॥ ११ ॥
स्नात्वाचम्य मृदा देहं मन्त्रैरालिप्य कल्पते ।
शिवतीर्थे नरः स्नायादघमर्षणपूर्वकम् ॥ १२ ॥
हस्ताभिषेकं कृत्वाथ यायात् पूजादिकं बुधः ।
मूलेनाशासनं कुर्य्यात्तेन पूरककुम्भकान् ॥ १३ ॥
आत्मानं योजयित्वोर्द्धं शिखान्ते द्वादशाङ्गुले ।
संशोष्य दग्ध्वा स्वतनुं प्लावयेदमृतेन च ॥ १४ ॥
ध्यात्वा दिव्यं वपुस्तस्मिन्नात्मानञ्च पुनर्नयेत् ।
कृत्वैवं चात्मशुद्धिः स्याद्दिव्यस्यार्च्चनमारभेत् ॥ १५ ॥
क्रमात् कृष्णसितश्यामरक्तपीता नगादयः ।
मन्त्राणां दक्षिणाङ्गानि तेषु सर्व्वास्तु मूर्त्तयः ॥ १६ ॥

---

१ शिष्यमायान्तमिति ञ० ।

अङ्गुष्ठादिकनिष्ठान्तं विन्यस्याङ्गानि सर्व्वतः।
न्यसेन्मन्त्राक्षरं पादगुह्यहृद्वक्त्रमूर्द्धसु ॥ १७ ॥
व्यापकं न्यस्य मूर्द्धादि मूलमङ्गानि विन्यसेत्।
रक्तपीतश्याममसितान् पीठपादान् स्वकालजाम् ॥ १८ ॥
स्वाङ्गान्मन्त्रैर्न्यसेद्गात्राण्यधर्म्मादीनि दिक्षु च।
तत्र पद्मञ्च सूर्य्यादिमण्डले त्रितयं गुणान् ॥ १९ ॥
पूर्व्वादिपत्रे कामाद्या नवकं कर्णिकोपरि।
वामा ज्येष्ठा क्रमाद्रौद्री काली कलविकारिणी ॥ २० ॥
बलविकारिणी चाथ बलप्रमथनी तथा।
सर्व्वभूतदमनी च नवमी च मनोन्मनी ॥ २१ ॥
श्वेता रक्ता सिता पीता श्यामा वह्निनिभासिता।
कृष्णारुणाश्च ताः शक्तीर्ज्वालारूपाः स्मरेत् क्रमात् ॥२२॥
अनन्तयोगपीठाय मावाह्याथ हृदन्ततः।
स्फटिकाभं चतुर्व्वाहुं फलशूलधरं शिवम् ॥ २३ ॥
साभयं वरदं पञ्चवदनञ्च त्रिलोचनम्।
पत्रेषु मूर्त्तयः पञ्च ध्याप्यास्तत्पुरुषादयः ॥ २४ ॥
पूर्व्वे तत्पुरुषः श्वेतो ऽघोरोऽष्टभुजोऽसितः।
चतुर्व्वाहुमुखः पीतः सद्योजातश्च पश्चिमे ॥ २५ ॥
वामदेवः स्त्रीविलासो चतुर्वक्त्रभुजोऽरुणः।
सौम्ये पञ्चास्य ईशाने ईशानः सर्व्वदः सितः ॥ २६ ॥
हृष्टाङ्गानि यथान्यायमनन्तं सूक्ष्ममर्च्चयेत्।
सिद्धेश्वरं त्वेकनेत्रं पूर्व्वादौ दिशि पूजयेत् ॥ २७ ॥
एकरुद्रं त्रिनेत्रञ्च श्रीकण्ठञ्च शिखण्डिनम्।

ऐशान्यादिविदिक्ष्वेते विन्यस्याः कमलासनाः(१) ॥ २८ ॥
श्वेतः पीतः सितो रक्तो धूम्रो रक्तोऽरुणः शितः ।
शूलाशनिशरेष्वासवाहवश्चतुराननाः ॥ २९ ॥
उमा चण्डेशनन्दीशौ महाकालो गणेश्वरः ।
वृषो भृङ्गिरिटिस्कन्दावुत्तरादौ प्रपूजयेत् ॥ ३० ॥
कुलिशं शक्तिदण्डौ च खड्गपाशध्वजौ गदां ।
शूलं चक्रं यजेत् पद्मं पूर्व्वादौ देवमर्च्य च ॥ ३१ ॥
ततोऽधिवासितं शिष्यं पाययेद्गव्यपञ्चकम् ।
आचान्तं प्रोक्ष्य नेत्राभ्यां नेत्रे नेत्रेण बन्धयेत् ॥ ३२ ॥
द्वारं प्रवेशयेच्छिष्यं मण्डपस्याथ दक्षिणे ।
सासनादिकुशासीनं तत्र संशोधयेद्गुरुः ॥ ३३ ॥
आदितत्त्वानि संहृत्य परमार्थे लयः क्रमात् ।
पुनरुत्पादयेच्छिष्यं सृष्टिमार्गेण देशिकः ॥ ३४ ॥
न्यासं शिष्ये ततः कृत्वा तं प्रदक्षिणमानयेत् ।
पश्चिमद्वारमानीय क्षेपयेत् कुसुमाञ्जलिम् ॥ ३५ ॥
यस्मिन् पतन्ति पुष्पाणि तन्नामाद्यं विनिर्द्दिशेत् ।
पार्श्वे यागभुवः खाते कुण्डे सव्याभिमे स्थले(२) ॥ ३६ ॥
शिवाग्निं जनयित्वेष्ट्वा पुनः शिष्येण चार्च्चयेत् ।
ध्यानेनात्मनिभं शिष्यं संहृत्य प्रलयः क्रमात् ॥ ३७ ॥
पुनरुत्पाद्य तत्पाणौ दद्याद्दर्भांश्च मन्त्रितान् ।
पृथिव्यादीनि तत्त्वानि जुहुयाद्धृदयादिभिः ॥ ३८ ॥

---

१ कमलासना इति ख० ।

२ सव्यादिमेखले इति ख० ।

एकैकस्य शतं हुत्वा व्योममूलेन होमयेत्।
हुत्वा पूर्णाहुतिं कुर्य्यादस्त्रेणाष्टाहुतीर्हुनेत्॥ ३९ ॥
प्रायश्चित्तं विशुद्ध्यर्थं ततः शेषं समापयेत्।
कुम्भं समन्वितं प्रार्च्य शिष्यं पीठेऽभिषेचयेत्॥ ४० ॥
शिष्ये तु समयं दत्वा स्वर्णाद्यैः स्वगुरुं यजेत्।
दीक्षा पञ्चाक्षरस्योक्ता विष्ण्वादेरेवमेव हि॥ ४१ ॥

इत्याग्नेये महापुराणे पञ्चाक्षरादिपूजामन्त्रा नाम त्र्यधिकत्रिशततमोऽध्यायः॥

---

## अथ चतुरधिकत्रिशततमोऽध्यायः।

### पञ्चपञ्चाशद्विष्णुनामानि।

अग्निरुवाच। जपन् वै पञ्चपञ्चाशद्विष्णुनामानि यो नरः।
मन्त्रजप्यादिफलभाक् तीर्थेष्वर्चादि चाक्षयम्॥ १ ॥
पुष्करे पुण्डरीकाक्षं गयायाञ्च गदाधरम्।
राघवञ्चित्रकूटे तु प्रभासे दैत्यसूदनम्॥ २ ॥
जयं जयन्त्यां तद्वच्च जयन्तं हस्तिनापुरे।
वाराहं वर्द्धमाने च काश्मीरे चक्रपाणिनम्॥ ३ ॥
जनार्द्दनञ्च कुब्जाम्रे मथुरायाञ्च केशवम्।
कुब्जाम्रके हृषीकेशं गङ्गाद्वारे जटाधरम्॥ ४ ॥
शालग्रामे महायोगं हरिं गोवर्द्धनाचले।

पिण्डारके चतुर्ब्बाहुं शङ्खोद्धारे च शङ्खिनम् ॥ ५ ॥
वामनञ्च कुरुक्षेत्रे यमुनायां त्रिविक्रमम् ।
विश्वेश्वरं तथा शोणे कपिलं पूर्व्वसागरे ॥ ६ ॥
विष्णुं महोदधौ विद्याद्गङ्गासागरसङ्गमे ।
वनमालञ्च किष्किन्ध्यां देवं रैवतकं विदुः ॥ ७ ॥
काशीतटे महायोगं विरजायां रिपुञ्जयम् ।
विशाखयूपे ह्यजितं नेपाले लोकभावनम् ॥ ८ ॥
द्वारकायां विद्धि कृष्णं मन्दरे मधुसूदनम् ।
लोकाकुले रिपुहरं शालग्रामे हरिं स्मरेत् ॥ ९ ॥
पुरुषं पूरुषवटे विमले च जगत्प्रभुं ।
अनन्तं सैन्धवारण्ये दण्डके शार्ङ्गधारिणम् ॥ १० ॥
उत्पलावर्त्तके शौरिं नर्म्मदायां श्रियः पतिं ।
दामोदरं रैवतके नन्दायां जलशायिनं ॥ ११ ॥
गोपीश्वरञ्च सिन्ध्वब्धौ माहेन्द्रे चाच्युतं विदुः ।
सह्याद्रौ देवदेवेशं वैकुण्ठं मागधे वने ॥ १२ ॥
सर्व्वपापहरं विन्ध्ये औड्रे तु पुरुषोत्तमम् ।
आत्मानं हृदये विद्धि जपतां भुक्तिमुक्तिदम् ॥ १३ ॥
वटे वटे वैश्रवणं चत्वरे चत्वरे शिवम् ।
पर्व्वते पर्व्वते रामं सर्व्वत्र मधुसूदनं ॥ १४ ॥
नरं भूमौ तथा व्योम्नि वशिष्ठे गरुड़ध्वजम् ।
वासुदेवञ्च सर्व्वत्र संस्मरन् भुक्तिमुक्तिभाक् ॥ १५ ॥
नामान्येतानि विष्णोश्च जप्त्वा सर्व्वमवाप्नुयात् ।
क्षेत्रेष्वेतेषु यत् श्राद्धं दानं जप्यञ्च तर्पणम् ॥ १६ ॥

तत्सर्व्वं कोटिगुणितं मृतो ब्रह्ममयो भवेत् ।
यः पठेत् शृणुयाद्वापि निर्म्मलः स्वर्गमाप्नुयात् ॥ १७ ॥

इत्याग्नेये महापुराणे पञ्चपञ्चाशद्विष्णुनामानि नाम चतुरधिकत्रिशततमोऽध्यायः ॥

---

## अथ पञ्चाधिकत्रिशततमोऽध्यायः ।



### नारसिंहादिमन्त्राः ।

अग्निरुवाच । स्तम्भो विद्वेषणोच्चाट उत्सादो भ्रममारणे ।
व्याधियेति स्मृतं क्षुद्रं तन्मोक्षो वक्ष्यते शृणु ॥ १ ॥
ओँ नमो भगवते उन्मत्तरुद्राय भ्रम २ भ्रामय २ अमुकं वित्रासय उद्भ्रामय २ रौद्रेण रूपेण हुं फट् ठ २ ।
श्मशाने निशि जप्तेन चिलत्र्वं मधुना हुनेत् ।
चिताग्नौ धूर्त्तसमिद्भिर्भ्राम्यते सततं रिपुः ॥ २ ॥
हेमगैरिकया कृत्वा प्रतिमा हेमसूचिभिः ।
जप्ता विध्येच्च तत्कण्ठे हृदि वा म्रियते रिपुः ॥ ३ ॥
खरबालचिताभस्म ब्रह्मदण्डी च मर्कटी ।
गृहे वा मूर्ध्नि तच्चूर्णं जप्तमुत्सादकृत् क्षिपेत् ॥ ४ ॥
भस्वाकाशो सदीमाग्निर्भं गुर्वक्षिश्च वर्म्म फट् ।
एवं सहस्रारे हुं फट् आचक्राय स्वाहा हृदयं विचक्राय शिवः ।
शिखाचक्रायाथ कवचं त्रिचक्रायाथ नेत्रकम् ॥ ५ ॥

सम्वक्रायास्तसुदिष्टं व्यालाचक्राय पूर्ववत् ।
शार्ङ्गं सुदर्शनं सुद्रयहहृत् सर्व्वसाधनम् ॥ ६ ॥
मूर्द्धाग्निमुखहृद्गुह्यपादे न्यस्याचराण्यसेत् ।
चक्राब्जासनमग्न्याभं दंष्ट्रिणञ्च चतुर्भुजम् ॥ ७ ॥
शङ्खचक्रगदापद्मशलाकाङ्कुशपाणिनम् ।
चापिनं पिङ्गकेशाश्चमरव्याप्तविपिष्टपं ॥ ८ ॥
नाभिस्तेनाग्निना विद्धा नश्यन्ते व्याधयो ग्रहाः ।
पीतञ्चक्रं गदा रक्ताः स्वराः श्याममथान्तरं ॥ ९ ॥
नेमिः श्वेता बहिः कृष्णवर्णरेखा च पार्थिवी ।
मध्येतरेमरे वर्णानेवं चक्रद्वयं(१) लिखेत् ॥ १० ॥
आदावानीय कुम्भोदं गोचरे सन्निधाय च ।
दत्त्वा सुदर्शनं तत्र याम्ये चक्रे हुनेत् क्रमात् ॥ ११ ॥
आज्यापामार्गसन्निधौ घृतं तिलसर्षपौ ।
पायसं गव्यमाज्यञ्च सहस्राष्टकसंख्यया ॥ १२ ॥
हुतशेषं क्षिपेत् कुम्भे प्रतिद्रव्यं विधानवित् ।
प्रस्थानेन कृतं पिण्डं कुम्भे तस्मिन्निवेशयेत् ॥ १३ ॥
विष्णादि सर्वं तत्रैव न्यसेत् तत्रैव दक्षिणे ।
नमो विष्णुजनेभ्यः सर्वशान्तिकरेभ्यः प्रतिगृह्णन्तु शान्तये नमः ।
दद्यादनेन मन्त्रेण हुतशेषाम्भसा बलिं ॥ १४ ॥
फलके कल्पिते पात्रे पलाशं चीरशाखिनः ।
गव्यपूर्णे निवेश्यैव दिक्ष्वेवं होमयेद् द्विजः ॥ १५ ॥
सदक्षिणमिदं होमद्वयं भूतादिनाशनम् ।

१ वर्णद्वयमिति ख० ।

गव्याक्तपत्रलिखितैर्निम्बगैः क्षुद्रमुद्धृतम् ॥ १६ ॥
दूर्वाभिरायुषे पद्मैः श्रियै पुत्रा उडुम्बरैः।
गोसिद्धै।र सर्पिषा गोष्ठे मेधायै सर्वशाखिना ॥ १७ ॥

ओं क्षौं नमो भगवते नारसिंहाय ज्वालामालिने दीप्तदंष्ट्राया-ग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशाय सर्व्वज्वरविनाशाय दह२ पच२ रक्ष२ हुं फट्।

मन्त्रोयं नारसिंहस्य सकलाघनिवारणः।
जप्यादिना हरेत् क्षुद्रग्रहमारीविषामयान्।
चूर्णमण्डूकयमा जलाग्निस्तम्भकृद्भवेत् ॥ १८ ॥

इत्याग्नेये महापुराणे नारसिंहादिमन्त्रा नाम
पञ्चाधिकत्रिशततमोऽध्यायः।

---

## अथ षष्ठाधिकत्रिशततमोऽध्यायः।

———ooo———

### त्रैलोक्यमोहनमन्त्राः।

अग्निरुवाच। वक्ष्ये मन्त्रं चतुर्वर्गसिद्धै त्रैलोक्यमोहनम्।

ओं श्रीं क्रीं ह्रूं ओं नमः पुरुषोत्तमः पुरुषोत्तमप्रतिरूप लक्ष्मीनिवास सकलजगत्क्षोभण सर्वस्त्रीहृदयदारण त्रिभुवन-मदोन्मादकर सुरमनुजसुन्दरीजनमनांसि तापय २ दीपय २ शोषय२ मारय२ स्तम्भय२ द्रावय२ आकर्षय२ परमसुभग सर्व-सौभाग्यकर कामप्रद अमुकं हन२ चक्रेण गदया खड्गेण सर्व्व-

वाणैर्भिंद२ पाशेन बध्न२ अङ्कुशेन ताडय२ तुरु२ किन्त्विष्ठसि-यावत्तावत् समीहितं मे सिद्धं भवति ह्रूं फट् नमः ।

ॐ पुरुषोत्तम त्रिभुवनमदोन्मादकर ह्रूं फट् हृदयाय नमः कर्षय महाबल ह्रूं फट् अस्त्राय त्रिभुवनेश्वर सर्व्वजनमनांसि हन२ दारय २ मम वशमानय २ ह्रूं फट् नेत्राय त्रैलोक्यमोहन हृषीकेशाप्रतिरूप सर्वस्त्रीहृदयाकर्षण आगच्छ२ नमः ॥

मङ्गान्नित्र्यायकेन न्यासं मूलवदीरितं ॥ १ ॥
दृष्ट्वा सञ्जप्य पश्चाग्रतमहस्त्रमभिषिञ्च च ।
कुण्डेऽग्नौ देविके वह्नौ चरुं कृत्वा शतं हुनेत् ॥ २ ॥
पृथग्दधि घृतं क्षीरं चरुं साज्यं पयः शृतं ।
द्वादशाहुतिमूलेन सहस्रञ्चाक्षतांस्तिलान् ॥ ३ ॥
यवं मधुत्रयं पुष्पं फलं दधि समिद्धुतं ।
हुत्वा पूर्णाहुतिं शिष्टं प्राशयेत्सघृतं चरुं ॥ ४ ॥
सम्भोज्य विप्रानाचार्यं तोषयेत्सिध्यते मनुः ।
स्नात्वा यथावदाचम्य वाग्यतो यागमन्दिरं ॥ ५ ॥
गत्वा पद्मासनं बद्ध्वा शोषयेद्विधिना वपुः ।
रक्षोघ्नविघ्नकृद्दिक्षु न्यसेदादौ सुदर्शनम् ॥ ६ ॥
यम्बीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम् ।
अशेषं कल्मषं देहात् विश्लेषयदनुस्मरेत् ॥ ७ ॥
रंबीजं हृदयाब्जस्थं स्मृत्वा ज्वालाभिरादहेत् ।
ऊर्द्ध्वाधस्तिर्य्यगाभिस्तु मूर्द्ध्नि संप्लावयेद्वपुः ॥ ८ ॥
ध्यात्वामृतैर्व्वहियान्तःसुषुम्नामार्गगामिभिः ।
एवं शुद्धवपुः प्राणानायम्य मनुना त्रिधा ॥ ९ ॥

विन्यसेन्नाराचहस्तान्तः शक्तिं मस्तकचक्षुषोः ।
गुह्ये गले दिक्षु हृदि कुक्षौ देहे च सर्व्वतः ॥ १० ॥
आवाह्य ब्रह्मरन्ध्रेण हृत्पद्मे सूर्य्यमण्डलात् ।
तारेण सम्परात्मानं स्मरेत्तं सर्व्वलक्षणं ॥ ११ ॥

त्रैलोक्यमोहनाय विद्महे स्मराय
धीमहि तन्नो विष्णुः प्रचोदयात् ।

आत्मार्चनात् क्रतुद्रव्यं प्रोक्षयेच्छूद्रपाचकं ।
कृत्वात्मपूजां विधिना स्थण्डिले तं समर्च्चयेत् ॥ १२ ॥
कर्म्मादिकल्पिते पीठे पद्मस्थं गरुड़ोपरि ।
सर्व्वाङ्गसुन्दरं प्राप्तवयोलावण्ययौवनं ॥ १३ ॥
मदाघूर्णिततात्म्राक्षमुदारं स्मरविह्वलं ।
दिव्यमाल्याम्बरलेपभूषितं सस्मिताननं ॥ १४ ॥
विष्णुं नानाविधानेकपरिवारपरिच्छदम् ।
लोकानुग्रहणं सौम्यं सहस्रादित्यतेजसं ॥ १५ ॥
पञ्चवाणधरं प्राप्तकामैश्च द्विचतुर्भुजम् ।
देवस्त्रीभिर्वृतं देवीमुखासक्तेक्षणं जपेत् ॥ १६ ॥
चक्रं शङ्खं धनुः खड्गं गदां मुषलमङ्कुशं ।
पाशञ्च बिभ्रतं चार्च्चेद्वावाहादिविसर्गतः ॥ १७ ॥
श्रियं वामोरुजङ्घास्थां श्लिष्यन्तीं पाणिना पतिं ।
साब्जचामरकरां पीनां श्रीवत्सकौस्तुभान्वितां ॥ १८ ॥
मालिनं पीतवस्त्रञ्च चक्राद्याढ्यं हरिं यजेत् ।

ओं सुदर्शन महाचक्रराज दुष्टभयङ्कर छिन्द २ छिन्द २
विदारय २ परमन्त्रान् ग्रस २ भक्षय २ भूतानि त्रासय २ हुं

फट् ओं जलचराय स्वाहा । खड्गतीक्ष्ण छिन्द २ खड्गाय नमः । शारङ्गाय सशराय ह्रूं फट् । भूतग्रामाय विद्महे चतुर्व्विधाय धीमहि तन्नो ब्रह्म प्रचोदयात् । सम्वर्त्तक श्वसन पोथय २ ह्रूं फट् स्वाहा । पाश बन्ध २ आकर्षय २ ह्रूं फट् । अङ्कुशेन कट्ट ह्रूं फट् ।

क्रमाद्गुजेषु मन्त्रैः स्वैरेभिरस्त्राणि पूजयेत् ॥ १८ ॥

ओं पक्षिराजाय ह्रूं फट् ।

तार्क्ष्यं यजेत् कर्णिकायामङ्गदेवान् यथाविधि ।
शक्तिरिन्द्रादियन्त्रेषु तार्क्ष्याद्या धृतचामराः ॥ २० ॥
अग्रयोऽस्ते प्रयोज्यादौ सुरेशाद्याश्च दक्षिणा ।
पीते लक्ष्मीसरस्वत्यौ रतिप्रीतिजयाः सिताः ॥ २१ ॥
कीर्त्तिकान्त्यौ सिते श्यामे तुष्टिपुष्ट्यौ स्मरोदिते ।
लोकेशास्तं यजेद्देवं विष्णुमिष्टार्थसिद्धये ॥ २२ ॥
ध्यायेन्मन्त्रं जपित्वैनं जुहुयात्त्वभिषेचयेत् ।
ओं श्रीं क्लीं ह्रीं ह्रूं त्रैलोक्यमोहनाय विष्णवे नमः ।
एतत्पूजादिना सर्व्वान् कामानाप्नोति पूर्व्ववत् ॥ २३ ॥
तोयैः सम्मोहनी पुष्पैर्नित्यन्तेन च तर्पयेत् ।
श्रिया सप्तश्रीदक्षो वीजं त्रैलोक्यमोहनम् ॥ २४ ॥
जप्त्वा त्रिलक्षं हुत्वा च लक्षं विल्वैश्च साज्यकैः ।
तण्डुलैः फलगन्धाद्यैः(१) दूर्वाभिस्त्वायुराप्नुयात् ॥ २५ ॥
तथाभिषेकहोमादिक्रियातुष्टो ह्यभीष्टदः ।

---

१ फलपुष्पाद्यैरिति ङ० ।

ओँ नमो भगवते वराहाय भूर्भुवः स्वःपतये भूपतित्वं मे देहि हृदयाय स्वाहा ।

पञ्चाङ्गं नित्यमयुतं जप्त्वायूराज्यमाप्नुयात् ॥ २६ ॥

इत्याग्नेये महापुराणे त्रैलोक्यमोहनमन्त्रो नाम षडाधिकशततमोऽध्यायः ।

---

## अथ सप्ताधिकशततमोऽध्यायः ।

### त्रैलोक्यमोहनीलक्ष्म्यादिपूजा ।

अग्निरुवाच । वक्ष्ये सवह्निर्वामाक्षी दण्डी श्रीः सर्व्वसिद्धिदा ।
महाश्रियै महासिद्धे महाविद्युत्प्रभे नमः ॥ १ ॥
श्रियै देवि विजये नमः । गौरि महाबले बन्ध २ नमः । ह्र महाकाये पद्महस्ते ह्र फट् श्रियै नमः । श्रियै फट् श्रियै नमः । श्रियै फट् श्रीं नमः । श्रियै श्रीद नमः स्वाहा श्रीफट् ॥
अस्याङ्गानि नवोक्तानि तेष्वेकञ्च समाश्रयेत् ।
त्रिलक्षमेकलक्षं वा जप्त्वाग्नेय भूतिदः ॥ २ ॥
श्रीगेहे विष्णुगेहे वा श्रियं पूज्य धनं लभेत् ।
आज्यात्तैस्तण्डुलैर्लक्षं जुहुयात् खादिरानले ॥ ३ ॥
राजा वश्यो भवेद्वह्निः श्रीश्च स्यादुत्तरोत्तरं ।
सर्षपाम्भोभिषेकेण नश्यन्ते सकला ग्रहाः ॥ ४ ॥
बिल्वलक्षहुता लक्ष्मीर्बिल्वहविश्च जायते ।
श्रद्धवेश्म चतुर्द्वारं हृदये चिन्तयेदथ ॥ ५ ॥

बलाकां वामनां श्यामां श्वेतपङ्कजधारिणीम्।
ऊर्ध्वबाहुद्वयं ध्यायेत्क्रीडन्तीं द्वारि पूर्ववत्॥ ६॥
ऊर्ध्वीकृतेन हस्तेन रक्तपङ्कजधारिणीं।
श्वेताङ्गीं दक्षिणे द्वारि चिन्तयेद्वनमालिनीम्॥ ७॥
हरितां दोर्द्वयेनोर्ध्वमुद्वहन्तीं सिताम्बुजम्।
ध्यायेद्विभीषिकां नाम श्रीदूतीं द्वारि पश्चिमे॥ ८॥
शाङ्करीमुत्तरे द्वारि तन्मध्ये ऽष्टदलपङ्कजम्।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः॥ ९॥
ध्येयास्ते पद्मपत्रेषु शङ्खचक्रगदाधराः।
अञ्जनक्षीरकाश्मीरहेमाभास्ते सुवाससः॥ १०॥
आग्नेयादिषु पत्रेषु गुग्गुलुश्च कुरुण्टकः।
दमकः सलिलश्चेति हस्तिनो रजतप्रभाः॥ ११॥
हेमकुम्भधराश्चैते कर्णिकायां श्रियं स्मरेत्।
चतुर्भुजां सुवर्णाभां सपद्मोर्ध्वभुजद्वयां॥ १२॥
दक्षिणाभयहस्ताभां वामहस्तवरप्रदां।
श्वेतगन्धांशुकामेकरोम्यमालास्त्रधारिणीं॥ १३॥
ध्यात्वा सपरिवारान्तामभ्यर्च्य सकलं लभेत्।
द्रोणाजपुष्पश्रीवृक्षपर्णं मूर्ध्नि न धारयेत्॥ १४॥
लवणामलकं वर्ज्यं नागादित्यतिथौ क्रमात्।
पायसाग्नौ जपेत् सूक्तं श्रियस्तेनाभिषेचयेत्॥ १५॥
आवाहादिविसर्गान्तां मूर्ध्नि ध्यात्वार्चयेत् श्रियम्।
बिल्वाज्याजपायसेन पृथग् योगः श्रिये भवेत्॥ १६॥
विषं मक्षिपकालाग्निरुद्रिज्योतिर्वकद्वयम्।

ओं ह्रीं महामहिषमर्दिनि ठ ठ मूलमन्त्रं महिषहिंसके नमः। महिषशत्रुं भ्रामय २ हुँ फट् ठ ठ महिषं हेषय २ हुँ महिषं हन२ देवि हूं महिषनिसूदनि फट्।

दुर्गाहृदयमित्युक्तं साङ्गं सर्वार्थसाधकम्॥ १७॥
यजेद्यथोक्तं तां देवीं पीठञ्चैवाङ्गमध्यगम्।

ओं ह्रीं दुर्गे दुर्गे रक्षणि स्वाहा चेति दुर्गायै नमः। वरवर्ण्यै नमः। आर्य्यायै कनकप्रभायै कृत्तिकायै अभयप्रदायै कन्यकायै सुरूपायै॥

पत्रस्थाः पूजयेदेता मूर्त्तीराद्यैः स्वरैः क्रमात्॥ १८॥
चक्राय शङ्खाय गदायै खड्गाय धनुषे बाणाय॥
अष्टम्यादाविमां दुर्गां लोकेशान्तां यजेदिति।
दुर्गायोगः समायुःश्रीस्वामिरक्षाजयादिकृत्॥ १९॥
ससाध्येशानमन्त्रेण तिलहोमो वशीकरः।
जयः पद्मैस्तु दुर्व्वाभिः शान्तिः कामः पलाशजैः॥ २०॥
पुष्टिः स्यात् काकपक्षेण मृतिद्वेषादिकं भवेत्।
ग्रहक्षुद्रभयापत्तिं सर्वमेव मनुर्हरेत्॥ २१॥
ओं दुर्गे दुर्गे रक्षणि स्वाहा।
रक्षाकरीयमुदिता जयदुर्गाङ्गसंयुता।
श्यामां त्रिलोचनां देवीं ध्यात्वात्मानं चतुर्भुजम्॥ २२॥
शङ्खचक्राब्जशूलादित्रिशूलां रौद्ररूपिणीं।
युद्धादौ सञ्जयेदेतां यजेत् खड्गादिके जये॥ २३॥

इत्याग्नेये महापुराणे त्रैलोक्यमोहनीलक्ष्म्यादिपूजा नाम सप्ताधिकशततमोऽध्यायः।

## अथाष्टाधिकत्रिशततमोऽध्यायः।



### त्वरितापूजा।

अग्निरुवाच। त्वरिताज्ञान्समाख्यास्ये भुक्तिमुक्तिप्रदायकाम्।

ओं आधारशक्तये नमः। ओं ह्रीं पुरु२ महासिंहाय नमः। ओं पद्माय नमः। ओं ह्रीं हूँ खेचछेचः। स्त्रीं ओं हूँ क्षें हूँ फट् त्वरितायै नमः। खे च हृदयाय नमः। चछे शिरसे नमः। छेचः शिखायै नमः। चस्त्री कवचाय नमः। स्त्रीं हूँ नेत्राय नमः। हूँ खे अस्त्राय फट् नमः। ओं त्वरिताविद्यां विद्महे तूर्णविद्यायै धीमहि तन्नो देवी प्रचोदयात्। चौप्रणितायै नमः। हूँकारायै नमः। ओं खेच हृदयाय नमः। खेचर्य्यै नमः। ओं चण्डायै नमः। छेदन्यै नमः चेपण्यै नमः। स्त्रियै हूँकार्य्यै नमः। चेमङ्कर्य्यै जयायै किङ्कराय रच। ओं त्वरिताज्ञया स्थिरो भव वषट्।

तोतला त्वरिता तूर्णेत्येवं विद्येयमीरिता॥ १॥
शिरोभ्रूमस्तके कण्ठे हृदि नाभौ च गुह्यके।
ऊर्व्वोश्च जानुजङ्घोरुद्वये चरणयोः क्रमात्॥ २॥
न्यस्ताङ्गो न्यस्तमन्त्रस्तु समस्तं व्यापकं न्यसेत्।
पार्वती शवरी चेशा वरदाभयहस्तिका॥ ३॥
मयूरवलया पिच्छमौलिः किसलयांशुका।
सिंहासनस्था मायूरवर्हच्छत्रसमन्विता॥ ४॥
त्रिनेत्रा श्यामला देवी वनमालाविभूषणा।

विप्राहिकर्णाभरणा चत्रकेयूरभूषणा ॥ ५ ॥
वैश्यनागकटीबन्धा शूद्राहिकृतनूपुरा ।
एवं कपालिका भूत्वा तन्मन्त्रं नियुतं जपेत् ॥ ६ ॥
ईशः किरातरूपोऽभूत् पुरा गौरी च तादृशी ।
जपेद्ध्यायेत् पूजयेत्तां सर्वसिद्ध्यै विषादिहृत् ॥ ७ ॥
अष्टसिंहासने पूज्या दले पूर्वादिके क्रमात् ।
षडङ्गगायत्री प्रणीता हुङ्काराद्या दलाग्रके ॥ ८ ॥
फट्कारी चाग्रतो देव्याः श्रीबीजेनार्चयेदिमाः ।
लोकेशायुधवर्णास्ताः फट्कारी तु धनुर्धरा ॥ ९ ॥
जया च विजया द्वास्थे पूज्ये सौवर्णयष्टिके ।
किङ्करा वर्वरो मुण्डो लगुडी च तयोर्बहिः ॥ १० ॥
इष्ट्वैवं सिद्धयेद्द्रव्यैः कुण्डे योन्याकृतौ हुनेत् ।
हेमलाभोऽर्जुनैर्धान्यैर्गोधूमैः पुष्टिसम्पदः ॥ ११ ॥
यवैर्धान्यैस्तिलैः सर्वसिद्धिरीतिविनाशनम् ।
अधेनुमत्तता शत्रोः शाल्मलीभिश्च मारणम् ॥ १२ ॥
अम्बुभिर्धनधान्याप्तिस्तुष्टिर्नीलोत्पलैरपि ।
रक्तोत्पलैर्महापुष्टिः कुन्दपुष्पैर्महोदयः ॥ १३ ॥
मल्लिकाभिः पुरक्षोभः कुमुदैर्जनवल्लभः ।
अशोकैः पुत्रलाभः स्यात् पाटलाभिः शुभाङ्गना ॥ १४ ॥
आम्रैरायुस्तिलैर्लक्ष्मीर्बिल्वैः श्रीचम्पकैर्धनम् ।
दृष्टं मधुकपुष्पैश्च विल्वैः सर्वज्ञतां लभेत् ॥ १५ ॥
तिलत्र्यक्तयाज्याक्तैर्होमाद्यानान्तखेच्छया ।
मण्डलेऽभ्यर्च्य गायत्र्या आहुतीः पञ्चविंशतिम् ॥ १६ ॥

दद्यात्क्षतत्रयं मूलात् पञ्चवेर्द्दीक्षितो भवेत् ।
पञ्चगव्यं पुरा पीत्वा चरुकं प्राशयेत्सदा ॥ १७ ॥

इत्याग्नेये महापुराणे त्वरितापूजा नामाष्टाधिक-
त्रिशततमोऽध्यायः ।

---

## अथ नवाधिकत्रिशततमोऽध्यायः ।

———ooo———

### त्वरितामन्त्रादिः ।

अग्निरुवाच । अपरां त्वरिताविद्यां वक्ष्येऽहं भुक्तिमुक्तिदां ।
पुरे वज्राकुले(१) देवीं रजोभिर्लिखिते यजेत् ॥ १ ॥
पद्मगर्भे दिग्विदिक्षु चाष्टौ वज्राणि वीथिकां ।
द्वारशोभोपशोभाश्च लिखेच्छीघ्रं स्मरेन्नरः ॥ २ ॥
अष्टादशभुजां सिंहे वामजङ्घा प्रतिष्ठिता ।
दक्षिणा द्विगुणा तस्याः पादपीठे समर्पिता ॥ ३ ॥
नागभूषां वज्रकुण्डे खड्गं चक्रं गदां क्रमात् ।
शूलं शरं तथा शक्तिं वरदं दक्षिणैः करैः ॥ ४ ॥
धनुः पाशं शरं घण्टां तर्ज्जनीं शङ्खमङ्कुशम् ।
अभयञ्च तथा वज्रं वामपार्श्वे धृतायुधम् ॥ ५ ॥
पूजनाच्छत्रुनाशः स्याद्राष्ट्रं जयति लीलया ।
दीर्घायूराष्ट्रभूतिः स्याद्दिव्यादिव्यादिसिद्धिभाक् ॥ ६ ॥

१ वज्रार्गले इति क० ।

तलेतिसप्तपातालाः कालाग्निभुवनान्तकाः ।
ओं कारादिस्वरारभ्य यावद्ब्रह्माण्डवाचकम् ॥ ७ ॥
ओं काराद्भ्रामयेत्तोयन्तोतला त्वरिता ततः ।
प्रस्तावं सम्प्रवक्ष्यामि स्वरवर्गं लिखेद्भुवि ॥ ८ ॥
तालुवर्गः कवर्गः स्यात्तृतीयो जिह्वतालुकः ।
चतुर्थस्तालुजिह्वाग्रे जिह्वादन्तस्तु पञ्चमः ॥ ९ ॥
षष्ठोऽष्टपुटसम्पन्नो मिश्रवर्गस्तु सप्तमः ।
ऊष्माणः स्याच्छवर्गस्तु उद्धरेच्च मनुं ततः ॥ १० ॥
षष्ठस्वरसमारूढं ऊष्मणान्तं सविन्दुकम् ।
तालुवर्गद्वितीयन्तु स्वरैकादशयोजितम् ॥ ११ ॥
जिह्वातालुसमायोगः प्रथमं केवलं भवेत् ।
तदेव च द्वितीयन्तु अधस्ताद्विनियोजयेत् ॥ १२ ॥
एकादशस्वरैर्युक्तं प्रथमं तालुवर्गतः ।
ऊष्माणस्य(१) द्वितीयन्तु अधस्ताद् दृश्य योजयेत् ॥ १३ ॥
षोडशस्वरसंयुक्तमूष्माणस्य द्वितीयकम् ।
जिह्वादन्तसमायोगे प्रथमं योजयेदधः ॥ १४ ॥
मिश्रवर्गाद् द्वितीयन्तु अधस्तात् पुनरेव तु ।
चतुर्थस्वरसम्भिन्नं तालुवर्गादिसंयुतम् ॥ १५ ॥
ऊष्मणश्च द्वितीयन्तु अधस्ताद्विनियोजयेत् ।
स्वरैकादशभिन्नन्तु ऊष्मणान्तं सविन्दुकम् ॥ १६ ॥
पञ्चस्वरसमारूढं ओष्ठसम्पुटयोगतः ।
द्वितीयमक्षरञ्चान्यज्जिह्वाग्रे तालुयोगतः ॥ १७ ॥

---

१ ऊष्माणस्येत्ययं पाठो न साधुः ।

प्रथमं पञ्चमे योज्यं स्वराद्यैर्नोद्धृता इमे ।
ओंकाराद्या नमोन्ताय जपेत् स्वाहाग्निकार्य्यके ॥ १८ ॥

ओं क्रों क्रूं क्रः हृदयं हां हयेति शिरः । क्रौं ज्वल ज्वल-
शिखा स्यात् कवचं हनुद्वयम् । क्रौं ग्रों चक्षुस्त्रयाय विद्यानेत्रं
प्रकीर्त्तितम् चौं हः खौं हूं फडस्त्राय गुह्याङ्गानि पुरा न्यसेत् ।

त्वरिताङ्गानि वक्ष्यामि विद्याङ्गानि शृणुष्व मे ।
आदिद्विहृदयं प्रोक्तं त्रिचतुःशिर इष्यते ॥ १९ ॥
पञ्चषष्ठः शिखा प्रोक्ता कवचं सप्तमाष्टमम् ।
तारकन्तु भवेन्नेत्रं नवार्द्धाक्षरलक्षणं ॥ २० ॥
तोतलेति समाख्याता वज्रतुण्डे ततो भवेत् ।
खु खु हूं दशबीजा स्याद्वज्रतुण्डेन्द्रदूतिका ॥ २१ ॥
खेचरि ज्वालिनीज्वाले खखेति ज्वालिनीदश ।
वर्चें शवरिभीषणि खखेति च शवर्य्यपि ॥ २२ ॥
छे छेदनि करालिनि खखेति च कराल्यपि ।
वक्षःश्रवद्रवप्लवनी ख ख(१) दूतीप्लवं ग्यपि ॥ २३ ॥
स्त्रीबालकारे धुनि धुनि शास्त्री वसनवेगिका ।
क्षे पक्षे कपिले हस हस कपिला नाम दूतिका ॥ २४ ॥
क्रूं तेजोवति रौद्री च मातङ्गरौद्रिदूतिका ।
पुटे पुटे ख ख खड्गे फट् ब्रह्मकदूतिका ॥ २५ ॥
वेतालिनि दशार्णाः स्युस्त्यजान्यच्चिपलालवत् ।
हृदादिकन्यासादौ स्यात् मध्ये नेत्रे न्यसेत्सुधीः ॥ २६ ॥
पादादारभ्य मूर्द्धान्तं शिर आरभ्य पादयोः ।

---

१ वक्ष श्रवद्रवप्लवनीयथेति ख॰, ङ॰ च ।

अङ्घ्रिजानूरुगुह्ये च नाभिहृत्कण्ठदेशतः॥ २७॥
वज्रमण्डलमूर्द्धे च अधोर्द्धे चादिवीजतः।
सोमरूपं ततो गात्रं धारामृतसुवर्षिणम्॥ २८॥
विशन्तं ब्रह्मरन्ध्रेण साधकस्तु विचिन्तयेत्।
मूर्द्धास्यकण्ठहृन्नाभौ गुह्योरुजानुपादयोः॥ २९॥
आदिवीजं न्यसेन्मन्त्री तर्ज्जन्यादि पुनः पुनः।
ऊर्द्धं सोममधः पद्मं शरीरं वीजविग्रहं॥ ३०॥
यो जानाति न मृत्युः स्यात्तस्य न व्याधयो ज्वरा।
यजेज्जपेत्तां विन्यस्य ध्यायेद्देवीं शताष्टकम्॥ ३१॥
मुद्रा वक्ष्ये प्रणीताद्याः प्रणीताः पञ्चधा स्मृताः।
ग्रथितौ तु करौ कृत्वा मध्येऽङ्गुष्ठौ निपातयेत्॥ ३२॥
तर्ज्जनीं मूर्द्धि संलग्नां विन्यसेत्तां शिरोपरि।
प्रणीतेयं समाख्याता हृद्देशे तां समानयेत्॥ ३३॥
ऊर्द्धन्तु कन्यसामध्ये सवीजान्तां विदुर्द्विजाः।
नियोज्य तर्ज्जनीमध्येऽनेकलग्नां परस्पराम्॥ ३४॥
ज्येष्ठाग्रं निक्षिपेन्मध्ये भेदनी सा प्रकीर्त्तिता।
नाभिदेशे तु तां बद्धा अङ्गुष्ठावुत्क्षिपेत्ततः॥ ३५॥
करालो तु महामुद्रा हृदये योज्य मन्त्रिणः।
पुनस्तु पूर्ववद्बद्धलग्नां ज्येष्ठां समुत्क्षिपेत्॥ ३६॥
वज्रतुण्डा समाख्याता वज्रदेशे तु बन्धयेत्।
उभाभ्याञ्चैव हस्ताभ्यां मणिबन्धन्तु बन्धयेत्॥ ३७॥
वीणि वीणि प्रसार्य्येति(१) वज्रमुद्रा प्रकीर्त्तिता।

१ प्रसार्य्यां चेति ट०।

दण्डः खड्गश्चक्रगदा मुद्रा चाकारतः स्मृता ॥ ३८ ॥
अङ्गुष्ठेनाक्रमेत् चौणि त्रिशूलश्चोर्द्धतो भवेत् ।
एका तु मध्यमोर्द्धा तु शक्तिरेव विधीयते ॥ ३९ ॥
शरश्च वरदश्चापं पाशं भारश्च घण्टया ।
शङ्खमङ्कुशमभयं पद्ममष्ट च विंशतिः ॥ ४० ॥
मोहणी मोचणी चैव ज्वालिनी चाऽमृताभया ।
प्रणीताः पञ्चमुद्रास्तु पूजाहोमे च योजयेत् ॥ ४१ ॥

इत्याग्नेये महापुराणे त्वरितामन्त्रादिर्नाम नवाधिकत्रिशततमोऽध्यायः ।

---

## अथ दशाधिकत्रिशततमोऽध्यायः ।

———ooo@ooo———

### त्वरितामूलमन्त्रादिः ।

अग्निरुवाच । दीक्षादि वक्ष्ये विन्यस्य सिंहवज्राकुलेऽजके ।
ह्रे२ हुति वज्रदन्त पुरु२ लुलु२ गर्ज्ज२ इह सिंहासनाय नमः ।
तिर्य्यगूर्द्धगता रेखाश्चत्वारश्चतुरो भवेत् ॥ १ ॥
नवभागविभागेन कोष्ठकान् कारयेद्बुधः ।
बाह्या दिशागताः कोष्ठा विदिशास्तु विनाशयेत् ॥ २ ॥
बाह्ये वै कोष्ठकोणेषु बाह्यरेखाष्टकं स्मृतम् ।
बाह्यकोष्ठस्य बाह्ये तु मध्ये यावत् समानयेत् ॥ ३ ॥
वज्रस्य मध्यमं शृङ्गं बाह्यरेखा द्विधाकृतः ।
बाह्यरेखा भवेद्वक्रा द्विभङ्गा कारयेद्बुधः ॥ ४ ॥

१ व

मध्यकोष्ठं भवेत्पद्मं पीतकर्णिकमुज्ज्वलम् ।
कृष्णेन रजसा लिख्य कुलिशासिशिरोर्द्धता ॥ ५ ॥
वाह्यतश्चतुरस्रन्तु वज्रसम्पुटलाञ्छितम् ।
द्वारे प्रदापयेन्मन्त्री चतुरो वज्रसम्पुटान् ॥ ६ ॥
पद्मनाम भवेद्दामवीथी चैव समा भवेत् ।
गर्भं रक्तं केशराणि मण्डले दीक्षिताः स्त्रियः ॥ ७ ॥
जयेच्च परराष्ट्राणि क्षिप्रं राज्यमवाप्नुयात् ।
मूर्त्तिं प्रणवसन्दीप्तां हूंकारेण नियोजयेत् ॥ ८ ॥
मूलविद्यां समुच्चार्य्य मरुद्धोमगतां द्विज ।
प्रथमेन पुनश्चैव कर्णिकायां प्रपूजयेत् ॥ ६ ॥
एवं प्रदक्षिणं पूज्य एकैकं वीजमादितः ।
दलमध्ये तु विद्याङ्गा आग्नेय्यां पञ्च नैर्ऋतम्(१)॥ १० ॥
मध्ये नेत्रं दिशास्त्रञ्च गुह्यकाङ्गे तु रक्षणम् ।
स्तुतयः केशरस्थास्तु वामदक्षिणपार्श्वतः ॥ ११ ॥
पञ्च पञ्च प्रपूज्यास्तु स्वैः स्वैर्मन्त्रैः प्रपूजयेत् ।
लोकपालान्न्यसेदष्टौ वाह्यतो गर्भमण्डले ॥ १२ ॥
वर्णान्तमग्निमारूढं षष्ठस्वरविभेदितं(२) ।
पञ्चदशेन चाक्रान्तं स्वैः स्वैर्नामभि योजयेत्(३) ॥ १३ ॥
शौचं(४) सिंहे कर्णिकायां यजेद् गन्धादिभिः श्रिये(५) ।

---

१ आग्नेय्यामनैर्ऋतमिति ज० ।

२ षोडशस्वरविभूषितमिति ख०, ङ० च ।

३ नामभिर्योजयेदित्ययं पाठः समीचीनो भवितुमर्हति ।

४ शौचेति ज० ।  ५ श्रियमिति ज० ।

अष्टाभिर्वेष्टयेत् कुम्भैर्मन्त्राष्टगतमन्त्रितैः॥ १४॥
मन्त्रमष्टसहस्रन्तु जप्याङ्गानां दशांशकम्।
होमं कुर्य्यादग्निकुण्डे वह्निमन्त्रेण चालयेत्॥ १५॥
निक्षिपेद् हृदयेनाग्निं शक्तिं मध्येऽग्निगां स्मरेत्।
गर्भाधानं पुंसवनं जातकर्म्म च होमयेत्॥ १६॥
हृदयेन शतं ह्येकं गुह्याङ्गे जनयेच्छिखिम्।
पूर्णाहुत्या तु विद्यायाः शिवाग्निर्ज्वलितो भवेत्॥ १७॥
होमयेन्मूलमन्त्रेण शतञ्चाङ्गं दशांशतः।
निवेदयेत्ततो देव्यास्ततः शिष्यं प्रवेशयेत्॥ १८॥
अस्त्रेण ताड़नं कृत्वा गुह्याङ्गानि ततो न्यसेत्।
विद्याङ्गैश्चैव सन्नद्धं विद्याङ्गेषु नियोजयेत्॥ १९॥
पुष्पं क्षेपाययेच्छिष्यमानयेदग्निकुण्डकम्।
यवैर्द्धान्यैस्तिलैराज्यैर्मूलविद्याशतं हुनेत्॥ २०॥
स्थावरत्वं पुरा होमं सरीसृपमतः परं।
पक्षिमृगपशुत्वञ्च मानुषं ब्राह्ममेव च॥ २१॥
विष्णुत्वञ्चैव रुद्रत्वमन्ते पूर्णाहुतिर्भवेत्।
एकया चैव ह्याहुत्या शिष्यः स्याद्दीक्षितो भवेत्॥ २२॥
अधिकारी भवेदेवं शृणु मोक्षमतः परम्।
सुमेरुस्थो यदा मन्त्री सदाशिवपदे स्थितः॥ २३॥
परे च होमयेत् स्वस्थोऽकर्म्मकर्म्मगतान् दश।
पूर्णाहुत्या तु तद्योगी धर्म्माधर्म्मैर्न लिप्यते॥ २४॥
मोक्षं याति परंस्थानं यद्गत्वा न निवर्त्तते।
यथा जले जलं क्षिप्तं जलं देही शिवस्तथा॥ २५॥

कुम्भैः कुर्य्याच्चाभिषेकं जयराज्यादिसर्व्वभाक्।
कुमारी ब्राह्मणी पूज्या गुर्व्वादेर्द्दक्षिणां ददेत्॥ २६॥
यजेत् सहस्रमेकन्तु पूजां कृत्वा दिने दिने।
तिलाज्यपुरहोमेन(१) देवी श्रीः कामदा भवेत्॥ २७॥
ददाति विपुलान् भोगान् यदन्यच्च समीहते।
जप्त्वा ह्यक्षरलक्षन्तु निधानाधिपतिर्भवेत्॥ २८॥
द्विगुणेन भवेद्राज्यं त्रिगुणेन च यक्षिणी।
चतुर्गुणेन ब्रह्मत्वं ततो विष्णुपदं भवेत्॥ २९॥
षड्गुणेन महासिद्धिर्लक्षेणैकेन पापहा।
दश जप्त्वा देहशुद्धौ तीर्थस्नानफलं शतात्॥ ३०॥
पटे वा प्रतिमायां वा शीर्षे वै स्थण्डिले यजेत्।
शतं सहस्रमयुतं जपे होमे प्रकीर्त्तितम्॥ ३१॥
एवं विधानतो जप्त्वा लक्षमेकन्तु होमयेत्।
महिषाजमेषमांसेन नरजेन पुरेण(२) वा॥ ३२॥
तिलैर्यवैस्तथा लाजैर्व्रीहिर्गोधूमकास्त्रकैः।
श्रीफलैराज्यसंयुक्तैर्होमयित्वा व्रतञ्चरेत्॥ ३३॥
अर्द्धरात्रेषु सन्नद्धः खड्गचापशरादिमान्।
एकवासा विचित्रेण रक्तपीतासितेन वा॥ ३४॥
नीलेन वाथ वस्त्रेण देवीं तैरेव चार्च्चयेत्।
व्रजेद्दक्षिणदिग्भागं द्वारे दद्याद्बलिं बुधः॥ ३५॥

---

१ तिलाज्यप्रवहोमेनेति ख॰, ङ॰ च।
२ प्रवेनेति ख॰, ङ॰ च।

दूतीमन्त्रेण द्वाराद्दौ एकवृक्षे श्मशानके ।
एवञ्च सर्व्वकामाभिर्भुङ्क्ते सर्व्वां महीं नृपः ॥ २६ ॥

इत्याग्नेये महापुराणे त्वरितामूलमन्त्रो नाम दशाधिक-
त्रिशततमोऽध्यायः ।

---

## अथैकादशाधिकत्रिशततमोऽध्यायः ।

### त्वरिताविद्या ।

अग्निरुवाच । विद्याप्रस्तावमाख्यास्ये धर्म्मकामादिसिद्धिदम् ।
नवकोष्ठविभागेन विद्याभेदस्त्व विन्दति ॥ १ ॥
अनुलोमविलोमेन समस्तव्यस्तयोगतः ।
कर्णाविकर्णयोगेन अत ऊर्द्ध्वं विभागशः ॥ २ ॥
त्रिभिकेण च योगेन देव्या सत्रह्मविग्रहः ।
जानाति सिद्धिदाश्चान्यान् प्रस्तावान्निर्गतान् बहून् ॥ ३॥
शास्त्रे शास्त्रे स्मृता मन्त्राः प्रयोगास्तत्र दुर्लभाः ।
गुरुः स्यात् प्रथमो वर्णः पूर्व्वंद्युर्न च वर्णाते ॥ ४ ॥
प्रस्तावे तत्र चैकार्णा द्व्यर्णास्त्र्यर्णादयो ऽभवन् ।
तिर्य्यगूर्द्धगता रेखाश्चतुरश्चतुरो भजेत् ॥ ५ ॥
नव कोष्ठा भवन्त्येवं मध्यदेशे तथा इमान् ।
प्रदक्षिणेन संस्थाप्य प्रस्तावं भेदयेत्ततः ॥ ६ ॥
प्रस्तावक्रमयोगेन प्रस्तावं यस्तु विन्दति ।
करमुष्टिस्थितास्तस्य साधकस्य हि सिद्धयः ॥ ७ ॥

त्रैलोक्यं पादमूले स्यान्नवखण्डां भुवं लभेत् ।
कपाले तु समालिख्य शिवतत्त्वं समन्ततः ॥ ८ ॥
श्मशानकर्पटे वाथ वाह्यं निष्क्रम्य मन्त्रवित् ।
तस्य मध्ये लिखेन्नाम कर्णिकोपरि संस्थितम् ॥ ९ ॥
तापयेत्खादिराङ्गारैर्भूर्जमाक्रम्य पादयोः ।
सप्ताहादानयेत् सर्व्वं त्रैलोक्यं सचराचरम् ॥ १० ॥
वज्रसम्पुटगर्भे तु दारुगारे तु लेखयेत् ।
मध्ये गर्भगतं नाम सदाशिवविदर्भितम् ॥ ११ ॥
कुड्ये(१) फलके वाथ शिलापट्टे हरिद्रया ।
मुखस्तम्भं गतिस्तम्भं सैन्यस्तम्भन्तु जायते ॥ १२ ॥
विपरीतेन संलिख्य श्मशाने कर्पटे बुधः ।
षट्कोणं दण्डमाक्रान्तं समन्ताच्छक्तियोजितम् ॥ १३ ॥
मारयेदचिरादेव श्मशाने निहतं रिपुं ।
छेदं करोति राष्ट्रस्य चक्रमध्ये न्यसेद्रिपुं ॥ १४ ॥
चक्रधाराङ्कितां शक्तिं रिपुनाम्ना रिपुं हरेत् ।
तार्क्ष्येणैव तु बीजेन खड्गमध्ये तु लेखयेत् ॥ १५ ॥
विदर्भरिपुनामाथ श्मशानाङ्गारलेखितम् ।
सप्ताहात्साधयेद्देशं ताडयेत् प्रेतभस्मना ॥ १६ ॥
भेदने छेदने चैव मारणेषु शिवो भवेत् ।
तारकं नेत्रमुद्दिष्टं शान्तिपुष्टौ नियोजयेत् ॥ १७ ॥
दहनादिप्रयोगोयं शाकिनीश्चैव कर्षयेत् ।
मध्यादिवाकर्णौ यावद्वक्रतुण्डसमन्वितः(२) ॥ १८ ॥

---

१ कुण्ड इति क० ।　　　२ वक्रतुण्डसमन्वित इति ट० ।

कुष्ठाद्या व्याधयो ये तु नाशयेत्तान् संशयः ।
मध्यादिउत्तरान्तन्तु करालीबन्धनाज्जपेत् ॥ १९ ॥
रक्षयेदात्मनो विद्यां प्रतिवादी यदा शिवः ।
वारुण्यादि ततो न्यस्य ज्वरकाशविनाशनम् ॥ २० ॥
सौम्यादि मध्यमान्तन्तु गुरुत्वं जायते वटे ।
पूर्व्वादि मध्यमान्तन्तु लघुत्वं कुरुते क्षणात् ॥ २१ ॥
भूर्ज्जे रोचनया लिख्य एतद्दव्याकुलं पुरम् ।
क्रमस्थैर्मन्त्रबीजैस्तु रक्षां देहेषु कारयेत् ॥ २२ ॥
वेष्टिता भात्रहेम्ना च(१) रक्षेयं मृत्युनाशिनी ।
विघ्नपापारिदमनी सौभाग्यायुःप्रदा धृता ॥ २३ ॥
द्यूते रणे च जयदा शक्रसैन्ये न संशयः ।
बन्ध्यानां पुत्रदा ह्येषा चिन्तामणिरिवापरा ॥ २४ ॥
साधयेत् परराष्ट्राणि राज्यञ्च पृथिवीं जयेत् ।
फट् स्त्रीं क्षें ह्रूं लक्षजप्याद्यक्षादिर्वशगो भवेत् ॥ २५ ॥

इत्याग्नेये महापुराणे त्वरिताविद्या नामैकादशाधिकत्रिशततमोऽध्यायः ।

---

## अथ द्वादशाधिकत्रिशततमोऽध्यायः ।

———ooo@ooo———

नानामन्त्राः ।

अग्निरुवाच । ओं विनायकार्च्चनं वक्ष्ये यजेदाधारशक्तिकम् ।
धर्म्माद्यष्टककन्दञ्च नालं पद्मञ्च कर्णिकाम् ॥ १ ॥

---

१ तारहेम्ना चेति ख० ।

केशरं त्रिगुणं पद्मं तीव्रञ्च ज्वलिनीं यजेत् ।
नन्दाञ्च सुयशाञ्चोग्रां तेजोवतीं विन्ध्यवासिनीं(१) ॥ २ ॥
गणमूर्त्तिं गणपतिं हृदयं स्याद्गणं जयः ।
एकदन्तोत्कटशिरःशिखायाचलकर्णिने ॥ ३ ॥
गजवक्त्राय कवचं हुँ फडस्त्रं तथाष्टकं ।
महोदरो दण्डहस्तः पूर्व्वादौ मध्यतो यजेत् ॥ ४ ॥
जयो गणाधिपो गणनायकोऽथ गणेश्वरः ।
वक्रतुण्ड एकदन्तोत्कटलम्बोदरो गज ॥ ५ ॥
वक्त्रो विकटाननोऽथ हूं पूर्व्वो विघ्ननाशनः ।
धूम्रवर्णो महेन्द्राद्यो वाह्ये विघ्नेशपूजनम् ॥ ६ ॥
त्रिपुरापूजनं(२) वच्ये असिताङ्गो रुरुस्तथा ।
चण्डः क्रोधस्तथोन्मत्तः कपाली भीषणः क्रमात् ॥ ७ ॥
संहारी भैरवा ब्राह्मीमुख्या रुम्वास्तु भैरवाः ।
ब्रह्माणीशगमुखा दीर्घा अग्न्यादौ वटुकाः क्रमात् ॥ ८ ॥
समयपुत्रो वटुको योगिनीपुत्रकस्तथा ।
सिद्धपुत्रश्च वटुकः कुलपुत्रश्चतुर्थकः ॥ ९ ॥
हेतुकः क्षेत्रपालश्च त्रिपुरान्तो द्वितीयकः ।
अग्निवेतालोऽग्निजिह्वः करालो काललोचनः ॥ १० ॥
एकपादश्च भीमाच ऐं घँ प्रेतस्तथासनं ।
ऐं क्लीं हौश्च त्रिपुरा पद्मासनसमास्थिता ॥ ११ ॥
बिभ्रत्यभयपुस्तञ्च वामे वरदमालिकाम् ।

१ विवासिनीमिति ख० ।
२ त्रिपुरायजनमिति क०, ख०, ग०, घ०, ङ० च ।

मूलेन हृदयादि स्याज्ज्वालपूर्णञ्च कामकम् ॥ १२ ॥
गोमध्ये नाम संलिख्य चाष्टपत्रे च मध्यतः ।
श्मशानादिपटे श्मशानाङ्गारेण विलिखयेत् ॥ १३ ॥
चिताङ्गारपिष्टकेन मूर्त्तिं ध्यात्वा तु तस्य च ।
चिप्नोदरे नीलसूत्रैर्वेष्ट्य चोच्चाटनं भवेत् ॥ १४ ॥
ओं नमो भगवति ज्वालामालिनि गृध्रगणपरिवृते स्वाहा ।
युद्धे गच्छन् जपन्मन्त्रं पुमान् साक्षाज्जयी भवेत् ।
ओं श्रों क्रीं क्लीं श्रियै नमः ।
उत्तराद्यौ च घृणिनी सूर्य्या पूज्या चतुर्द्दले ॥ १५ ॥
आदित्या प्रभावती च हेमाद्रिमधुराश्रियः ।
ओं ह्रीं गौर्य्यै नमः ।
गौरीमन्त्रः सर्व्वकरः होमाद्यानाज्जपार्च्चनात् ॥ १६ ॥
रक्ता चतुर्भुजा पाशवरदा दक्षिणे करे ।
अङ्कुशाभययुक्तान्तां प्रार्थ्य सिद्धात्मना पुमान् ॥ १७ ॥
जीवेद्वर्षशतं धीमान्न चौरारिभयं भवेत् ।
क्रुद्धः प्रमादी भवति युधि मन्त्राम्बुपानतः ॥ १८ ॥
अञ्जनं तिलकं वश्ये जिह्वाग्रे कविता भवेत् ।
तज्जपान्मैथुनं वश्ये तज्जपाद्योनिवीक्षणम् ॥ १९ ॥
स्वर्गादस्यो तिलहोमात्सर्व्वश्चैव तु सिध्यति ।
सप्ताभिमन्त्रितञ्चान्नं भुञ्जंस्तस्य श्रियः सदा ॥ २० ॥
अर्द्धनारीशरूपोऽयं लक्ष्म्यादिर्वैष्णवादिकः ।
अनङ्गरूपा शक्तिश्च द्वितीया मदनातुरा ॥ २१ ॥
पवनवेगा भुवनपाला वै सर्व्वसिद्धिदा ।

अनङ्गमदनानङ्गमेखलान्ताश्चपेच्छिये ॥ २२ ॥
पद्ममध्यदलेषु क्लीं स्वरान् कादींस्ततः स्त्रियाः ।
षट्कोणे वा घटे वाऽथ लिखित्वा स्याद्वशीकरं ॥ २३ ॥

ओं क्रों क्लं नित्यक्लिन्ने मदद्रवे ओं ओं ।

मूलमन्त्रः षडङ्गोयं रक्तवर्णं त्रिकोणके ।
द्रावणी ह्लादकारिणी क्षोभिणी गुरुशक्तिका ।। २४ ।।
ईशानादौ च मध्ये तां नित्यां पाशाङ्कुशौ तथा ।
कपालकल्पकतरुं वोणा रक्ता च तद्दतौ ॥ २५ ॥
नित्याभया मङ्गला च नववीरा च मङ्गला ।
दुर्भगा मनोन्मनी पूज्या द्रावा पूर्व्वादितः स्थिता ॥२६॥

ओं क्रों अनङ्गाय नमः ओं क्रों क्लीं स्मराय नमः ।

मन्मथाय च माराय कामायैवञ्च पञ्चधा ।
कामाः पाशाङ्कुशौ चापबाणाः ध्येयाश्च बिभ्रतः ॥ २७ ॥
रतिश्च विरतिः प्रीतिर्विप्रीतिश्च मतिर्धृतिः ।
विधृतिः पुष्टिरेभिश्च क्रमात् कामादिकैर्युताः ।

ओं क्लं नित्यक्लिन्ने मदद्रवे ओं ओं । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः । क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह क्ष । ओं क्लं नित्यक्लिन्ने मदद्रवे स्वाहा ।

आधारशक्तिं पद्मञ्च मिन्ने देवीं हृदादिषु ॥२८॥

ओं क्रों गौरि रुद्रदयिते योगेश्वरि हूं फट् स्वाहा ।

इत्याग्नेये महापुराणे नानामन्त्रा नाम द्वादशाधिक-
द्विशततमोऽध्यायः ।

## अथ त्रयोदशाधिकत्रिशततमोऽध्यायः।

———000———

त्वरिताज्ञानम्।

अग्निरुवाच। ओं ह्रीं हुँ खे छे क्षः स्त्रीं हूँ क्षे ह्रीं फट् त्वरितायैनमः।

त्वरितां पूजयेन्न्यस्य द्विभुजाञ्चाष्टबाहुकां।
आधारशक्तिं पद्मञ्च सिंहे देवीं हृदादिकम्॥ १॥
पूर्व्वादौ गायत्रीं यजेन्मण्डले वै प्रणीतया।
हुंकारां खेचरीं चण्डां छेदनीं क्षेपणीं स्त्रियाः॥ २॥
हुंकारां क्षेमकारीञ्च फट्कारीं मध्यतो यजेत्।
जयाञ्च विजयां द्वारि किङ्करञ्च तदग्रतः॥ ३॥
लिलैद्धोमैय सर्व्वार्थ्यै नामव्याहृतिभिस्तथा।
अनन्ताय नमः स्वाहा कुलिकाय नमः स्वधा॥ ४॥
स्वाहा वासुकिराजाय शङ्खपालाय वौषट्।
तक्षकाय वषन्नित्यं महापद्माय वै नमः॥ ५॥
स्वाहा कर्कोटनागाय फट् पद्माय च वै नमः।
लिखेन्नियग्रहचक्रन्तु एकाशीतिपदैर्न्नरः॥ ६॥
वस्त्रे पटे तरौ भूर्ज्जे शिलायां यष्टिकासु च।
मध्ये कोष्ठे साध्यनाम पूर्व्वादौ पट्टिकासु च॥ ७॥
ओं ह्रीं हूँ छन्द छन्द चतुरः कण्ठकान् कालरात्रिकां।
ऐशादावम्बुपादौ च यमराज्यञ्च वाह्यतः।
कालीनारवमाली कालीनामाग्नमालिनी॥ ८॥

मामोदितत्तदोमोमा रक्षत स्वम्ब भक्तवा।
यमपाटटयामय मंटमो टट मोटमा॥ ९॥
वामो भूरिविभूमेया टट रोम्ब म्बरो टट।
यमराजाद्दाह्यतो वं तं तोयं मारणात्मकम्॥ १०॥
कज्जलं निम्बनिर्य्यासमज्जासृग्विषसंयुतम्।
काकपक्षस्य लेखन्या श्मशाने वा चतुष्पथे॥ ११॥
निधापयेत् कुम्भाधस्ताद्वल्मीके वाथ निक्षिपेत्।
विभीतद्रुमशाखाभो यन्त्रं सर्व्वारिमर्द्दनम्॥ १२॥
लिखेच्चानुग्रहञ्चक्रं शुक्लपत्रेऽथ भूर्ज्जके।
लाक्षया कुङ्कुमेनाथ स्फटिकाचन्दनेन वा॥ १३॥
भुवि भित्तौ पूर्व्वदले(१) नाम मध्यमकोष्ठके।
खण्डे तु वारिमध्यस्थं श्रीं हंसो वापि पट्टिगम्॥ १४॥
लक्ष्मीश्लोकं शिवादौ च राक्षसादिक्रमाल्लिखेत्।
श्रीःमाममोमा मा श्रीः सानो याश्चे स्रेया नोसा॥ १५॥
माया लीला लाली यामा याश्चे स्रेया नोसा माया।
यत्र स्रेया वह्निः श्रीमा दिक्पुरं कलसं वह्निः॥ १६॥
पद्मस्थं पद्मचक्रञ्च मृत्युंजित् स्वर्गगस्मृतिं।
शान्तीनां परमा शान्तिः सौभाग्यादिप्रदायकम्॥ १७॥
रुद्रे रुद्रसमाः कार्य्याः कोष्ठकास्तत्र ता लिखेत्।
श्रीमाद्याः क्रूं फडन्ता च आदिवर्णमथानुतः॥ १८॥
विद्यावर्णक्रमेनैव संज्ञाश्च वषडन्तिकां।

---

१ पूर्व्वपदे इति ख०।

अधस्तात् प्रत्यङ्गिरैषा सर्व्वकामार्थसाधिका ॥ १९ ॥
एकाशीतिपदे सर्व्वामादिवर्णक्रमेण तु ।
आदिमं यावदन्तं स्याद्वषडन्तञ्च नाम वै ॥ २० ॥
एषा प्रत्यङ्गिरा चान्या सर्व्वकार्य्यादिसाधनी ।
निग्रहानुग्रहञ्चक्रञ्चतुःषष्टिपदैर्लिखेत् ॥ २१ ॥
अमृतो सा च विद्या च क्रीं सः हूँ नामाग्र मध्यतः ।
फट्काराग्रां पत्रगतां त्रिक्रोंकारेण वेष्टयेत् ॥ २२ ॥
कुम्भवडारिता सर्व्वगञ्जहृत् सर्व्वदायिका ।
विषन्नश्येत् कर्णजपाद्चराद्यैश्च दण्डकैः ॥ २३ ॥

इत्याग्नेये महापुराणे त्वरिताज्ञानं नाम त्रयोदशाधिक-
त्रिशततमोऽध्यायः ।

---

## अथ चतुर्दशाधिकत्रिशततमोऽध्यायः ।

स्तम्भनादिमन्त्राः ।

अग्निरुवाच । स्तम्भनं मोहनं वश्यं विद्वेषोच्चाटनं वदे ।
विषव्याधिमरोगञ्च मारणं शमनं पुनः ॥ १ ॥
भूर्ज्जे कूर्म्मं समालिख्य ताड़नेन षड़ङ्गुलम् ।
मुखपादचतुष्केषु ततो मन्त्रं न्यसेद्द्विजः ॥ २ ॥
चतुष्पादेषु क्रोंकारं क्रोंकारं मुखमध्यतः ।
गर्भे विद्यां ततो लिख्य साधकं पृष्ठतो लिखेत् ॥ ३ ॥

मालामन्त्रैस्तु संवेष्ट्य इष्टकोपरि सन्न्यसेत्।
पिधाय कूर्म्मपृष्ठेन करालेनाभिसम्पठेत् ॥ ४ ॥
महाकूर्म्मं पूजयित्वा पादप्रोक्षन्तु निक्षिपेत्।
ताडयेद्वामपादेन स्मृत्वा शत्रुञ्च सप्तधा ॥ ५ ॥
ततः सञ्जायते शत्रोस्तम्भनं मुखरागतः।
कृत्वा तु भैरवं रूपं मालामन्त्रं समालिखेत् ॥ ६ ॥
ओँ शत्रुमुखस्तम्भनी कामरूपा आलीढकरी

ह्रीँ फेँ फेत्कारिणी मम शत्रूणां देवदत्तानां मुखं स्तम्भय२ मम सर्व्वविद्वेषिणां मुखस्तम्भनं कुरु२ ओँ हूँ फेँ फेत्कारिणि स्वाहा।

फट् हेतुञ्च समालिख्य तज्ज्वालान्तं महाबलं।
वामेनैव नगं शूलं संलिखेद्दक्षिणे करे ॥ ७ ॥
लिखेन्मन्त्रमघोरस्य संग्रामे स्तम्भयेदरीन्।

ओँ नमो भगवत्यै भगमालिनि विस्फुर२ स्पन्द२ नित्यक्लिन्ने द्रव२ हूँ सः क्रोँकाराक्षरे स्वाहा ॥

एतेन रोचनाद्यैस्तु तिलकान्मोहयेज्जगत् ॥ ८ ॥
ओँ फेँ हूँ फट् फेत्कारिणि ह्रीँ ज्वल२
त्रैलोक्यं मोहय२ गुह्यकालिके स्वाहा।
अनेन तिलकं कृत्वा राजादीनां वशीकरं।
गर्द्दभस्य रजो गृह्य कुसुमं मृतकस्य च ॥ ९ ॥
नारीरजः क्षिपेद्ग्रामे शय्यादौ द्वेषकृद्भवेत्।
गोखुरञ्च तथा शृङ्गमश्वस्य च खुरं तथा ॥ १० ॥
शिरः सर्पस्य संक्षिप्तं गृहेषूच्चाटनं भवेत्।

करवीरशिफा पीता ससिद्धार्था च मारणे ॥ ११ ॥
व्यालकुक्कुन्दरीरक्तं करवीरं तदर्थकृत् ।
सरटं षट्पदञ्चापि तथा कर्क्कटवृश्चिकम् ॥ १२ ॥
चूर्णीकृत्य क्षिपेत्तैले तदभ्यङ्गश्च कुष्ठकृत् ।

ओँ नवग्रहाय सर्व्वशत्रून् मम साधय२ मारय२ ओं सों मं वुं चुं ओं शं वां कें ओं स्वाहा ।

अनेनार्कशतैरर्च्य श्मशाने तु निखापयेत् ॥ १३ ॥
भूर्ज्जे वा प्रतिमायां वा मारणाय रिपोर्ग्रहाः ।
ओं कुम्भरी ब्रह्माणी । ओं मभ्भरी माहेश्वरी ।
ओं वेताली कौमारी ओं काली वैष्णवी ।

ओं अघोरा वाराही । ओं वेताली इन्द्राणी उर्व्वशी । ओं जयानी यक्षिणी । नवमातरो हे मम शत्रुं गृह्णत२ ।

भूर्ज्जे नाम रिपोर्लिख्य श्मशाने पूजिते म्रियेत् ॥ १४ ॥

इत्याग्नेये महापुराणे स्तम्भनादिमन्त्रा नाम चतुर्द्दशाधिक-त्रिशततमोऽध्यायः ।

---

## अथ पञ्चदशाधिकत्रिंशततमोऽध्यायः ।

### नानामन्त्राः ।

अग्निरुवाच । आदौ ह्रंकारसंयुक्ता खेचक्रे पदभूषिता ।
वर्गातीतविसर्गेण स्त्रीं ह्रंचेपफड्न्तिका ॥ १ ॥
सर्व्वकर्म्मकरी विद्या विषसम्भादिमर्द्दनी ।

ओं खेचछेतिप्रयोगश्च कालदष्टस्य जीवने ॥ २ ॥
ओं ह्रूं केचः प्रयोगोयं विषशत्रुप्रमर्द्दनः ।
स्त्रीं ह्रूं फडितियोगोयं पापरोगादिकं जयेत् ॥ ३ ॥
खेछेति च प्रयोगोऽयं विघ्नदुष्टादि वारयेत्(१) ।
क्ष्रूं स्त्रीं ओमितियोगोऽयं योषिदादिवशीकरः ॥ ४ ॥
खे स्त्रीं खे च प्रयोगोऽयं वशाय विजयाय च ।

ऐं ह्रीं श्रीं स्फें कैं चौं भगवति अम्बिके कुब्जिके स्फें ओं भं तं वशनमो अघोराय मुखे व्रां व्रीं किलि किलि विचा स्फ्रौं हे स्फ्रूं श्रीं क्रीं ऐं ओमिति कुब्जिकाविद्या सर्व्वकरा स्मृता ॥

भूयः स्कन्दाय यानाह मन्त्रानीशश्च तान् वदे ॥ ५ ॥

इत्याग्नेये महापुराणे नानामन्त्रा नाम पञ्चदशाधिकत्रिशततमोऽध्यायः ।

---

## अथ षोड़शाधिकत्रिशततमोऽध्यायः ।

———ooo———

### सकलादिमन्त्रोद्धारः ।

ईश्वर उवाच । सकलं निष्कलं शून्यं कलाढ्यं स्वमलङ्कृतम् ।
क्षपणं क्षयमन्तस्थं कण्ठोष्ठं चाष्टमं शिवम् ॥ १ ॥
प्रासादस्य(२) पराख्यस्य स्मृतं रूपं(३) गुहाष्टधा ।

---

१ रिपुदुष्टादि वारयेदिति क०, ट० च ।

२ प्रसादस्येति ख० ।

३ सनिरूपमिति ख० ।

सदाशिवस्य शब्दस्य रूपस्याखिलसिद्धये ॥ २ ॥
अमृतश्चांशुमांश्चेन्दुरीश्वरश्चोग्र जहकः।
एकपादेन श्रोजाख्य श्रौषधश्चांशुमान् वशी ॥ ३ ॥
अकारादेः चकारश्च ककारादेः क्रमादिमे।
कामदेवः शिखण्डी च गणेशः कालशङ्करौ ॥ ४ ॥
एकनेत्रो द्विनेत्रश्च त्रिशिखा दीर्घबाहुकः(१)।
एकपादर्द्धचन्द्रश्च वलपो योगिनीप्रियः ॥ ५ ॥
शक्तीश्वरो महाग्रन्थिस्तर्पकः स्थाणुदन्तुरौ।
निधीशो नन्दी पद्मश्च तथान्यः शाकिनीप्रियः ॥ ६ ॥
मुखविम्बो भीषणश्च कृतान्तः प्राणसंज्ञकः।
तेजस्वी शक्र उदधिः श्रीकण्ठः सिंह एव च ॥ ७ ॥
शशाङ्को विश्वरूपश्च क्षश्च स्यान्नरसिंहकः।
सूर्य्यमात्रासमाक्रान्तं विश्वरूपन्तु कारयेत् ॥ ८ ॥
अंशुमत्संयुतं कृत्वा शशिवीज विनायुतम्।
ईशानमोजसाक्रान्तं प्रथमन्तु समुद्धरेत् ॥ ९ ॥
तृतीयं पुरुषं विद्धि दक्षिणं पञ्चमं तथा।
सप्तमं वामदेवन्तु सद्योजातन्ततःपरं ॥ १० ॥
रसात्मन्तु नवमं ब्रह्मपञ्चकमीरितम्।
ओंकाराद्याश्चतुर्थ्यन्ता नमोन्ताः सर्व्वमन्त्रकाः ॥ ११ ॥
सद्योदेवा द्वितीयन्तु हृदयञ्चाङ्गसंयुतम्।
चतुर्थन्तु शिरो विद्धि ईश्वरञ्चामनामतः ॥ १२ ॥
जहकन्तु शिखा ज्ञेया विश्वरूपसमन्विता।

---

१ त्रिशिखो चोर्द्धबाहुक इति ख॰, ङ॰ च।

तन्मन्त्रमष्टमं ख्यातं नेत्रन्तु दशमं मतम् ॥ १३ ॥
अस्त्रं शशी समाख्यातं शिवसंज्ञं शिखिध्वजः।
नमः स्वाहा तथा वौषट् हुँ च फट्क्रमेण तु ॥ १४ ॥
जातिषट्कं हृदादीनां प्रासादं मन्त्रमावदे(१)।
ईशानाद्रुद्रसंख्यातं षोडशेनांशुरञ्जितम् ॥ १५ ॥
औषधाक्रान्तशिरसमूहकस्योपरिस्थितं।
अर्द्धचन्द्रोर्द्धनादञ्च विन्दुद्वितयमध्यगं ॥ १६ ॥
तदन्ते विश्वरूपन्तु कुटिलन्तु त्रिधा ततः।
एवं प्रासादमन्त्रञ्च सर्व्वकर्म्मकरो मनुः ॥ १७ ॥
शिखाबीजं समुद्धृत्य फट्कारान्तन्तु चैव फट्।
अर्द्धचन्द्रासनं ज्ञेयं कामदेवं ससर्पकम् ॥ १८ ॥
महापाशुपतास्त्रन्तु सर्व्वदुष्टप्रमर्द्दनम्।
प्रासादः सकलः प्रोक्तो निष्कलः प्रोच्यतेऽधुना ॥ १९ ॥
औषधं विश्वरूपन्तु रुद्राख्यं सूर्य्यमण्डलम्।
चन्द्रार्द्धं नादसंयोगं(२) त्रिसंज्ञं कुटिलस्ततः ॥ २० ॥
निष्कलो भुक्तिमुक्तो स्यात्पञ्चाङ्गोऽयं सदाशिवः।
अंशुमान् विश्वरूपश्च आवृतं शून्यरञ्जितम् ॥ २१ ॥
ब्रह्माङ्गरहितः शून्यस्तस्य मूर्त्तिरमस्तकः।
विघ्ननाशाय भवति पूजितो बालबालिशैः ॥ २२ ॥
अंशुमान् विश्वरूपाख्यमूहकस्योपरि स्थितम्।
कलाढ्यं सकलस्यैव पूजाङ्गादि च सर्व्वतः ॥ २३ ॥
नरसिंहं कृतान्तस्थं तेजस्विप्राणमूर्द्धगम्।

---

१ मन्त्रमादरेऽदिति ख०।

२ चन्द्रार्द्धनादसंयुक्तमिति ख०।

अंशुमानूहकाक्रान्तमधोर्द्ध्वं स्वसलङ्कृतम् ॥ २४ ॥
चन्द्रार्द्धनादनादान्तं ब्रह्मविष्णुविभूषितम् ।
उदधिं नरसिंहञ्च सूर्य्यमालाविभेदितम् ॥ २५ ॥
यदा कृतं तदा तस्य ब्रह्माण्यङ्गानि पूर्व्ववत् ।
ओजाख्यमंशुमद्युक्तं प्रथमं वर्णमुद्धरेत् ॥ २६ ॥
अंशुमञ्चांशुनाक्रान्तं द्वितीयं वर्णनायकम् ।
अंशुमानीश्वरन्तद्वत् तृतीयं मुक्तिदायकम् ॥ २७ ॥
ऊहकञ्चांशुनाक्रान्तं वरुणप्राणतैजसम् ।
पञ्चमन्तु समाख्यातं कृतान्तन्तु ततः परम् ॥ २८ ॥
अंशुमानुदकप्राणः सप्तमं वर्णमुद्धृतम् ।
पद्ममिन्दुममाक्रान्तं नन्दोगमेकपादधृक् ॥ २९ ॥
प्रथमञ्चान्ततो योज्यं क्षपणं दशबीजकम् ।
अस्यार्द्धं तृतीयञ्चैव पञ्चमं सप्तमं तथा ॥ ३० ॥
सद्योजातन्तु नवमं द्वितीयाद्धृदयादिकम् ।
दशार्णप्रणवं यत्तु फडन्तञ्चास्त्रमुद्धरेत् ॥ ३१ ॥
नमस्कारयुतान्यत्र ब्रह्माङ्गानि तु नान्यथा ।
द्वितीयादष्टमं यावदष्टौ विद्येश्वरा मताः ॥ ३२ ॥
अनन्तेशश्च सूक्ष्मश्च तृतीयश्च शिवोत्तमः ।
एकमूर्त्त्येकरूपश्च त्रिमूर्त्तिरपरस्तथा ॥ ३३ ॥
श्रीकण्ठश्च शिखण्डी च अष्टौ विद्येश्वराः स्मृताः ।
शिखण्डिनोऽप्यनन्तान्तं मन्त्रान्तं मूर्त्तिरीरिता ॥ ३४ ॥

इत्याग्नेये महापुराणे सकलादिमन्त्रोद्धारो नाम षोड़शाधिकद्विशततमोऽध्यायः ।

## अथ सप्तदशाधिकत्रिशततमोऽध्यायः ।

—०००—

### गणपूजा ।

ईश्वर उवाच । विश्वरूपं समुद्धृत्य तेजस्युपरि संस्थितम् ।
नरसिंहं ततोऽधस्तात कृतान्तं तदधो न्यसेत् ॥ १ ॥
प्रणवं तदधःकृत्वा अङ्कुशं तदधः पुनः ।
अंशुमान् विश्वमूर्त्तिस्थं कण्ठोष्ठप्रणवादिकम् ॥ २ ॥
नमोऽन्तः स्याच्चतुर्वर्णो विश्वरूपञ्च कारणम् ।
सूर्य्यमात्राहतं ब्रह्मण्यङ्गानीह तु पूर्ववत्(१) ॥ ३ ॥
उद्धरेत् प्रणवं पूर्व्वं प्रस्फुरद्द्वयमुच्चरेत् ।
घोरघोरतरं पश्चात् तत्र रूपमतः स्मरेत् ॥ ४ ॥
चटशब्दं द्विधा कृत्वा ततः प्रवरमुच्चरेत् ।
दहेति च द्विधा कार्य्यं वमेति च द्विधा मतम्(२) ॥ ५ ॥
घातयेति द्विधाकृत्य हूँफडन्तं समुच्चरेत् ।
अघोरास्त्रन्तु नेत्रं स्याद् गायत्री चोच्यतेऽधुना ॥ ६ ॥
तन्महेशाय विद्महे महादेवाय धीमहि
तन्नः शिवः प्रचोदयात् गायत्री सर्वसाधनी ॥
यात्रायां विजयादौ च यजेत् पूर्वङ्गणं श्रिये ।
तुर्य्यांशे तु पुरा चैत्रे समन्तादर्कभाजिते ॥ ७ ॥
चतुष्पदं त्रिकोणे तु त्रिदलं कमलं लिखेत् ।

---

१ सर्व्वंत इति ख० ।

२ द्विधाकृतमिति ख० ।

तत्पृष्ठे पट्टिकावीथीभागि त्रिदलमब्जयुक् ॥ ८ ॥
वसुदेवसुतैः सार्द्धैस्त्रिदलैः पादपट्टिका ।
तदूर्द्ध्वं वेदिका देया भागमात्रप्रमाणतः ॥ ९ ॥
द्वारं पद्ममितं कोष्ठादुपद्वारं विवर्ज्जितम् ।
द्वारोपद्वाररचितं मण्डलं विघ्नसूदनम् ॥ १० ॥
आरक्तं कमलं मध्ये वाह्यपद्मानि तद्वहिः ।
सिता तु वीथिका कार्य्या द्वाराणि तु यथेच्छया ॥ ११ ॥
कर्णिका पीतवर्णा स्यात् केशराणि तथा पुनः ।
मण्डलं विघ्नमर्दाख्यं मध्ये गणपतिं यजेत् ॥ १२ ॥
नामाद्यं सवरार्कं स्याद्दीर्घाच्छक्रसमन्वितम् ।
शिरो हृतं तत्पुरुषेण ओमाद्यञ्च नमोऽन्तकम् ॥ १३ ॥
गजाख्यं गजशीर्षञ्च गाङ्गेयं गणनायकम् ।
त्रिरावर्त्तङ्गगनगङ्गोपतिं पूर्वपङ्क्तिगम् ॥ १४ ॥
विचित्रांशं महाकायं लम्बोष्ठं लम्बकर्णकम् ।
लम्बोदरं महाभागं विकृतं पार्वतीप्रियम् ॥ १५ ॥
भयावहञ्च भद्रञ्च भगणं भयसूदनम् ।
द्वादशैते दशपङ्क्तौ देवत्रासञ्च पश्चिमे ॥ १६ ॥
महानादञ्चास्वरञ्च विघ्नराजं गणाधिपम् ।
लम्बटस्नानभशगण्डौ महाशुण्डञ्च भीमकम् ॥ १७ ॥
मन्मथं मधुसूदञ्च सुन्दरं भावपुष्टकम् ।
सौम्ये ब्रह्मेश्वरं ब्राह्मं मनोवृत्तिञ्च संलयम् ॥ १८ ॥
लयं दूत्यप्रियं लौल्यं विकर्णं वत्सलं तथा ।
कृतान्तं कालदण्डञ्च यजेत् कुम्भञ्च पूर्व्ववत् ॥ १९ ॥

अयुतञ्च जपेन्मन्त्रं होमयेत्तु दशांशतः।
शेषाणान्तु दशाहुत्या जपाद्धोमन्तु कारयेत् ॥ २० ॥
पूर्णां दत्वाऽभिषेकन्तु कुर्य्यात्सर्वन्तु सिध्यति।
भूगोऽश्वगजवस्त्राद्यैर्गुरुपूजाश्वरेन्नरः ॥ २१ ॥
इत्याग्नेये महापुराणे गणपूजा नाम सप्तदशाधिक-
त्रिशततमोऽध्यायः।

---

## अथाष्टादशाधिकत्रिशततमोऽध्यायः।

### वागीश्वरीपूजा।

ईश्वर उवाच। वागीश्वरीपूजनञ्च प्रवक्षामि समण्डलम्।
जहकं कालसंयुक्तं मनुं वर्णममायुतम्(१) ॥ १ ॥
निषाद ईश्वरं कार्य्यं मनुना चन्द्रसूर्यवत्।
अक्षरञ्च हि दैयं स्यात् ध्यायेत् कुन्देन्दुसन्निभां ॥ २ ॥
पञ्चाशद्वर्णमालान्तु मुक्तास्रग्दामभूषिताम्।
वरदाभयाक्षसूत्रपुस्तकाढ्यां त्रिलोचनां ॥ ३ ॥
लक्षं जपेच्चस्तकान्तं स्कन्धान्तं वर्णमालिकां।
अकारादिक्षकारान्तां विंशत्तीं मानवत् स्मरेत् ॥ ४ ॥
कुर्य्याद् गुरुश्च दीक्षार्थं मन्त्रयाहे तु मण्डलम्।
सूर्य्याग्रमिन्दुभक्तन्तु भागाभ्यां कमलं स्थितं(२) ॥ ५ ॥

---

१ चन्द्रममायुतमिति ख०।
२ क्षतमिति ख०।

वीथिका पदिका कार्य्या पद्मान्यष्टौ चतुष्पदे ।
वीथिका पदिका बाह्ये द्वाराणि द्विपदानि तु ॥ ६ ॥
उपद्वाराणि तद्वच्च कोणबाह्यं द्विपद्टिकम्(१) ।
सितानि नव पद्मानि कर्णिका कनकप्रभा ॥ ७ ॥
केशराणि विचित्राणि कोणान्रक्तेन पूरयेत् ।
व्योमरेखान्तरं कृष्णं द्वाराणीन्द्रेभमानतः ॥ ८ ॥
मध्ये सरस्वतीं पद्मे वागीशी पूर्व्वपद्मके ।
हृल्लेखा चित्रवागीशी गायत्री विश्वरूपया ॥ ९ ॥
शाङ्करी मतिर्धृतिश्च पूर्व्वाद्या ह्रीं स्ववीजकाः ।
ध्येया सरस्वतीवच्च कपिलाज्येन होमकः ।
संस्कृतप्राकृतकविः काव्यशास्त्रादिविद्भवेत् ॥ १० ॥

इत्याग्नेये महापुराणे वागीश्वरीपूजा नामाष्टादशाधिक-
त्रिशततमोऽध्यायः ।

---

## अथोनविंशत्यधिकत्रिशततमोऽध्यायः ।

———ooo@ooo———

### मण्डलानि ।

ईश्वरउवाच । सर्व्वतो भद्रकान्यष्टमण्डलानि वदे गुह ।
शलिमासाधयेत् प्राचीमिष्टायां विषुवे सुधीः ॥ १ ॥
चित्रास्वात्यन्तरेणाथ दृष्टसूत्रेण वा पुनः ।
पूर्व्वापरायतं सूत्रमास्फाल्य मध्यतोऽङ्कयेत् ॥ २ ॥

---

१ द्विपर्वकमिति ख० ।

कोटिद्वयन्तु तन्मध्याद्भ्रमयेद्दक्षिणोत्तरम् ।
मध्ये द्वयं प्रकर्त्तव्य 'स्फालयेद्दक्षिणोत्तरम् ॥ ३ ॥
शतक्षेत्रार्द्धमानेन कोणसम्पातमादिशेत् ।
एवं सूत्रचतुष्कस्य स्फालनाच्चतुरस्रकम् ॥ ४ ॥
आयते तत्र कर्त्तव्यं भद्रस्वेदकरं शुभम् ।
वसुभक्तेन्दु द्विपदे क्षेत्रे वीथी च भागिका ॥ ५ ॥
द्वारं द्विपदिकं पद्ममानाद्वै सकपोलकम् ।
कोणबन्धविचित्रन्तु द्विपदं तत्र वर्त्तयेत् ॥ ६ ॥
शुक्लं पद्मं कर्णिका तु पीता चित्रन्तु केशरम ।
रक्ता वीथी तत्र कल्प्या द्वारं लोकेशरूपकं ॥ ७ ॥
रक्तकोणं विधौ नित्ये नैमित्तिकेऽब्जकं शृणु ।
असंसक्तन्तु संसक्तं द्विधाब्जं भुक्तिमुक्तिकृत् ॥ ८ ॥
असंसक्तं मुमुक्षूणां संसक्तं तत्त्रिधा पृथक् ।
बालो युवा च वृद्धश्च नामतः फलसिद्धिदाः ॥ ९ ॥
पद्मक्षेत्रे तु सूत्राणि दिग्विदिक्षु विनिक्षिपेत् ।
वृत्तानि पञ्चकल्प्यानि पद्मक्षेत्रसमानि तु ॥ १० ॥
प्रथमे कर्णिका तत्र पुष्करैर्नवभिर्युता ।
केशराणि चतुर्व्विंशद्द्वितीयेऽथ तृतीयके ॥ ११ ॥
दलसन्धिर्गजकुम्भनिभान्त्यर्ंदलाग्रकम् ।
पञ्चमे व्योमरूपन्तु संसक्तं कमलं स्मृतं ॥ १२ ॥
असंसक्ते दलाग्रे तु दिग्भागैर्विस्तराद्भजेत् ।
भागद्वयपरित्यागाद्दस्वांशैर्वर्त्तयेद्दलम् ॥ १३ ॥
सन्धिविस्तरसूत्रेण तन्मूलाद्भ्रमयेद्दलम् ।

सव्यासव्यक्रमेणैव ब्रुवमेतद्भवेत्तथा ॥ १४ ॥
अथ वा सन्धिमध्यात्तु भ्रामयेदर्द्धचन्द्रवत् ।
सन्धिद्वयाग्रसूत्रं वा बालपद्मन्तथा भवेत् ॥ १५ ॥
सन्धिसूत्रार्द्धमानेन पृष्ठतः परिवर्त्तयेत् ।
तीक्ष्णाग्रन्तु सुवातेन कमलं भुक्तिमुक्तिदम् ॥ १६ ॥
मुक्तबुद्धौ च वश्यादौ बालं पद्मं समानकं ।
नवनाभं नवहस्तं भागैर्मन्त्रात्मकैश्च तत् ॥ १७ ॥
मध्येऽब्जं पट्टिकावीजं द्वारेणाअस्य मानतः ।
कण्ठोपकण्ठमुक्तानि तद्वाह्ये वीथिका मता ॥ १८ ॥
पञ्चभागान्विता(१) सा तु समन्तादष्टभागिका ।
दिग्विदिक्ष्वष्ट पद्मानि द्वारपद्मं सवीथिकम् ॥ १९ ॥
तद्वाह्ये पञ्च पट्टिका वीथिका यत्र भूषिता ।
पद्मवद्द्वारकण्ठन्तु पट्टिकर्णोष्ठकण्ठकं ॥ २० ॥
कपोलं पट्टिकं कार्य्यं दिक्षु द्वारत्रयं स्फुटम् ।
कोणबन्धं त्रिपट्टन्तु द्विपट्टं वज्रवद्भवेत् ॥ २१ ॥
मध्यन्तु कमलं शुक्लं पीतं रक्तञ्च नीलकम् ।
पीतशुक्लञ्च धूम्रञ्च रक्तं पीतञ्च मुक्तिदम् ॥ २२ ॥
पूर्व्वादौ कमलान्यष्ट शिवविष्ण्वादिकं जपेत् ।
प्रासादमध्यतोऽभ्यर्च्य शक्रादीनब्जकादिषु ॥ २३ ॥
अस्त्राणि वाह्यवीथ्यान्तु विष्ण्वादीनश्वमेधभाक् ।
पवित्रारोहणादौ च महामण्डलमालिखेत् ॥ २४ ॥
अष्टहस्तं पुरा क्षेत्रं रसपक्षैर्विवर्त्तयेत् ।

१ पञ्चभागमितेति ख०, छ० च ।

द्विपदं कमलं मध्ये वीथिका पट्टिका ततः ॥ २५ ॥
दिग्विदिक्षु ततोऽष्टौ च नीलाब्जानि विवर्त्तयेत् ।
मध्यपद्मप्रमाणेन त्रिंशत्पद्मानि तानि तु ॥ २६ ॥
दलसन्धिविहीनानि नीलेन्दीवरकानि च ।
तत्पृष्ठे पट्टिका वीथी स्वस्तिकानि तद्‌र्द्धतः ॥ २७ ॥
द्विपदानि तथा चाष्टौ क्वतिभागकृतानि तु ।
वर्त्तयेत् स्वस्तिकांस्तत्र वीथिका पूर्ववद्बहिः ॥ २८ ॥
द्वाराणि कमलं यद्वदुपकण्ठयुतानि(१) तु ।
रक्तं कीर्णं पीतवीथी नीलं पद्मञ्च मण्डले ॥ २९ ॥
स्वस्तिकादि विचित्रञ्च सर्व्वकामप्रदं गुह ।
पञ्चाब्जं पञ्चहस्तं स्यात् समन्ताद्दशभाजितम् ॥ ३० ॥
द्विपदं कमलं वीथी पट्टिका दिक्षु पङ्कजम् ।
चतुष्कं पृष्ठतो वीथी पट्टिका द्विपदान्यथा ॥ ३१ ॥
कण्ठोपकण्ठयुक्तानि द्वाराण्यब्जन्तु मध्यतः ।
पञ्चाब्जमण्डले ह्यस्मिन् सितं पीतञ्च पूर्व्वकम् ॥ ३२ ॥
वैदूर्य्याभं दक्षिणाब्जं कुन्दाभं वारुणं कजम् ।
उत्तराब्जन्तु शङ्खाभमन्यत् सर्व्वं विचित्रकम् ॥ ३३ ॥
सर्व्वकामप्रदं वक्ष्ये दशहस्तन्तु मण्डलम् ।
विकारभक्तन्तुर्य्याय्यं द्वारन्तु द्विपदं भवेत् ॥ ३४ ॥
मध्ये पद्मं पूर्व्ववच्च विघ्नध्वंसं पदाश्रयं ।
चतुर्हस्तं पुरं कृत्वा तत्रस्थेव करद्वयम् ॥ ३५ ॥
वीथिका हस्तमात्रन्तु स्वस्तिकैर्बहुभिर्वृता ।

१ यद्वदुपकण्ठयुतानीति ख०, ञ० च ।

हस्तमात्राणि द्वाराणि दिक्षु युक्तं सपद्मकम् ॥ ३६ ॥
पद्मानि पञ्च शुक्लानि मध्ये पूज्यश्च निष्कलः ।
हृदयादीनि पूर्व्वादौ विदिक्ष्वस्त्राणि वै यजेत् । ३७ ॥
प्राग्वच्च पञ्च ब्रह्माणि वृत्ताधारमतो वदे ।
शतभागे तिथिभागे पद्मं लिङ्गाष्टकं दिशि ॥ ३८ ॥
मेखलाभागसंयुक्तं कण्ठं द्विपदिकं भवेत् ।
आचार्य्यो बुद्धिमाश्रित्य कल्पयेच्च लतादिकम् ॥ ३९ ॥
चतुःषट्पञ्चमाष्टादि खाक्षिखाद्यादि मण्डलम् ।
खाक्षीन्दुसूर्य्यगं सर्व्वं खाक्षि चैवेन्दुवर्णनात् ॥ ४० ॥
चत्वारिंशदधिकानि चतुर्दशशतानि हि ।
मण्डलानि हरेः शम्भोर्देव्याः सूर्य्यस्य सन्ति च ॥ ४१ ॥
दशसप्तविभक्ते तु लतालिङ्गोद्भवं शृणु ।
दिक्षु पञ्चत्रयस्त्वेकं त्रयं पञ्च च लोमयेत्(१) ॥ ४२ ॥
ऊर्द्धगे द्विपदे लिङ्गमन्दिरं पार्श्वकोष्ठयोः ।
मध्येन द्विपदं पद्ममथ चैकञ्च पङ्कजं । ४३ ॥
लिङ्गस्य पार्श्वयोर्भद्रे पदद्वारमलोपनात् ।
तत्पार्श्वशोभाः षड्लोप्य लताः शेषास्तथा हरेः । ४४ ॥
ऊर्द्ध्वं द्विपदिकं लोप्य हरेर्भद्राष्टकं स्मृतम् ।
रश्मिमानसमायुक्तवेदलोपाच्च शोभिकम् ॥ ४५ ॥
पञ्चविंशतिकं पद्मं ततः पीठमपीठकम् ।
द्वयं द्वयं रचयित्वा उपशोभास्तथाष्ट च ॥ ४६ ॥
देव्यादिव्यापकं भद्रं तद्वन्मध्ये परं लघु ।

१ लोपयेदिति ञ० । लेपयेदिति ङ० ।

मध्ये नवपदं पद्मं कोणे भद्रचतुष्टयम् ॥ ४७ ॥
त्रयोदशपदं शेषं बुद्धाधारन्तु मण्डलं ।
शतपत्रं षस्यधिकं बुद्धाधारं हरादिषु ॥ ४८ ॥

इत्याग्नेये महापुराणे मण्डलानि नामोनविंशत्यधिक-
त्रिशततमोऽध्यायः ।

---

## अथ विंशत्यधिकत्रिशततमोऽध्यायः ।

——— ooo@ooo ———

### अघोरास्त्रादिशान्तिकल्पः ।

ईश्वर उवाच । अस्त्रयागः पुरा कार्य्यः सर्वकर्म्मसु सिद्धिदः ।
मध्ये पूज्यं शिवाद्यस्त्रं वज्रादीन् पूर्वतः क्रमात् ॥ १ ॥
पञ्चचक्रं दशकरं रणादौ पूजितं जये ।
ग्रहपूजा रविर्मध्ये पूर्व्वाद्याः सोमकादयः ॥ २ ॥
सर्व्व एकादशस्थास्तु ग्रहाः स्युः ग्रहपूजनात् ।
अस्त्रशान्तिं प्रवक्ष्यामि सर्वोत्पातविनाशिनीं ॥ ३ ॥
ग्रहरोगादिशमनीं मारीशत्रुविमर्द्दनीं ।
विनायकोपतप्तिघ्नमघोरास्त्रं जपेन्नरः ॥ ४ ॥
लक्षं ग्रहादिनाशः स्यादुत्पाते तिलहोमनम् ।
दिव्ये लक्षं तदर्द्धेन व्योमजोत्पातनाशनं ॥ ५ ॥
घृतेन लक्षपातेन उत्पाते भूमिजे हितम् ।
घृतगुग्गुलुहोमे च सर्व्वोत्पातादिमर्द्दनम् ॥ ६ ॥

दूर्वाघृताज्यहोमेन व्याधयोऽथ घृतेन च।
सहस्रेण तु दुःस्वप्ना विनश्यन्ति न संशयः। ७॥
अयुताद् ग्रहदोषघ्नो जवाघृतविमिश्रितात्।
विनायकार्त्तिशमनमयुतेन घृतस्य च॥ ८॥
भूतवेतालशान्तिस्तु गुग्गुलोरयुतेन च।
महाद्रुमस्य भङ्गे तु व्यालकाङ्के(१) गृहे स्थिते॥ ९॥
आरण्यानां प्रवेशे च दूर्वाज्याघृतहावनात्।
उल्कापाते भूमिकम्पे तिलाज्येनाहुताच्छिवम्॥ १०॥
रक्तस्रावे तु वृक्षाणामयुताद् गुग्गुलोः शिवं।
अकाले फलपुष्पाणां राष्ट्रभङ्गे च मारणे॥ ११॥
द्विपदादेर्यदा मारी लक्षार्द्धाच्च तिलाज्यतः।
हस्तिमारीप्रशान्त्यर्थं करिणोर्दन्तवर्द्धने॥ १२॥
हस्तिन्यां मदहृष्टौ च अयुताच्छान्तिरिष्यते।
अकाले गर्भपाते तु जातं यत्र विनश्यति॥ १३॥
विकृता यत्र जायन्ते यात्राकालेऽयुतं हुनेत्।
तिलाज्यलक्षहोमन्तु उत्तमासिद्धिसाधने॥ १४॥
मध्यमायां तदर्द्धेन तत्पादादधमासु च।
यथा जपस्तथा होमः संग्रामे विजयी भवेत्।
अघोरास्त्रं जपेदस्य ध्यात्वा पञ्चास्यमूर्जितम्॥ १५॥

इत्याग्नेये महापुराणे अघोरास्त्रादिशान्तिकल्पो नाम
विंशत्यधिकशिततमोऽध्यायः।

---

१ व्यालकाके इति ख०।

# अथैकविंशत्यधिकत्रिशततमोऽध्यायः ।

—————000—————

पाशुपतशान्तिः ।

ईश्वर उवाच । वक्ष्ये पाशुपतास्त्रेण शान्तिजापादि पूर्व्वतः ।
पादतः पूर्व्वनाशो हि फडन्तं चापदादिमुत् ॥ १ ॥

ओं नमो भगवते महापाशुपताय अतुलबलवीर्य्यपराक्रमाय त्रिपञ्चनयनाय नानारूपाय नानाप्रहरणोद्यताय सर्व्वाङ्गरक्ताय भिन्नाञ्जनचयप्रख्याय श्मशानवेतालप्रियाय सर्वविघ्ननिकृन्तरताय सर्व्वसिद्धिप्रदाय भक्तानुकम्पिने असंख्यवक्त्रभुजपादाय तस्मिन् सिद्धाय वेतालवित्रासिने शाकिनीक्षोभजनकाय व्याधिनिग्रहकारिणे पापभञ्जनाय सूर्य्यसोमाग्निनेत्राय विष्णुकवचाय खड्गवज्रहस्ताय यमदण्डवरुणपाशाय रुद्रशूलाय ज्वलज्जिह्वाय सर्व्वरोगविद्रावणाय ग्रहनिग्रहकारिणे दुष्टनागक्षयकारिणे ओं कृष्णपिङ्गलाय फट् । हूँकारास्त्राय फट् । वज्रहस्ताय फट् । शक्तये फट् । दण्डाय फट् । यमाय फट् । खड्गाय फट् । वारुणाय फट् । पाशाय फट् । ध्वजाय फट् । अङ्कुशाय फट् । गदायै फट् । कुवेराय फट् । त्रिशूलाय फट् । मुद्गराय फट् । चक्राय फट् । पद्माय फट् । नागास्त्राय फट् । ईशानाय फट् । खेटकास्त्राय फट् । मुण्डास्त्राय फट् । कङ्कालास्त्राय फट् । पिच्छिकास्त्राय फट् । क्षुरिकास्त्राय फट् । ब्रह्मास्त्राय फट् । शक्त्यस्त्राय फट् । गणास्त्राय फट् । पिलिपिच्छास्त्राय फट् । गन्धर्व्वास्त्राय फट् । पूर्व्वास्त्राय फट् । दक्षिणास्त्राय फट् । वामास्त्राय फट् । पश्चिमास्त्राय फट् । मन्त्रास्त्राय फट् । शाकिन्यस्त्राय

फट्। योगिन्यस्त्राय फट्। दण्डास्त्राय फट्। महादण्डास्त्राय फट्। नानास्त्राय फट्। शिवास्त्राय फट्। ईशानास्त्राय फट्। पुरुषास्त्राय फट्। अघोरास्त्राय फट्। सद्योजातास्त्राय फट्। हृदयास्त्राय फट्। महास्त्राय फट्। गरुड़ास्त्राय फट्। राक्षसास्त्राय फट्। दानवास्त्राय फट्। क्षौं नरसिंहास्त्राय फट्। त्वष्ट्रस्त्राय फट्। सर्व्वास्त्राय फट्। नः फट्। वः फट्। पः फट्। फः फट्। मः फट्। श्री फट्। फेः फट्। भूः फट्। भुवः फट्। स्वः फट्। महः फट्। जनः फट्। तपः फट्। सर्व्वलोक फट्। सर्व्वपाताल फट्। सर्वतत्त्व फट्। सर्वप्राण फट्। सर्वनाड़ी फट्। सर्वकारण फट्। सर्वदेव फट्। ह्रीं फट्। श्रीँ फट्। हूँ फट्। स्त्रुँ फट्। स्वां फट्। लां फट्। वैराग्याय फट्। मायास्त्राय फट्। कामास्त्राय फट्। क्षेत्रपालास्त्राय फट्। हुँकारास्त्राय फट्। भास्करास्त्राय फट्। चन्द्रास्त्राय फट्। विघ्नेश्वरास्त्राय फट्। ख्रां ख्रौं फट्। ह्रौं ह्रौं फट्। भ्रामय २ फट्। छादय २ फट्। उन्मूलय २ फट्। त्रासय २ फट्। सञ्जीवय २ फट्। विद्रावय २ फट्। सर्व्वदुरितं नाशय २ फट्॥

सकृदावर्त्तनादेव सर्वविघ्नान् विनाशयेत्।
शतावर्त्तेन चोत्पातानृणादौ विजयो भवेत्॥ २॥
घृतगुग्गुलुहोमाच्च असाध्यानपि(१) साधयेत्।
पठनात्सर्वशान्तिः स्यादस्त्रपाशुपतस्य च॥ ३॥

इत्याग्नेये महापुराणे पाशुपतशान्तिर्नामैकविंशत्यधिकत्रिशततमोऽध्यायः।

---

१ असाध्यमपीति ख०।

# अथ द्वाविंशत्यधिकत्रिशततमोऽध्यायः।

———ooo@ooo———

षडङ्गान्यघोरास्त्राणि।

ईश्वर उवाच। ओं फ्रूँ हंसइति मन्त्रेण मृत्युरोगादि शाम्यति।

लक्षाहुतिभिर्दूर्व्वाभिः शान्तिं पुष्टिं प्रसाधयेत्॥ १॥

अथ वा प्रणवेनैव मायया वा षडानन।

दिव्यान्तरीक्षभौमानां शान्तिरुत्पातहृच्चके॥ २॥

ओं नमो भगवति गङ्गे कालि२ महाकालि२ मांसशोणित-
भोजने रक्तकृष्णमुखि वशमानय मानुषान् स्वाहा॥

ओं लक्षं जप्त्वा दशांशेन हुत्वा स्यात् सर्वकर्मकृत्।

वशं नयति शक्रादीन्मानुषेष्वेषु का कथा॥ ३॥

अन्तर्द्धानकरी विद्या मोहनी जृम्भनी तथा।

वशन्नयति शत्रूणां शस्त्रबुद्धिप्रमोहिनी॥ ४॥

कामधेनुरियं विद्या सप्तधा परिकीर्त्तिता।

मन्त्रराजं प्रवक्ष्यामि शत्रुचौरादिमोहनम्॥ ५॥

महाभयेषु सर्व्वेषु स्मर्त्तव्यं हरपूजितं।

लक्षं जप्त्वा तिलैर्होमः सिद्धेऽद्धारकं शृणु॥ ६॥

ओं हले शूले एहि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन रक्ष
मां वाचेश्वराय स्वाहा॥

दुर्गोत्तारयते यस्मात्तेन दुर्गा शिवा मता।

ओं चण्डकपालिनि दन्तान् किटि२ चिटि२ गुह्ये फट् ह्रीँ।

अनेन मन्त्रराजेन चालयित्वा तु तण्डुलान्॥ ७॥

त्रिंशद्वाराणि जप्तानि तच्चौरेषु प्रदापयेत् ।
दन्तैश्चूर्णानि शुक्लानि पतितानि हि शुद्धये ॥ ८ ॥

ओं ज्वलल्लोचन कपिलजटाभारभास्वर विद्रावण त्रैलोक्यडामर२ दर२ भ्रमर२ आकट्ट२ तोटय२ मोटय२ दह२ पच२ एवं सिद्धिरुद्रो ज्ञापयति यदि ग्रहोपगतः स्वर्गलोकं देवलोकं वा आरामविहाराचलं तथापि तमावर्त्तयिष्यामि बलिं गृह्ण २ ददामि ते स्वाहेति ।

क्षेत्रपालबलिं दत्वा ग्रहो न्यासाद्दृढं व्रजेत् ।
शत्रवो नाशमायान्ति रणे वैरगणक्षयः ॥ ९ ॥
हंसबीजन्तु विन्यस्य विषन्तु(१) त्रिविधं हरेत् ।
अगुरुश्चन्दनं कुष्ठं कुङ्कुमं नागकेशरम् ॥ १० ॥
नखं वै देवदारुश्च समं कृत्वाथ धूपकः ।
माक्षिकेन समायुक्तो देहवस्त्रादिधूपनात् ॥ ११ ॥
विवादे मोहने स्त्रीणां भण्डने कलहे शुभः ।
कन्याया वरणे भाग्ये मायामन्त्रेण मन्त्रितः ॥ १२ ॥
ह्रीं रोचनानागपुष्पाणि कुङ्कुमञ्च मनःशिला ।
ललाटे तिलकं कृत्वा यं पश्येत्स वशी भवेत् ॥ १३ ॥
शतावर्य्यास्तु चूर्णन्तु दुग्धपीतञ्च पुत्रकृत् ।
नागकेशरचूर्णन्तु घृतपक्वन्तु पुत्रकृत् ॥ १४ ॥
पालाशबीजपानेन लभेत पुत्रकन्तथा ।

ओं उत्तिष्ठ चामुण्डे जम्भय२ मोहय २ अमुकं वशमानय २ स्वाहा ।

---

१ विषुग्निरिति ख०, ङ० च ।

षड्विंशा सिद्धविद्या सा नदीतीरमृदा स्त्रियम् ॥१५॥
कृत्वोन्मत्तरसेनैव नामालिख्यार्कपत्रके ।
मूत्रोत्सर्गस्ततः कृत्वा जपेत्तामानयेत्स्त्रियम् ॥ १६ ॥
ओं जुं सः वषट् ।
महामृत्युञ्जयो मन्त्रो जप्याद्धोमाच्च पुष्टिकृत् ।
ओं हंसः क्रूँ क्ष्ँ स क्षः सौंः ।
मृतसञ्जीवनी विद्या अष्टार्णा जयकृद्रणे ॥ १७ ॥
मन्त्रा ईशानमुख्याश्च धर्म्मकामादिदायकाः ।
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ॥ १८ ॥
ब्रह्मणधाधिपतिर्ब्रह्म शिवो मेऽस्तु सदाशिवः ।
ओं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।
ओं अघोरेभ्योऽथ घोरेभ्यो घोरघोरेभ्यस्तु सर्वतः ॥ १९ ॥
सर्व्वेभ्यो नमस्ते रुद्ररूपेभ्यः । ओं वामदेवाय नमो ज्येष्ठाय नमः रुद्राय नमः । कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः । सर्व्वभूतदमनाय नमो मनोन्मनाय नमः ।
ओं सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।
भवे भवेऽनादिभवे भजस्व मां भवोद्भव ॥ २० ॥
पञ्चब्रह्माङ्गषट्कञ्च(१) वक्ष्येऽहं भुक्तिमुक्तिदं ।
ओं नमः परमात्मने पराय कामदाय परमेश्वराय योगाय योगसम्भवाय सर्व्वकराय कुरु२ सत्य२ भव२ भवोद्भव वामदेव सर्व्वकार्य्यकर पापप्रशमन सदाशिव प्रसन्न नमोऽस्तु ते स्वाहा ॥

---

(१) पञ्चब्रह्माङ्गकारमिति ख०।

हृदयं सर्व्वार्थदन्तु सप्तत्यक्षरसंयुतं ।

ओं शिवः शिवाय नमः शिवः । ओं हृदये ज्वालिनि स्वाहा शिखा । ओं शिवात्मक महातेजः सर्व्वज्ञ प्रभुरावर्त्तय महाघोर कवच पिङ्गल नमः । महाकवच शिवाज्ञया हृदयं बन्ध २ घूर्णय २ चूर्णय २ सूक्ष्मवज्रधर वज्रपाश धनुर्व्वज्राशनिवज्रशरीर मम शरीरमनुप्रविश्य सर्व्वदुष्टान् स्तम्भय२ हुँ ।

अक्षराणान्तु कवचं शतं पञ्चाक्षराधिकम् ॥ २१ ॥

ओं ओजसे नेत्रं ओं प्रस्फुर२ तनुरूप२ चट२ प्रचट२ कट२ वम२ घातय२ हुं फट् अघोरास्त्रम् ॥

इत्याग्नेये महापुराणे षडङ्गान्यघोरस्त्राणि नाम द्वाविंशत्यधिकत्रिशततमोऽध्यायः ।

---

## अथ त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ।

### रुद्रशान्तिः ।

ईश्वर उवाच । शिवशान्तिं प्रवक्ष्यामि कल्याघोरशपूर्व्वकम् ।

सप्तकोटाधिपो घोरो ब्रह्महत्याद्यघार्द्दनः(१) ॥ १ ॥

उत्तमाधमसिद्धीणामालयोऽखिलरोगनुत् ।

दिव्यान्तरीक्षभौमानामुत्पातानां विमर्द्दनः ॥ २ ॥

विषग्रहपिशाचानां ग्रसनः सर्व्वकामकृत् ।

प्रायश्चित्तमघौघार्त्ती दौर्भाग्यार्त्तिविनाशनम् ॥ ३ ॥

एकवीरन्तु विन्यस्य ध्येयः पञ्चमुखः सदा ।

---

१ ब्रह्महत्यादिमर्द्दन इति ख० ।

शान्तिके पौष्टिके शुक्लो रक्तो वश्येऽथ पीतकः ॥ ४ ॥
स्तम्भने धूम्र उच्चाटमारणे कृष्णवर्णकः ।
कर्षणः कपिलो मोहे द्वात्रिंशद्वर्णमर्च्चयेत् ॥ ५ ॥
त्रिंशल्लक्षं जपेन्मन्त्रं होमं कुर्य्याद्दशांशतः ।
गुग्गुलाम्तयुक्तेन सिद्धोऽसिद्धोऽथ सर्व्वकृत् ॥ ६ ॥
अघोरान्नापरो मन्त्रो विद्यते भुक्तिमुक्तिकृत् ।
अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत् ॥ ७ ॥
अघोरास्त्रमघोरन्तु द्वाविमौ मन्त्रराजकौ ।
जपहोमार्च्चनाद्युद्धे शत्रुसैन्यं विमर्द्दयेत् ॥ ८ ॥
रुद्रशान्तिं प्रवक्ष्यामि शिवां सर्व्वार्थसाधनीं ।
पुत्रार्थं ग्रहनाशार्थं विषव्याधिविनष्टये ॥ ९ ॥
दुर्भिक्षमारीशान्त्यर्थं दुःस्वप्नहरणाय च ।
बलादिराज्यप्राप्त्यर्थं रिपूणां नाशनाय च ॥ १० ॥
अकालफलिते वृक्षे सर्व्वग्रहविमर्द्दने ।
पूजने तु नमस्कारः स्वाहान्तो हवने तथा ॥ ११ ॥
आप्यायने वषट्कारं पुष्टौ वौषड्नियोजयेत् ।
चकारद्वितयस्थाने(१) जातियोगन्तु कारयेत् ॥ १२ ॥

ओँ रुद्राय च ते ओँ वृषभाय नमः अविमुक्ताय असम्भवाय पुरुषाय च पूज्याय ईशानाय पौरुषाय पञ्च चोत्तरे विश्वरूपाय करालाय विकृतरूपाय अविकृतरूपाय ।

निकृतौ(२) चापरे काले अप्सु माया च नैरृते ।

१ द्वकारद्वितयस्थान इति ख० । उकारद्वितयस्थान इति ङ० ।

२ निषताविति ख०, ङ० च ।

एकपिङ्गलाय श्वेतपिङ्गलाय कृष्णपिङ्गलाय नमः। मधुपिङ्गलाय नमः मधुपिङ्गलाय नियतौ अनन्ताय आर्द्राय शुष्काय पयोगणाय। कालतत्त्वे। करालाय विकरालाय। द्वौ मायातत्त्वे। सहस्रशीर्षाय सहस्रवक्त्राय सहस्रकरचरणाय सहस्रलिङ्गाय। विद्यातत्त्वे। सहस्राद्यावाङ्गिन्यसेद् दक्षिणे दले। एकजटाय द्विजटाय त्रिजटाय स्वाहा। काराय स्वधाकाराय वषट्काराय षड्रुद्राय। ईशतत्त्वे तु वक्षिपत्रे स्थिता गुह। भूतपतये पशुपतये उमापतये कालाधिपतये। सदाशिवाख्यतत्त्वे षट् पूज्याः पूर्वदले स्थिताः। उमायै कुरूपधारिणि ओं कुरु २ रुद्विणि २ रुद्रोभि देवानां देवदेवविशाख हन २ दह २ पच २ मथ २ तुरु २ अरु २ सुरु २(१) रुद्रशान्तिमनुस्मर कृष्णपिङ्गल अकालपिशाचाधिपतिविश्वेश्वराय नमः। शिवतत्त्वे कर्णिकायां पूज्यौ ह्युमामहेश्वरौ। ओं व्योमव्यापिने व्योमरूपाय सर्वव्यापिने शिवाय अनन्ताय अनाथाय अनाश्रिताय शिवाय। शिवतत्त्वे नव पदानि व्योमव्याप्यभिधास्यहि। शाश्वताय योगपीठसंस्थिताय नित्यं योगिने ध्यानाहाराय नमः। ओं नमः शिवाय सर्वप्रभवे शिवाय ईशानमूर्द्धाय तत्पुरुषादिपञ्चवक्त्राय नवपदं पूर्वदले सदाख्ये पूजयेद्गुह। अघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्त्तये। ओं नमो नमः। गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्व्वयोगाधिकृताय ज्योतीरूपाय अग्निपत्रे शोभतत्त्वे विद्यातत्त्वे द्वे याम्यगे परमेश्वराय चेतनाचेतन व्योमन व्यापिन. प्रथम तेजस्तेजः मायातत्त्वे नैर्ऋते कालतत्त्वे

१ सुरु१ इति ग०।

ऽथ वारुणे। ओं ध्रु ध्रु नाना वां वां अनिधान निधनोद्भव शिव सर्वपरमात्मन् महादेव सद्भावेश्वर महातेज योगाधिपते मुञ्च २ प्रमथ२ ओं सर्व२ ओं भव२ ओं भवोद्भव। सर्वभूतसुखप्रद वायुपत्रेऽथ निवृतो पुरुषे चोत्तरेन च। सर्वसान्निध्यकर ब्रह्म-विष्णुरुद्रपर अनर्चित अस्तुतस्तु च साक्षिन२ तुरु२ पतङ्ग पिङ्ग२ ज्ञान२ शब्द२ सूक्ष्म२ शिव२ सर्वप्रद२ ओं नमः शिवाय ओं नमो नमः शिवाय ओं नमो नमः।

ईशाने प्राकृते तत्त्वे पूजयेज्जुहुयाज्जपेत्।
यहरोगादिमायाग्निशमनी सर्वसिद्धिकृत्॥ १३॥

इत्याग्नेये महापुराणे रुद्रशान्तिर्नाम त्रयोविंशत्यधिक-त्रिशततमोऽध्यायः।

---

## अथ चतुर्विंशत्यधिकत्रिशततमोऽध्यायः।

———000@000———

### अंशकादिः।

ईश्वर उवाच। रुद्राक्षकटकं धार्य्यं विषमं सुसमं दृढम्।
एकत्रिपञ्चवदनं यथालाभन्तु धारयेत्॥ १॥
द्विचतुःपञ्चमुखं शस्तमव्रणं तीव्रकण्टकं।
दक्षबाहौ शिखादौ च धारयेच्चतुराननं॥ २॥
अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत्।
हैमी वा मुद्रिका धार्य्या(१) शिवमन्त्रेण चार्च्चेर तु॥ ३॥

---

१ कार्य्येति ख०।

शिवः शिखा तथा ज्योतिः सवित्रश्चेतिगोचराः ।
गोचरन्तु कुलं ज्ञेयं तेन लक्ष्यस्तु दीक्षितः ॥ ४ ॥
प्राजापत्यो महीपालः कपोतो ग्रन्थिकः शिवे ।
कुटिलाश्चैव वेतालाः पद्महंसाः शिखाकुले ॥ ५ ॥
धृतराष्ट्रा वकाः काका गोपाला ज्योतिसंज्ञके ।
कुटिका साठराश्चैव गुटिका दण्डिनोऽपरे ॥ ६ ॥
सावित्री गोचरे चैवमेकैकस्तु चतुर्विधः ।
सिद्धांशकमाख्यास्ये येन मन्त्रः सुसिद्धिदः ॥ ७ ॥
भूमौ तु मातृका लेख्याः कूटषण्डाववर्ज्जिताः ।
मन्त्राक्षराणि विश्लिष्य अनुस्वारं नयेत् पृथक् ॥ ८ ॥
साधकस्य तु या संज्ञा तस्या विश्लेषणं चरेत् ।
मन्त्रस्यादौ तथा चान्ते साधकार्णानि योजयेत् ॥ ९ ॥
सिद्धः साध्यः सुसिद्धोऽरिः संज्ञातो गणयेत् क्रमात् ।
मन्त्रस्यादौ तथा चान्ते सिद्धिदः स्याच्छतांशतः ॥ १० ॥
सिद्धादिर्यान्तसिद्धश्च तत्क्षणादेव सिध्यति ।
सुसिद्धादिः सुसिद्धान्तः सिद्धवत् परिकल्पयेत् ॥ ११ ॥
अरिमादौ तथान्ते च दूरतः परिवर्ज्जयेत् ।
सिद्धः सुसिद्धश्चैकार्थौ अरिः साध्यस्तथैव च ॥ १२ ॥
आदौ सिद्धः स्थितो मन्त्रे तदन्ते तद्वदेव हि ।
मध्ये रिपुसहस्राणि न दोषाय भवन्ति हि ॥ १३ ॥
मायाप्रसादप्रणवेनांशकः स्यातमन्त्रके ।
ब्रह्मांशको ब्रह्मविद्या विष्णुङ्गो(१) वैष्णवः स्मृतः ॥ १४ ॥

१ विष्णुंश इति ख० ।

रुद्रांशको भवेद्वीर इन्द्रांशश्चेश्वरप्रियः ।
नागांशो नागसत्त्वाढ्यो यक्षांशो भूषणप्रियः ॥ १५ ॥
गन्धर्व्वांशोऽतिगीतादि भीमांशो राक्षसांशकः ।
दैत्यांशः स्याद् युद्धकार्य्यी मानी विद्याधरांशकः ॥ १६ ॥
पिशाचांशो मलाक्रान्तो मन्त्रं दद्यान्निरीक्ष्य च ।
मन्त्र एकात् फड़न्तः स्यात् विद्यापञ्चाशतावधि ॥ १७ ॥
बाला विंशाक्षरान्ता च रुद्रा द्वाविंशगायुधा ।
तत ऊर्द्धन्तु ये मन्त्रा वृद्धा यावच्छतत्रयं ॥ १८ ॥
अकारादिहकारान्ताः क्रमात् पक्षौ सितासितौ ।
अनुस्वारविसर्गेण विना चैव स्वरा दश ॥ १९ ॥
ह्रस्वाः शुक्ला दीर्घाः श्यामास्तिथयः प्रतिपन्मुखाः ।
उदिते शान्तिकादीनि भ्रमिते वश्यकादिकम् ॥ २० ॥
भ्रामिते सन्धयो द्वेषोच्चाटने स्तम्भनेऽस्तकम् ।
इड़ावाहे शान्तिकाद्यं पिङ्गले कर्षणादिकम्(१)॥ २१ ॥
मारणोच्चाटनादीनि विषुवे पञ्चधा पृथक् ।
अधरस्य गृहे पृथ्वी ऊर्द्धे तेजोऽन्तरा द्रवः ॥ २२ ॥
रन्ध्रपार्श्वे वहिर्वायुः सर्वं व्याप्य महेश्वरः ।
स्तम्भनं पार्थिवे शान्तिर्जले वश्यादि तेजसे ।
वायौ स्याद् भ्रमणं शून्ये पुण्यं कालं समभ्यसेत् ॥ २३ ॥

इत्याग्नेये महापुराणे अंशकादिर्नाम चतुर्विंशत्यधिक-
त्रिशततमोऽध्यायः ।

---

१ कर्षकादिकमिति ख०, ङ० च ।

## अथ पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ।

—·-·—

### गौर्य्यादिपूजा ।

ईश्वर उवाच । सौभाग्यादेरुमापूजां वक्ष्ये ऽहं भुक्तिमुक्तिदां ।
मन्त्रध्यानं मण्डलञ्च मुद्रां होमादिसाधनम् ॥ १ ॥
चित्रभानुं शिवं कालं महाशक्तिसमन्वितम् ।
हृदाद्यं परतोहृत्य सदेवः सविकारणम् ॥ २ ॥
द्वितीयं द्वारकाक्रान्तं गौरीप्रीतिपदान्वितं ।
चतुर्थ्यन्तं प्रकर्त्तव्यं गौर्य्या वै मूलवाचकं ॥ ३ ॥
श्रीं ह्रीं सः शौं गौर्य्यै नमः ।
तथार्णत्रितयेनैव जातियुक्तं षडङ्गुलम् ।
आसनं प्रणवेणैव मूर्त्तिं वै हृदयेन तु ॥ ४ ॥
उदकञ्च तथा कालं शिवबीजं समुच्चरेत् ।
प्राणं दीर्घस्वराक्रान्तं षडङ्गं जातिसंयुतम् ॥ ५ ॥
आसनं प्रणवेनात्र मूर्त्तिन्यासं हृदाचरेत् ।
यामलं कथितं वत्स एकवीरं वदाम्यऽथ ॥ ६ ॥
व्यापकं सृष्टिसंयुक्तं वह्निमायाक्रमानुभिः ।
शिवशक्तिमयं बीजं हृदयादिविवर्ज्जितं ॥ ७ ॥
गौरीं यजेद्धेमरूप्यां काष्ठजां शैलजादिकां ।
पञ्चपिण्डां तथाऽव्यक्तां कोणे मध्ये तु पञ्चमं(१) ॥ ८ ॥
ललिता सुभगा गौरी क्षोभणी चाग्नितः क्रमात् ।

---

१ पञ्चमी इति ख० ।

वामा ज्येष्ठा क्रिया ज्ञाना वृत्ते पूर्व्वादितो यजेत् ॥ ९ ॥
सपीठे वामभागे तु शिवस्याव्यक्तरूपकम्।
व्यक्ता त्रिनेत्रा चाम्बरा शुक्ला वा शङ्करान्विता ॥ १० ॥
पीठपद्मद्वयं तारा द्विभुजा वा चतुर्भुजा।
सिंहस्था वा वृषस्था(१) वा अष्टाष्टादशसत्करा ॥ ११ ॥
स्रगक्षसूत्रकलिका गलकोत्पलपिण्डिका।
शरं धनुर्व्वा सव्येन पाणिनान्यतमं वहत् ॥ १२ ॥
वामेन पुस्तताम्बूलदण्डाभयकमण्डलुम्।
गणेशदर्पणेष्वासान्दद्यादेकैकशः क्रमात् ॥ १३ ॥
व्यक्ताव्यक्ताऽथवा कार्य्या पद्ममुद्रा स्मृतासने।
लिङ्गमुद्रा शिवस्योक्ता मुद्रा चावाहनी द्वयोः ॥ १४ ॥
शक्तिमुद्रा तु योन्याख्या चतुरस्रन्तु मण्डलं।
चतुरस्रं त्रिपत्राब्जं मध्यकोष्ठचतुष्टये ॥ १५ ॥
चाश्रोर्द्धं चार्द्धचन्द्रस्तु द्विपदं द्विगुणं क्रमात्।
द्विगुणं द्वारकण्ठन्तु द्विगुणादुपकण्ठतः ॥ १६ ॥
द्वारत्रयं चयं दिक्षु अथ वा भद्रके यजेत्।
स्थण्डिले वाथ संस्थाप्य पञ्चगव्यामृतादिना ॥ १७ ॥
रक्तपुष्पाणि देयानि पूजयित्वा ह्युदङ्मुखः।
शतं हुत्वामृताज्यञ्च पूर्णादः सर्व्वसिद्धिभाक् ॥ १८ ॥
बलिन्दत्वा कुमारीश्च तिस्रो वा चाष्ट भोजयेत्(२)।
नैवेद्यं शिवभक्तेषु दद्याच्च स्वयमाचरेत् ॥ १९ ॥

---

१ सिंहस्थावाश्वसिंहस्थेति ख०, ग०, घ०, ङ० च।
२ त्रिस्रो चाष्ट च भोजयेदिति ख०, ङ० च।

कन्यार्थी लभते कन्यां अपुत्रः पुत्रमाप्नुयात् ।
दुर्भगा चैव सौभाग्यं राजा राज्यं जयं रणे ॥ २० ॥
अष्टलक्षैश्च वाक्सिद्धिर्देवाद्या वशमाप्नुयुः ।
न निवेद्य न चाश्नीयाद्वामहस्तेन चार्चयेत् ॥ २१ ॥
अष्टम्याञ्च चतुर्दश्यां तृतीयायां विशेषतः ।
मृत्युञ्जयार्च्चनं वक्ष्ये पूजयेत् कलसोदरे ॥ २२ ॥
क्षयमानञ्च प्रणवो मूर्त्तिरोजस ईदृशं ।
मूलञ्च वौषडन्तेन कुम्भमुद्रां प्रदर्शयेत् ॥ २३ ॥
होमयेत् क्षीरदुर्वाज्यममृताञ्च पुनर्नवाम् ।
पायसञ्च पुरोडाशमयुतन्तु जपेन्मनुं ॥ २४ ॥
चतुर्मुखं चतुर्बाहुं द्वाभ्याञ्च कलसन्दधत् ।
वरदाभयकं द्वाभ्यां स्नायाद्वै कुम्भमुद्रया ॥ २५ ॥
आरोग्यैश्वर्य्यदीर्घायुरौषधं मन्त्रितं शुभम् ।
अपमृत्युहरो ध्यातः पूजितोऽद्भुत एव सः ॥ २६ ॥

इत्याग्नेये महापुराणे गौर्य्यादिपूजा नाम पञ्चविंशत्यधिक-त्रिशततमोऽध्यायः ।

---

## अथ षड्विंशत्यधिकत्रिशततमोऽध्यायः ।

—ooo—

### देवालयमाहात्म्यम् ।

ईश्वर उवाच । व्रतेश्वरांश सत्यादीनिष्ट्वा व्रतसमर्पणम् ।
अरिष्टशमने शस्तमरिष्टं सुरनायकम् ॥ १ ॥

हेमरत्नमयं भूत्यै महाशङ्खञ्च मारणे।
आप्यायने शङ्खसूत्रं मौक्तिकं पुत्रवर्द्धनम्॥ २॥
स्फाटिकं भूतिदं कौशं मुक्तिदं (१) रुद्रनेत्रजं।
धात्रीफलप्रमाणेन रुद्राक्षं चोत्तमन्ततः॥ ३॥
समेरु मेरुहीनं वा सूत्रं जप्यन्तु मानसम्।
अनामाङ्गुष्ठमाक्रम्य जपं भाष्यन्तु कारयेत्॥ ४॥
तर्ज्जन्यङ्गुष्ठमाक्रम्य न मेरुं लङ्घयेज्जपे।
प्रमादात् पतिते सूत्रे जप्तव्यन्तु शतद्वयम्॥ ५॥
सर्व्ववाद्यमयी घण्टा तस्या वादनमर्थकृत्।
गोशकृन्मूत्रवल्मीकमृत्तिकाभस्मवारिभिः॥ ६॥
वेश्मायतनलिङ्गादेः कार्य्यमेवं विशोधनम्।
स्कन्दो नमः शिवायेति मन्त्रः सर्व्वार्थसाधकः॥ ७॥
गीतः पञ्चाक्षरो वेदे लोके गीतः षडक्षरः।
ओमित्यन्ते स्थितः शम्भुर्मुद्रार्थं वटबीजवत्॥ ८॥
क्रमान्नमः शिवायेति ईशानाद्यानि वै विदुः।
षडक्षरस्य सूत्रस्य भाष्यद्विद्याकदम्बकं॥ ९॥
यदों नमः शिवायेति एतावत् परमं पदम्।
अनेन पूजयेल्लिङ्गं लिङ्गे यस्मात् स्थितः शिवः॥ १०॥
अनुग्रहाय लोकानां धर्म्मकामार्थमुक्तिदः।
यो न पूजयते लिङ्गन्न स धर्म्मादिभाजनं॥ ११॥
लिङ्गार्च्चनाद्भुक्तिमुक्तिर्यावज्जीवमतो यजेत्।
वरं प्राणपरित्यागो भुञ्जीतापूज्य नैव तं॥ १२॥

१ भक्तिदमिति ख०।

रुद्रस्य पूजनाद्रुद्रो विष्णुः स्याद्विष्णुपूजनात् ।
सूर्य्यः स्यात् सूर्य्यपूजातः शक्त्यादिः शक्तिपूजनात् ॥ १३ ॥
सर्वयज्ञतपोदाने तीर्थे वेदेषु यत् फलं ।
तत् फलं कोटिगुणितं स्थाप्य लिङ्गं लभेन्नरः ॥ १४ ॥
त्रिसन्ध्यं योऽर्चयेल्लिङ्गं कृत्वा विल्वेन पार्थिवम् ।
शतैकादशिकं यावत् कुलमुद्धृत्य नाकभाक् ॥ १५ ॥
भक्त्या वित्तानुसारेण कुर्य्यात् प्रासादसञ्चयम् ।
अल्पे महति वा तुल्यफलमाढ्यदरिद्रयोः ॥ १६ ॥
भागद्वयञ्च धर्मार्थं कल्पयेज्जीवनाय च ।
धनस्य भागमेकन्तु (१)अनित्यं जीवितं यतः ॥ १७ ॥
त्रिसप्तकुलमुद्धृत्य देवागारकृदर्थभाक् ।
मृत्काष्ठेष्टकशैलाद्यैः क्रमात् कोटिगुणं फलम् ॥ १८ ॥
अष्टेष्टकसुरागारकारी स्वर्गमवाप्नुयात् ।
पांशुना क्रीडमानोऽपि देवागारकृदर्थभाक् ॥ १९ ॥

इत्याग्नेये महापुराणे देवालयमाहात्म्यादिर्नाम षड्विंशत्यधिकशततमोऽध्यायः ।

---

## अथ सप्तविंशत्यधिकशततमोऽध्यायः ।

——००० ——

### छन्दःसारः ।

अग्निरुवाच । छन्दो वक्ष्ये मूलजैस्तैः पिङ्गलोक्तं यथाक्रमम् ।
सर्व्वादिमध्यान्तगणौ म्नौ भ्यौ जौ स्तौ त्रिको गणाः ॥१॥

---

१ धनस्याद्यांशमेकन्त्विति ख० ।

ह्रस्वो गुरुर्व्वा पादान्ते पूर्व्वो योगाद् विसर्गतः ।
अनुस्वाराद्व्यञ्जनात् स्यात् जिह्वामूलीयतस्तथा ॥ २ ॥
उपाध्मानीयतो दीर्घो गुरुर्ग्लौ नौ गणाविह ।
वसवोऽष्टौ च चत्वारो वेदादित्यादिलोपतः ॥ ३ ॥
इत्याग्नेये महापुराणे छन्दःसारो नाम सप्तविंशत्यधिक-
त्रिशततमोऽध्यायः ।

---

## अथाष्टाविंशत्यधिकत्रिशततमोऽध्यायः ।

—ooo—

छन्दःसारः ।

अग्निरुवाच । छन्दोधिकारे गायत्री दैवी चैकाक्षरी भवेत् ।
पञ्चदशाक्षरी सा स्यात् प्राजापत्याष्टवर्णिका ॥ १ ॥
यजुषां षड्वर्णा गायत्री साम्नां स्याद्द्वादशाक्षरा ।
ऋचामष्टादशार्णा स्यात्साम्नां वर्द्धेत च द्वयं ॥ २ ॥
ऋचां तुर्य्यश्च वर्द्धेत प्राजापत्याचतुष्टयं ।
वर्द्धेदेकैककं शेषे आसुर्य्यादिक्रमुत्सृजेत् ॥ ३ ॥
उष्णिगनुष्टुब् वृहती पङ्क्तिस्त्रिष्टु जगत्यपि ।
तानि ज्ञेयानि क्रमशो गायत्र्यो ब्राह्म एव ताः ॥ ४ ॥
तिस्रस्तिस्रः समान्यः स्युरेकैका आर्य्य एव च ।
ऋग्यजुषां संज्ञाः स्युश्चतुःषष्टिपदे लिखेत् ॥ ५ ॥
इत्याग्नेये महापुराणे छन्दःसारो नामाष्टाविंशत्यधिक-
त्रिशततमोऽध्यायः ।

---

## अथोनचिंशदधिकत्रिशततमोऽध्यायः।



### छन्दःसारः।

अग्निरुवाच। पादश्चापादपूरणे गायत्रो वसवः स्मृताः।
जगत्या आदित्याः पादो विराजो दिश ईरिताः॥ १॥
त्रिष्टुतो रुद्राः पादः स्याच्छन्द एकादिपादकं।
आद्यं चतुष्पाच्चतुर्भिस्त्रिपात् सप्ताक्षरैः क्वचित्॥ २॥
सा गायत्री पदे नीवृत् तत्प्रतिष्ठादि षट् त्रिपात्।
वर्धमाना षड्ष्टाष्टा त्रिपात् षड्वसुभूधरैः॥ ३॥
गायत्री त्रिपदा नीवृत् नागी नवनवर्त्तुभिः।
वाराही रसद्विरसा छन्दश्चाथ तृतीयकम्॥ ४॥
द्विपाद् द्वादशवस्वन्तैः त्रिपात्तु त्रैष्टुभैः स्मृतम्।
उष्णिक् छन्दोऽष्टवसुकैः पादैर्वेदे प्रकीर्त्तितः॥ ५॥
ककुबुष्णिगष्टसूर्य्यवस्वर्णा त्रिभिरेव सः।
पुनरुष्णिक् सूर्य्यवसुवस्वर्णैश्च त्रिपाद्भवेत्॥ ६॥
परोष्णिक् परतस्तस्माच्चतुष्पादात् त्रिभिर्भवेत्।
साष्टाक्षरैरनुष्टुप् स्यात् चतुष्पाच्च त्रिपात् क्वचित्॥ ७॥
अष्टार्कसूर्य्यवर्णैः स्याद् मध्येऽन्ते च क्वचिद्भवेत्।
बृहतीजगत्यस्त्रयो गायत्र्याः पूर्व्वको यदि॥ ८॥
तृतीयः पथ्या भवति द्वितीयान्यं कुमारिणी।
स्कन्धो ग्रीवा क्रौष्टुके स्याद् यत्र स्याद्दो बृहत्यपि॥ ९॥

उपरिष्टाद्बृहत्यन्ते पुरस्ताद्बृहती पुनः ।
क्वचिन्नवकाश्चत्वारो दिग्विदिक्ष्वष्टवर्णिकाः ॥ १० ॥
महाबृहती जागतैः स्यात् त्रिभिः सतो बृहत्यपि ।
अण्डिलः पङ्क्तिच्छन्दः स्यात् सूर्य्याकाष्टाष्टवर्णकैः ॥ ११ ॥
पूर्व्वौ वेदयुजौ सतः पङ्क्तिश्च विपरीतकौ ।
प्रस्तारपङ्क्तिः पुरतः पश्चादास्तारपङ्क्तिका ॥ १२ ॥
अक्षरपङ्क्तिः पञ्चकाश्चत्वारश्चाल्पशो द्वयं ।
पदपङ्क्तिः पञ्च भवेच्चतुष्कं षट्ककत्रयम् ॥ १३ ॥
षट्कपञ्चभिर्गायत्रैः षड्भिः जगती भवेत् ।
एकेन त्रिष्टुब्ज्योतिष्मती तथैव जगतीरिता ॥ १४ ॥
पुरस्ताज्ज्योतिः प्रथमे मध्ये ज्योतिश्च मध्यतः ।
उपरिष्टाज्ज्योतिरन्त्यादेकस्मिन् पञ्चके तथा ॥ १५ ॥
भवेच्छन्दः शङ्कुमती षट्के छन्दः ककुद्मती ।
त्रिपादगिशुमध्या स्यात् सा पिपीलिकमध्यमा(१) ॥१६॥
विपरीता यवमध्या त्रिवृदेकेन वर्जिता ।
भूरिजैकेनाधिकेन द्विहीना च विराड्भवेत् ॥ १७ ॥
स्वराट् स्याद्वाभ्यामधिकं सन्दिग्धे दैवतादितः ।
आदिपादान्निश्चयः स्याच्छन्दसां देवता क्रमात् ॥ १८ ॥
अग्निः सूर्य्यः शशी जीवो वरुणश्चन्द्र एव च ।
विश्वेदेवाश्च षड्जाद्याः स्वराः षड्जो वृषः क्रमात् ॥ १९ ॥
गान्धारो मध्यमश्चैव पञ्चमो धैवतस्तथा ।
निषादवर्णाः श्वेतश्च सारङ्गश्च पिशङ्गकः ॥ २० ॥

१ सपिपीलिकमध्यमेति ख० ।

कृष्णो नीलो लोहितश्च गौरो गायत्रिमुख्यके।
गोरोचनाभाः कृतयो ज्योतिश्छन्दो हि श्यामलं ॥ २१ ॥
अग्निर्वैश्यः काश्यपश्च गौतमाङ्गिरसौ क्रमात्।
भार्गवः कौशिकश्चैव वाशिष्ठो गोत्रमीरितं ॥ २२ ॥

इत्याग्नेये महापुराणे छन्दःसारो नामोनत्रिंशदधिक-
त्रिशततमोऽध्यायः।

---

## अथ त्रिंशदधिकत्रिशततमोऽध्यायः।

छन्दोजातिनिरूपणम्।

अग्निरुवाच। चतुःशतमुत्कृतिः स्यादुत्कृतेश्चतुरस्त्यजेत्।
अभिसंख्या प्रत्यकृतिस्तानि छन्दांसि वै पृथक्॥ १ ॥
कृतिश्चातिधृतिवृत्तो(१) अत्यष्टिश्चाष्टिरित्यतः।
अतिशक्वरी शक्करीति अतिजगती जगत्यपि ॥ २ ॥
छन्दोऽत्र लौकिकं स्याच्च आर्षमात्रैष्टुभात् स्मृतम्।
त्रिष्टुप्पङ्क्तिबृहती अनुष्टुबुष्णिगीरितम्॥ ३ ॥
गायत्री स्यात् सुप्रतिष्ठा प्रतिष्ठा मध्यया सह।
अत्युक्तात्युक्त आदिश्च एकैकाक्षरवर्जितम्॥ ४ ॥
चतुर्भागो भवेत् पादो गणच्छन्दः प्रदर्श्यते।
तावन्तः समुद्रा गणा ह्यादिमध्यान्तसर्वगाः ॥ ५ ॥

---

१ कृतिश्चातिधृतिर्हि त्तौ’ति अ०, ड० च।

चतुर्थः पञ्च च गणा आर्य्यालक्षणमुच्यते ।
स्वरार्द्धञ्चार्य्यार्द्धं स्यादार्य्यायां विषमेन जः ॥ ६ ॥
षष्ठो जो नलपूर्वा स्याद्‌द्वितीयादिपदं नले ।
सप्तमेऽन्ते प्रथमा च द्वितीये पञ्चमे नले ॥ ७ ॥
अर्द्धे पदं प्रथमादि षष्ठ एको लघुर्भवेत् ।
त्रिषु गणेषु पादः स्यादार्य्या पञ्चार्द्धके स्मृता ॥ ८ ॥
विपुलान्याथ चपला गुरुमध्यगतौ च जौ ।
द्वितीयचतुर्थौ पूर्वे च चपला मुखपूर्विका ॥ ९ ॥
द्वितीये जघनपूर्व्वा चपलार्य्या प्रकीर्त्तिता ।
उभयोर्महाचपला गीतवाद्यार्द्धतुल्यका ॥ १० ॥
अन्त्येनार्द्धेनोपगीतिरुद्गीतिश्चोत्क्रमात् स्मृता ।
अर्द्धे रचगणा आर्य्या गीतच्छन्दोऽथ मात्रया ॥ ११ ॥
वैतालीयं द्विस्वरा स्यादयुक्पादे समे नलः ।
वसवोऽन्ते वनगाश्च गोपुच्छन्दगकं भवेत् ॥ १२ ॥
भगणान्ता पाटलिका शेषे परे च पूर्ववत्(१) ।
साकं षड्वा मिश्रायुक् प्राच्यवृत्तिः प्रदर्श्यते ॥ १३ ॥
पञ्चमेन पूर्वसाकं तृतीयेन सहस्रयुक् ।
उदीच्यवृत्तिर्वाच्यां स्याद् युगपञ्च प्रवर्त्तकं ॥ १४ ॥
अयुक्चारुहासिनी स्यादयुगपञ्चान्तिका भवेत् ॥ १५ ॥
सप्ताचिर्वसवश्चैव मात्रासमकमीरितम् ।
भवेन्नलवभो लश्च द्वादशो वा नवासिका ॥ १६ ॥
विश्लोकः पञ्चमाष्टौ मो चित्रा नवमकश्चलः ।

---

१ पुष्पकमिति ख० ।

पणवो मलयेमः(१) स्याज्ज्ञौ गौ मयूरसारिणी।
सत्तामभसगा वृत्तं भजताद्युपरिस्थिता ॥ ४ ॥
रुक्मवती भमसगाविन्द्रावज्रा तजौ जगौ।
जतौ जगौ गूपपूर्व्वावाद्यन्ताद्युपजातयः ॥ ५ ॥
दोधकं भगभागौ स्यात् शालिनी मतभागगौ।
यतिः समुद्रा ऋषयः वातोर्म्मी मभतागगौ ॥ ६ ॥
चतुःस्वरा स्याद्भ्रमरी विलासिता मभौनलौ।
समुद्रा अथ ऋषयो वनौ लौगौ रथोद्धता ॥ ७ ॥
सामताधनभागौगौ वृत्तामनसमाश्च सः।
श्येनी वजवनागः स्याद्रम्या नपरगागगः ॥ ८ ॥
जगती वंशस्था वृत्तं जतौ जावथ तौ जवौ।
इन्द्रवंशा तोटकं सैश्चतुर्भिः प्रतिपादृतः ॥ ९ ॥
भवेद्द्रुतविलम्बिता नभौ भवावथौ नलौ।
स्यौ श्रीपुठो वसुवेदा जलौगतिजलौ जमौ ॥ १० ॥
जसौ वसव्वंवश्चाथ ततं ननमराः स्मृतं।
कुसुमविचित्रा न्यौ यौ नौ नौ रौ स्याच्चलाक्षिका(२)॥११॥
भुजङ्गप्रयातं यैः स्याच्चतुर्भिः स्रग्विणीभवैः।
प्रमिताक्षरा गजौ सौ कान्तोत्पीड़ा मतौ समौ(३) ॥१२॥
वैश्वदेवी(४) ममयायाः पञ्चाङ्गा नवमालिनी।

---

१ मलयाम इति ख०।

२ चरणालिका इति ख०। चञ्चलाक्षिका इति ङ०।

३ समाविति ख०।

४ विश्वदेवीति ख०।

नजौ भयौ प्रतिपादं गणा यदि जगत्यपि ॥ १३ ॥
प्रहर्षणी मवजवा गोपतिर्वङ्क्तिदिक्षु च ।
रुचिरा जभसजगा च्छिन्ना वेदैर्ग्रहैः स्मृता ॥ १४ ॥
मत्तमयूरं मतया सगौ वेदग्रहै यतिः ।
गौरौनललनसागः स्यादसम्बाधा नतौ नगौ ॥ १५ ॥
गोग इन्द्रियनवकौ ननौ वसनगाः स्वराः ।
स्वराश्चापराजिता स्यान्ननभाननगाः स्वराः ॥ १६ ॥
द्विःप्रहरणकलिता(१) वसन्ततिलका नभौ ।
जौ गौ सिंहोन्नता सा स्यान्मुनेरुद्धर्षणी च सा ॥ १७ ॥
चन्द्रावर्त्ता ननौ सोमावर्त्तं तु नवकः स्मृतः ।
मणिगुणनिकरा सौ मालिनी नौ मयौ ययः ॥ १८ ॥
यतिर्वसुस्वरा भौ वौ नतलमिन्नसग्रहाः(२) ।
ऋषभगजविलासितं ज्ञेया शिखरिणी जगौ ॥ १९ ॥
रसभालभृगुरुद्राः पृथ्वीजसजसा जनौ ।
गोवसुग्रहविच्छिन्ना पिङ्गलेनेरिता पुरा ॥ २० ॥
वंशपत्रपतितं स्याद् भवना भौ नगौ सदिक् ।
हरिणी नसमारः सो नगौ रसचतुःस्वराः ॥ २१ ॥
मन्दाक्रान्ता नभनतं तगौगच्छिरसस्वराः ।
कुसुमितलता वेल्लिता मतना ययगाः शराः ॥ २२ ॥
रयाः स्वराः प्रतिरयससजाः सततास्य गः ।
शार्दूलविक्रीडितं स्यादादित्यमुनयो यतिः ॥ २३ ॥

---

१ द्विःप्रहरणकलितेति ख० ।

२ ननमागाभवचपला इति ख० ।

कृतिः सुवदना मोरो भनया भनगाः सुराः ।
यतिर्मुनिरसाश्वाथ इति वृत्तं क्रमात् स्मृतम् ॥ २४ ॥
स्रग्धरा मरतानोमोयपौ त्रिःसप्तका यतिः ।
समुद्रकं भरजानोवनगा दशभास्कराः ॥ २५ ॥
अश्वललितं नजभा जभजा भनमौशतः ।
मत्ताक्रीड़ा मममना नौनम्नौ गोष्टमातिथिः ॥ २६ ॥
तन्वी भनतसाभोभो लग्नौ बाणसुराङ्कका: ।
क्रौञ्चपदा भमतना नौ नौ बाणशराष्टतः ॥ २७ ॥
भुजङ्गविजृम्भितं ममतना ननवासनौ ।
गष्टेशमुनिभिश्छेदो ह्यपहाराख्यमीदृशम् ॥ २८ ॥
मननानतानः सो गगौ यहरसौ रसात्(१) ।
नौ सप्तरोद्दण्डः स्याच्चण्डवृष्टिप्रपातकं(२) ॥ २९ ॥
रेफवृद्धा गणवा स्युर्व्यालजीमूतमुख्यकाः ।
शेषे वै प्रचिता शेया गाथाप्रस्तार उच्यते ॥ ३० ॥

इत्याग्नेये महापुराणे समवृत्तनिरूपणं नाम त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## अथ चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ।

### प्रस्तारनिरूपणम् ।

अग्निरुवाच । छन्दोऽत्र सिद्धं गाका स्यात् पादे सर्व्वगुरौ तथा ।
प्रस्तार आद्यगाधोनः परतुल्योऽथ पूर्व्वगः ॥ १ ॥

---

१ यहरसौ यथादिति ग० ।

२ चण्डवृष्टिप्रपातक इति ङ० ।

नष्टमध्ये समेऽङ्के लः समेऽर्द्धे विषमे गुरुः ।
प्रतिलोमगुणं नाद्यं द्विरुद्दिष्टग एकमुत् ॥ २ ॥
सङ्ख्याद्विरर्द्धे रूपे तु शून्यं शून्ये द्विरीरितं ।
तावदर्द्धे तद्गुणितं द्विद्व्यूनञ्च तदन्ततः ॥ ३ ॥
परे पूर्णं परे पूर्णं मिरुप्रस्तारतो भवेत् ।
नगसंख्या वृत्तसंख्या चाध्वाङ्गुलमधोर्द्धतः ।
सङ्ख्यैव द्विगुणैकोना छन्दःसारोऽयमीरितः ॥ ४ ॥
इत्याग्नेये महापुराणे प्रस्तारनिरूपणं नाम चतुस्त्रिंशदधिक-
त्रिशततमोऽध्यायः ।

---

## अथ पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

### शिक्षानिरूपणम् ।

अग्निरुवाच । वक्ष्ये शिक्षां त्रिषष्टिः स्युर्वर्णा वा चतुराधिकाः ।
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ॥ १ ॥
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ।
अनुस्वारो विसर्गश्च ⁐कौ⁐पौ चापि पराश्रितौ ॥ २ ॥
दुःस्पृष्टश्चेति विज्ञेया ऌकारः प्लुत एव च ।
रङ्गश्च खे अरं प्रोक्तं (१) हकारः पञ्चमैर्युतः ॥ ३ ॥
अन्तस्थाभिः समायुक्त औरस्यः कण्ठ्य एव सः ।
आत्मबुद्ध्या समस्यार्थं मनोयुङ्क्ते विवक्षया ॥ ४ ॥
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।

---

१ वर्गमुखे अरं प्रोक्तमिति ख० ।

मारुतस्तूरसि चरन् मन्द्रं(१) जनयति स्वरं॥ ५॥
प्रातःसवनयोगस्तु छन्दो गायत्रमाश्रितम्।
कण्ठे माध्यन्दिनयुतं मध्यमन्त्रेषु भानुगम्॥ ६॥
तारस्तार्त्तीयसवनं(२)शीर्षण्यं जागतानुगम्।
सोदीर्णो मूर्ध्न्यभिहितो वक्त्रमापद्य मारुतः॥ ७॥
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः।
स्वरतः कालतः स्थानात् प्रयत्नार्थप्रदानतः॥ ८॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च॥ ९॥
स्वभावश्च विवृत्तिश्च शषसा रेफ एव च।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः॥ १०॥
यद्यो भावप्रसन्धानमुकारादि परम्पदं।
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः॥ ११॥
अतीर्थादागतं(३) दग्धमपवर्णञ्च भक्षितं।
एवमुच्चारणं पापमेवमुच्चारणं शुभम्॥ १२॥
अतीर्थादागतं द्रव्यं साम्नायं सुव्यवस्थितं।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्मराजनि॥ १३॥
न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः।
गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति॥ १४॥
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीड़िताः।

१ मन्त्रमिति ख०।

२ भावस्तार्तीयसवनमिति ख०।

३ कुतीर्थादागतमिति ङ०। अतोर्थादागतमिति ख०।

सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ १५ ॥
उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमावधि ॥ १६ ॥
कण्ठ्या वहाविचुयशास्तालव्या ओष्ठजा वुपु ।
स्युर्मूर्धन्या ऋटुरषा(१)दन्त्याः लृतुलसाः स्मृताः ॥ १७ ॥
जिह्वामूले तु कः प्रोक्तो दन्त्योष्ठो वः स्मृतो बुधैः ।
एदैतौ कण्ठतालव्यौ ओ औ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥
अर्धमात्रा तु कण्ठ्य एकारैकारयोर्भवेत् ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ १९ ॥
अचोऽस्पृष्टायणस्त्वीषन्नेमाः स्पृष्टा हलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधाच प्रधानतः ॥ २० ॥
अमोऽनुनासिकानह्नो नादिनो हझषः स्मृताः ।
ईषन्नादोयणजशः श्वासिनश्च खफादयः ।
ईषच्छ्वासं स्वरं विद्याद्गोर्धमेतत् प्रचक्षते ॥ २१ ॥

इत्याग्नेये महापुराणे शिक्षानिरूपणं नाम पञ्चत्रिंशदधिक-
त्रिशततमोऽध्यायः ।

---

१ ऋटुरषा इति ख० ।

# अथ षट्त्रिंशदधिकत्रिशततमोऽध्यायः ।

———ooo———

## काव्यादिलक्षणं ।

अग्निरुवाच । काव्यस्य नाटकादेश्च अलङ्कारान् वदाम्यऽथ ।
ध्वनिर्व्वर्णाः पदं वाक्यमित्येतद्वाङ्मयं मतं ॥ १ ॥
शास्त्रेतिहासवाक्यानां त्रयं यत्र समाप्यते ।
शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता ॥ २ ॥
अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते ।
नरत्वं दुर्लभं लोके विद्या तत्र च दुर्लभा ॥ ३ ॥
कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा ।
व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः ॥ ४ ॥
सर्व्वं शास्त्रमविद्वद्भिर्म्मृग्यमाणन्न सिध्यति ।
आदिवर्णा द्वितीयाश्च महाप्राणास्तुरीयकः ॥ ५ ॥
वर्गेषु वर्णवृन्दं स्यात् पदं सुप्तिङ्प्रभेदतः ।
सङ्क्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ॥ ६ ॥
काव्यं स्फुटदलङ्कारं गुणवद्दोषवर्ज्जितम् ।
योनिर्व्वेदश्च लोकश्च सिद्धमन्नादयोनिजं ॥ ७ ॥
देवादीनां संस्कृतं स्यात् प्राकृतं त्रिविधं नृणां ।
गद्यं पद्यञ्च मिश्रञ्च काव्यादि त्रिविधं स्मृतम् ॥ ८ ॥
अपदः पदसन्तानो गद्यन्तदपि गद्यते ।
चूर्णकोत्कलिकागन्धिवृत्तभेदात् त्रिरूपकम् ॥ ९ ॥
अल्पाल्पविग्रहं नातिमृदुसन्दर्भनिर्भरं ।

चूर्णकं नामतो दीर्घसमासात् कलिका भवेत् ॥ १० ॥
भवेन्मध्यमसन्दर्भन्नातिकुञ्चितविग्रहम् ।
वृत्तच्छायाहरं वृत्तं गन्धिनैतत् किलोत्कटम् ॥ ११ ॥
आख्यायिका कथा खण्डकथा परिकथा तथा ।
कथानिकेति मन्यन्ते गद्यकाव्यञ्च पञ्चधा ॥ १२ ॥
कर्तृवंशप्रशंसा स्याद्यत्र गद्येन विस्तरात् ।
कन्याहरणसंग्रामविप्रलम्भविपत्तयः ॥ १३ ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।
उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा ॥ १४ ॥
वक्त्रं वापरवक्त्रं वा यत्र साख्यायिका स्मृता ।
श्लोकैः स्ववंशं संक्षेपात् कविर्यत्र प्रशंसति ॥ १५ ॥
मुख्यस्यार्थावताराय भवेद्यत्र कथान्तरम् ।
परिच्छेदो न यत्र स्याद्भवेद्वा लम्भकैः क्वचित् ॥ १६ ॥
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीं ।
भवेत् खण्डकथा यासौ यासौ परिकथा तयोः ॥ १७ ॥
अमात्यं सार्थकं वापि द्विजं वा नायकं विदुः ।
स्यात्तयोः करुणं विद्धि विप्रलम्भश्चतुर्व्विधः ॥ १८ ॥
समाप्यते तयोर्नाद्या सा कथामनुधावति ।
कथाख्यायिकयोर्म्मिश्रभावात् परिकथा स्मृता ॥ १९ ॥
भयानकं सुखपरं गर्भे च करुणो रसः ।
अद्भुतोऽन्ते सुक्लृप्तार्थो नोदात्ता सा कथानिका ॥ २० ॥
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्येयमुक्थं तत् कृतिशेषजम् ॥ २१ ॥

मात्राभिर्गणना यत्र सा जातिरिति काश्यपः(१)।
सममर्द्धसमं वृत्तं विषमं पैङ्गलं त्रिधा॥ २२॥
सा विद्या नौस्तितीर्षूणां गभीरं काव्यसागरं।
महाकाव्यं कलापश्च पर्य्याबन्धो विशेषकम्॥ २३॥
कुलकं मुक्तकं कोष इति पद्यकुटुम्बकम्।
सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत्॥ २४॥
तादात्म्यमजहत्तत्र(२) तत्समं नाति दुष्यति।
इतिहासकथोद्भूतमितरद्वा सदाश्रयं॥ २५॥
मन्त्रदूतप्रयाणाजिनियतं नातिविस्तरम्।
शक्वर्य्यातिजगत्यातिशक्वर्य्या त्रिष्टुभा(३) तथा॥ २६॥
पुष्पिताग्रादिभिर्व्वक्राभिजनैश्चारुभिः समैः।
मुक्ता(४) तु भिन्नवृत्तान्ता नातिसंक्षिप्तसर्गकम्॥ २७॥
अतिशर्क्वरिकाष्टिभ्यामेकसङ्कीर्णकैः परः।
मात्रयाप्यपरः सर्गः प्राशस्त्येषु च पश्चिमः॥ २८॥
कल्पोऽतिनिन्दितस्तस्मिन्विशेषानादरः सतां।
नगरार्णवशैलर्त्तुचन्द्रार्काश्रमपादपैः॥ २९॥
उद्यानसलिलक्रीड़ामधुपानरतोत्सवैः।
दूतीवचनविन्यासैरसतीचरिताद्भुतैः॥ ३०॥
तमसा मरुताप्यन्यैर्विभावैरतिनिर्भरैः।

---

१ कश्यप इति ज०, अ०, ङ० च।
२ तादर्थमजहत्तयेति अ०।
३ चानुष्टुभेति अ०।
४ यस्त्रेति अ०।

सर्व्ववृत्तिप्रवृत्तञ्च सर्व्वभावप्रभावितम् ॥ ३१ ॥
सर्व्वरीतिरसैः पुष्टं(१) पुष्टङ्गुणविभूषणैः ।
अत एव महाकाव्यं तत्कर्त्ता च महाकविः ॥ ३२ ॥
वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।
पृथक्प्रयत्ननिर्व्वर्त्यं वाग्वक्रिम्णि रसाद्वपुः ॥ ३३ ॥
चतुर्व्वर्गफलं विश्वग्व्याख्यातं नायकाख्यया ।
समानवृत्तिनिर्व्यूढः कौशिकीवृत्तिकोमलः ॥ ३४ ॥
कलापोऽत्र प्रवासः प्रागनुरागाह्वयो रसः ।
सविशेषकञ्च प्राप्तयादि संस्कृतेनेतरेण च ॥ ३५ ॥
श्लोकैरनेकैः कुलकं स्यात् सन्दानितकानि तत् ।
मुक्तकं श्लोक एकैकश्चमत्कारक्षमः सतां ॥ ३६ ॥
सूक्तिभिः कविसिंहानां सुन्दरीभिः समन्वितः ।
कोषो ब्रह्मापरिच्छिन्नः स विदग्धाय रोचते ॥ ३७ ॥
आभासोपमशक्तिश्च सर्गे यद्भिन्नवृत्तता ।
मिश्रं वपुरिति ख्यातं प्रकीर्णमिति च द्विधा ।
श्रव्यञ्चैवाभिनेयञ्च प्रकीर्णं सकलोक्तिभिः ॥ ३८ ॥

इत्याग्नेये महापुराणे अलङ्कारे काव्यादिलक्षणं नाम षट्त्रिंशदधिकत्रिशततमोऽध्यायः ।

---

१ जुष्टमिति ज०, ङ० च ।

# अथ सप्तत्रिंशदधिकत्रिशततमोऽध्यायः।

———000———

## नाटकनिरूपणम् ।

अग्निरुवाच । नाटकं सप्रकरणं डिम ईहामृगोऽपि वा ।
ज्ञेयः समवकारश्च भवेत् प्रहसनन्तथा ॥ १ ॥
व्यायोगभाणवीथ्यङ्कत्रोटकान्यथ नाटिका ।
सट्टकं शिल्पकः कर्णा एको दुर्म्मल्लिका तथा ॥ २ ॥
प्रस्थानं भाणिका भाणी गोष्ठी हल्लीशकानि च ।
काव्यं श्रीगदितं नाटारासकं रासकं तथा ॥ ३ ॥
उल्लाप्यकं प्रेङ्क्षणञ्च सप्तविंशतिरेव तत् ।
सामान्यञ्च विशेषश्च लक्षणस्य द्वयी गतिः ॥ ४ ॥
सामान्यं सर्व्वविषयं शेषः क्वापि प्रवर्त्तते ।
पूर्व्वरङ्गे निवृत्ते द्वौ देशकालावुभावपि ॥ ५ ॥
रसभावविभावानुभावा अभिनयास्तथा ।
अङ्कः स्थितिश्च सामान्यं सर्व्वत्रैवोपसर्पणात् ॥ ६ ॥
विशेषोऽवसरे वाच्यः सामान्यं पूर्व्वमुच्यते ।
त्रिवर्गसाधनन्नाटामित्याहुः कारणञ्च यत् ॥ ७ ॥
इतिकर्त्तव्यता तस्य पूर्व्वरङ्गो यथाविधि ।
नान्दीमुखानि द्वात्रिंशदङ्गानि पूर्व्वरङ्गके ॥ ८ ॥
देवतानां नमस्कारो गुरूणामपि च स्तुतिः ।
गोब्राह्मणनृपादीनामाशीर्वादादि गीयते ॥ ९ ॥
नान्द्यन्ते सूत्रधारोऽसौ रूपकेषु निबध्यते ।
गुरुपूर्व्वक्रमं वंशप्रशंसा पौरुषं कवेः ॥ १० ॥

सम्बन्धार्थौ च काव्यस्य पश्चैतानेष निर्द्दिशेत् ।
नटी विदूषको वापि पारिपार्श्विक एव वा ॥ ११ ॥
सहिताः सूत्रधारेण संलापं यत्र कुर्व्वते ।
चित्रैर्व्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ॥ १२ ॥
आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि सा ।
प्रवृत्तकं कथोद्घातः प्रयोगातिशयस्तथा ॥ १३ ॥
आमुखस्य त्रयो भेदा वीजांशेषूपजायते ।
कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत् ॥ १४ ॥
तदाश्रयश्च पात्रस्य प्रवेशस्तत् प्रवृत्तकं ।
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ॥ १५ ॥
गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते ।
प्रयोगेषु प्रयोगन्तु सूत्रधृग्यत्र वर्णयेत् ॥ १६ ॥
ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः ।
शरीरं नाटकादीनामितिवृत्तं प्रचक्षते ॥ १७ ॥
सिद्धमुत्प्रेक्षितश्चेति तस्य भेदावुभौ स्मृतौ ।
सिद्धमागमदृष्टश्च सृष्टमुत्प्रेक्षितं कवेः ॥ १८ ॥
बीजं विन्दुः पताका च प्रकरी कार्य्यमेव च ।
अर्थप्रकृतयः पञ्च पञ्च चेष्टा अपि क्रमात् ॥ १९ ॥
प्रारम्भश्च प्रयत्नश्च प्राप्तिः सद्भाव एव च ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ २० ॥
मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव च ।
तथा निर्व्वहणञ्चेति क्रमात् पञ्चैव सन्धयः ॥ २१ ॥
अल्पमात्रं समुद्दिष्टं बहुधा यत् प्रसर्पति ।

फलावसानं यच्चैव वीजं तदभिधीयते ॥ २२ ॥
यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा ।
काव्ये शरीरानुगतं तन्मुखं परिकीर्त्तितं ॥ २३ ॥
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानाञ्चैव गूहनम् ॥ २४ ॥
आश्चर्य्यवदभिख्यातं प्रकाशानां प्रकाशनम् ।
अङ्गहीनं नरो यद्वत् श्रेष्ठं काव्यमेव च ॥ २५ ॥
देशकालौ विना किञ्चिन्नेतिवृत्तं प्रवर्त्तते ।
अतस्तयोरुपादाननियमात् पदमुच्यते ॥ २६ ॥
देशेषु भारतं वर्षं काले कृतयुगत्रयं ।
नर्त्ते ताभ्यां प्राणभृतां सुखदुःखोदयः क्वचित् ।
सर्गे सर्गादिवार्त्ता च प्रसज्जन्ती न दुष्यति ॥ २७ ॥

इत्याग्नेये महापुराणे अलङ्कारे नाटकनिरूपणं नाम सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## अथाष्टत्रिंशदधिकत्रिशततमोऽध्यायः ।

———000@000———

### शृङ्गारादिरसनिरूपणम् ।

अग्निरुवाच । अक्षरं परमं ब्रह्म सनातनमजं विभुं ।
वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम् ॥ १ ॥
आनन्दः सहजस्तस्य व्यज्यते स कदाचन ।
व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया ॥ २ ॥

आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः ।
ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयं ॥ ३ ॥
अभिमानाद्रतिः सा च परिपोषमुपेयुषी ।
व्यभिचार्य्यादिसामान्यात् शृङ्गार इति गीयते ॥ ४ ॥
तद्भेदाः काममितरे हास्याद्या अप्यनेकशः ।
स्वस्वस्थादिविशेषोत्थपरिघोषस्वलक्षणाः ॥ ५ ॥
सत्त्वादिगुणसन्तानाज्जायन्ते परमात्मनः ।
रागाद्भवति शृङ्गारो रौद्रस्तैक्ष्ण्यात् प्रजायते ॥ ६ ॥
वीरोऽवष्टम्भजः सङ्कोचभूर्व्वीभत्स इष्यते ।
शृङ्गाराज्जायते हासो रौद्रात्तु करुणो रसः ॥ ७ ॥
वीराच्चाद्भुतनिष्पत्तिः स्याद्वीभत्साद्भयानकः ।
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ॥ ८ ॥
वीभत्साद्भुतशान्ताख्याः स्वभावाच्चतुरो रसाः ।
लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा ॥ ९ ॥
अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथा वै रोचते विश्वं तथेदं परिवर्त्तते ॥ १० ॥
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स चेत् कविर्वीतरागो नीरसं व्यक्तमेव तत् ॥ ११ ॥
न भावहीनोऽस्ति रसो न भावो रसवर्ज्जितः ।
भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति ॥ १२ ॥
स्थायिनोऽष्टौ रतिमुखाः स्तम्भाद्या व्यभिचारिणः ।
मनोऽनुकूलेऽनुभवः सुखस्य रतिरिष्यते ॥ १३ ॥
हर्षादिभिश्च मनसो विकाशो हास उच्यते ।

चित्रादिदर्शनाच्चेतोवैक्लव्यं ब्रुवते भयम् ॥ १४ ॥
जुगुप्सा च पदार्थानां निन्दा दौर्भाग्यवाहिनां ।
विस्मयोऽतिशयेनार्थदर्शनाच्चित्तविस्तृतिः ॥ १५ ॥
अष्टौ स्तम्भादयः सत्त्वाद्रजसस्तमसः परम् ।
स्तम्भश्चेष्टाप्रतीघातो भयरागाद्युपाहितः(१) ॥ १६ ॥
श्रमरागाद्युपेतान्तःक्षोभजन्म वपुर्ज्जलं ।
स्वेदो हर्षादिभिर्देहोच्छ्वासोऽन्तःपुलकोद्गमः ॥ १७ ॥
हर्षादिजन्मवाक्सङ्गः स्वरभेदो भयादिभिः ।
मनोवैक्लव्यमिच्छन्ति शोकमिष्टक्षयादिभिः ॥ १८ ॥
क्रोधस्तैक्ष्ण्यप्रबोधश्च प्रतिकूलानुकारिणि ।
पुरुषार्थसमाप्त्यर्थो यः स उत्साह उच्यते ॥ १९ ॥
चित्तक्षोभभवोत्कम्पो वेपथुः परिकीर्त्तितः ।
वैवर्ण्यञ्च विषादादिजन्मा कान्तिविपर्य्ययः ॥ २० ॥
दुःखानन्दादिजन्नेत्रजलमश्रु च विश्रुतम् ।
इन्द्रियाणामस्तमयः प्रलयो लङ्घनादिभिः ॥ २१ ॥
वैराग्यादिर्मनःखेदो निर्वेद इति कथ्यते ।
मनःपीड़ादिजन्मा च सादो ग्लानिः शरीरगा ॥ २२ ॥
शङ्कानिष्टागमोत्प्रेक्षा स्यादसूया च मत्सरः ।
मदिराद्युपयोगोत्थं मनःसंमोहनं मदः ॥ २३ ॥
क्रियातिशयजन्मान्तःशरीरोत्थक्लमः श्रमः ।
शृङ्गारादिक्रियाद्वेषश्चित्तस्यालस्यमुच्यते ॥ २४ ॥

---

१ भयरागाद्युपक्षित इति ख० ।

दैन्यं सत्त्वादपभ्रंशश्चिन्तार्थपरिभावनं ।
इतिकर्त्तव्यतोपायादर्शनं मोह उच्यते ॥ २५ ॥
स्मृतिः स्यादनुभूतस्य वस्तुनः प्रतिविम्बनं ।
मतिरर्थपरिच्छेदस्तत्त्वज्ञानोपनायितः ॥ २६ ॥
व्रीडानुरागादिभवः सङ्कोचः कोपि चेतसः ।
भवेच्चपलताऽस्थैर्य्यं हर्षश्चित्तप्रसन्नता ॥ २७ ॥
आवेशश्च प्रतीकारः शङ्को वैधुर्य्यमात्मनः ।
कर्त्तव्ये प्रतिभाभ्रंशो जड़तेत्यभिधीयते ॥ २८ ॥
इष्टप्राप्तेरुपचितः सम्पदाभ्युदयो धृतिः ।
गर्व्वः परेष्ववज्ञानमात्मन्युत्कर्षभावना ॥ २९ ॥
भवेद्विषादो दैवादेर्विघातोऽभीष्टवस्तुनि ।
औत्सुक्यमीप्सिताप्राप्तेर्वाञ्छया तरला स्थितिः ३० ॥
चित्तेन्द्रियाणां स्तैमित्यमपस्मारोऽचला स्थितिः ।
युद्धे बाधादिभीस्त्रासो वीप्सा चित्तचमत्कृतिः ॥ ३१ ॥
क्रोधस्याप्रशमोऽमर्षः प्रबोधश्चेतनोदयः ।
अवहित्थं भवेद्गुप्तिरिङ्गिताकारगोचरा ॥ ३२ ॥
रोषतो गुरुवाग्दण्डपारुष्यं विदुरुग्रतां ।
ऊहो वितर्कः स्याद्व्याधिर्मनोवपुरवग्रहः ॥ ३३ ॥
अनिबद्धप्रलापादिरुन्मादो मदनादिभिः ।
तत्त्वज्ञानादिना चेतःकषायो परमः शमः ॥ ३४ ॥
कविभिर्योजनीया वै भावाः काव्यादिके रसाः ।
विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ॥ ३५ ॥
विभावो नाम स द्वेधालम्बनोद्दीपनात्मकः ।

# अथोनचत्वारिंशदधिकत्रिशततमोऽध्यायः।

———000)()000———

रीतिनिरूपणं।

अग्निरुवाच। वाग्विद्यासम्प्रतिज्ञाने रीतिः सापि चतुर्विधा।
पाञ्चाली गौड़देशीया वैदर्भी लाटजा तथा॥ १॥
उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा।
अनवस्थितसन्दर्भा गौडीया दीर्घविग्रहा॥ २॥
उपचारैर्न्न बहुभिरुपचारैर्विवर्ज्जिता।
नातिकोमलसन्दर्भा वैदर्भी मुक्तविग्रहा॥ ३॥
लाटीया स्फुटसन्दर्भा नातिविस्फुरविग्रहा।
परित्यक्तापि भूयोभिरुपचारैरुदाहृता॥ ४॥
क्रियास्वविषमा वृत्तिर्भारत्यारभटी तथा।
कौशिकी सात्वती चेति सा चतुर्द्धा प्रतिष्ठिता॥ ५॥
वाक्प्रधाना नरप्राया स्त्रीयुक्ता प्राकृतोक्तिता।
भरतेन प्रणीतत्वाद् भारती रीतिरुच्यते॥ ६॥
चत्वार्य्यङ्गानि भारत्या वीथी प्रहसनन्तथा।
प्रस्तावना नाटकादेर्व्वीथ्यङ्गाय त्रयोदश॥ ७॥
उद्घातकं तथैव स्याल्लपितं स्याद्द्वितीयकम्।
असत्प्रलापो वाक्श्रेणी(१) नालिका विपणस्तथा॥ ८॥
व्याहारस्त्रिमतञ्चैव(२) छलावस्कन्दिते तथा।

---

१ वाक्श्रेणीति क०, अ०, ट० च।
२ व्याहारस्त्रिमतञ्चेति ख०।

गच्छोऽथ मृदुवचैव त्रयोदशमथापितम् ॥ ९ ॥
तापसादेः प्रहसनं परिहासपरं वचः
मायेन्द्रजालयुद्धादिबहुलारभटी मता ।
सङ्क्षिप्तकारपातो च(१) वस्तूत्थापनमेव च ॥ १० ॥

इत्याग्नेये महापुराणे अलङ्कारे रीतिनिरूपणं नामो-
नचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

## अथ चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

नृत्यादावङ्गकर्मनिरूपणं ।

अग्निरुवाच । चेष्टाविशेषमप्यङ्गप्रत्यङ्गं कर्म चानयोः ।
शरीरारम्भमिच्छन्ति प्रायः पर्व्वोऽवलाश्रगः ॥ १ ॥
लीला विलासो विच्छित्तिर्विभ्रमं किलकिञ्चितं ।
मोट्टायितं कुट्टमितं विव्वोको ललितन्तथा ॥ २ ॥
विकृतं क्रीड़ितं केलिरिति द्वादशधैव सः ।
लीलेष्टजनचेष्टानुकरणं संवृतचये ।। ३ ॥
विशेषान् दर्शयन् किञ्चिद्विलासः सद्भिरिष्यते ।
हसितक्रन्दितादीनां सङ्करः किलकिञ्चितं ॥४॥
विकारः कोपि विव्वोको ललितं सौकुमार्य्यतः ।
शिरः पाणिकरः पार्श्वं कटिरङ्घ्रिरिति क्रमात् ॥ ५ ॥
अङ्गानि भ्रूलतादीनि प्रत्यङ्गान्यभिजानते ।

---

१ सङ्क्षिप्तकरपातो चेति ख० ।

अङ्गप्रत्यङ्गयोः कर्म्म प्रयत्नजनितं विना ॥ ६ ॥
न प्रयोगः क्वचिन्मुख्यन्तिरश्चीनञ्च तत् क्वचित् ।
आकम्पितं कम्पितञ्च(१) धूतं विधूतमेव च ॥ ७ ॥
परिवाहितमाधूतमवधूतमथाञ्चितं ।
निकुञ्चितं परावृत्तमुत्क्षिप्तञ्चाप्यधोगतम् ॥ ८ ॥
ललितञ्चेति विज्ञेयं त्रयोदशविधं शिरः ।
भ्रूकर्म्म सप्तधा ज्ञेयं पातनं भ्रूकुटीमुखं ॥ ९ ॥
दृष्टिस्त्रिधा रसस्थायिसञ्चारिप्रतिबन्धना ।
षट्त्रिंशद्भेदविधुरा रसजा तत्र चाष्टधा ॥ १० ॥
नवधा तारकाकर्म्म भ्रमणञ्चलनादिकं ।
षोढ़ा च नासिका ज्ञेया निश्वासो नवधा मतः ॥ ११ ॥
षोटौष्ठकर्म्मकं पापं सप्तधा चिवुकक्रिया ।
कलुषादिमुखं षोढा ग्रीवा नवविधा स्मृता ॥ १२ ॥
असंयुतः संयुतश्च भूत्वा हस्तः प्रयुज्यते ।
पताकस्त्रिपताकश्च तथा वै कर्त्तरीमुखः ॥ १३ ॥
अर्द्धचन्द्रोत्करालश्च शुकतुण्डस्तथैव च ।
मुष्टिश्च शिखरश्चैव कपित्थः खेटकामुखः ॥ १४ ॥
सूच्यास्यः पद्मकोषो हि शिराः सम्मृगशीर्षकाः ।
कांमूलकालपद्मौ(२)* च चतुरभ्रमरौ तथा ॥ १५ ॥
हंसास्यहंसपक्षौ च सन्दंशमुकुलौ तथा ।

---

१ आकम्पितं कम्पितञ्चेति ख० ।

२ कांगूलकालपद्माविति ग० ।

* कांमूलकालपद्मौ कांगूलकालपद्मौ एतत्पाठद्वयं न समीचीनं ।

ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरित्यमी ॥ १६ ॥
असंयुतकराः प्रोक्ताः संयुतास्तु त्रयोदश ।
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ॥ १७ ॥
कटको वर्द्धमानश्चाप्यसङ्गो निषधस्तथा ।
दोलः पुष्पपुटश्चैव तथा मकर एव च ॥ १८ ॥
गजदन्तो वहिस्तम्भो वर्द्धमानोऽपरे कराः ।
उरः पञ्चविधं स्यात्तु आभुग्ननर्त्तनादिकम् ॥ १९ ॥
उदरन्दूरतिक्षामं खण्डं पूर्णमिति त्रिधा ।
पार्श्वयोः पञ्चकर्म्माणि जङ्घाकर्म्म च पञ्चधा ।
अनेकधा पादकर्म्म नृत्यादौ नाटके स्मृतम् ॥ २० ॥

इत्याग्नेये महापुराणे अलङ्कारे नृत्यादावङ्गकर्म्मनिरूपणं नाम चत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

## अथैकचत्वारिंशदधिकद्विशततमोऽध्यायः ।

———ooo@ooo———

### अभिनयादिनिरूपणं ।

अग्निरुवाच । आभिमुख्यन्नयन्नर्थान्विज्ञेयोऽभिनयो बुधैः ।
चतुर्द्धा सम्भवः सत्त्ववागङ्गाहरणाश्रयः ॥ १ ॥
स्तम्भादिः सात्त्विको वागारम्भो वाचिक आङ्गिकः ।
शरीरारम्भ आहार्य्यो बुद्धारम्भप्रवृत्तयः ॥ २ ॥
रसादिविनियोगोऽथ कथ्यते ह्यभिमानतः ।
तमन्तरेण सर्व्वं वामपार्थैव स्वतन्त्रता ॥ ३ ॥
सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधः स्मृतः ।

प्रच्छन्नश्च प्रकाशश्च तावपि द्विविधौ पुनः॥ ४॥
विप्रलम्भाभिधानो यः शृङ्गारः स चतुर्विधः।
पूर्व्वानुरागमानाख्यः प्रवासकरुणात्मकः॥ ५॥
एतेभ्योऽन्यतरं जायमानसम्भोगलक्षणम्।
विवर्त्तते चतुर्द्धैव न च प्रागतिवर्त्तते॥ ६॥
स्त्रीपुंसयोस्तदुदयस्तस्य निर्व्विर्त्तिका रतिः।
निखिलाः सात्त्विकास्तत्र वैवर्ण्यप्रलयौ विना॥ ७॥
धर्म्मार्थकाममोक्षैश्च शृङ्गार उपचीयते।
आलम्बनविशेषैश्च तद्विशेषैर्निरन्तरः॥ ८॥
शृङ्गारं द्विविधं विद्याद्वाङ्नेपथ्यक्रियात्मकम्।
हासश्च तुर्व्विधोऽलक्ष्यदन्तः स्मित इतीरितः॥ ९॥
किञ्चिल्लक्षितदन्ताग्रं हसितं फुल्ललोचनम्।
विहसितं सस्वनं स्याज्जिह्मोपहसितन्तु तत्॥ १०॥
सशब्दं पापहसितमशब्दमतिहासितं।
यत्रासौ करुणो नाम स रसस्त्रिविधो भवेत्॥ ११॥
धर्म्मोपघातजश्चित्तविलासजनितस्तथा।
शोकः शोकाद्भवेत् स्थायी कः स्थायी पूर्व्वजो मतः॥ १२॥
अङ्गनेपथ्यवाक्यैश्च रौद्रोऽपि त्रिविधो रसः।
तस्य निर्व्वर्त्तकः क्रोधः स्वेदो रोमाञ्चवपथुः॥ १३॥
दानवीरो धर्मवीरो युद्धवीर इति त्रयम्।
वीररसस्य च निष्पत्तिहेतुरुत्साह इष्यते॥ १४॥
आरम्भेषु भवेद्यत्र वीरमेवानुवर्त्तते।

भयानको नाम रसस्तस्य निवर्त्तकं भयं ॥ १५ ॥
उद्वेजनः क्षोभणश्च वीभत्सो द्विविधः स्मृतः ।
उद्वेजनः स्यात् प्रूत्याद्यैः क्षोभणो रुधिरादिभिः ॥ १६ ॥
जुगुप्सारम्भिका तस्य सात्त्विकांशो निवर्त्तते ।
काव्यशोभाकरान् धर्म्मानलङ्कारान् प्रचक्षते ॥ १७ ॥
अलङ्करिष्णवस्ते च शब्दमर्थमुभौ त्रिधा ।
ये व्युत्पत्त्यादिना शब्दमलङ्कर्त्तुमिह क्षमाः ॥ १८ ॥
शब्दालङ्कारमाहुस्तान् काव्यमीमांसका विदः ।
छाया मुद्रा तथोक्तिश्च युक्तिर्गुम्फनया सह ॥ १९ ॥
वाकोवाक्यमनुप्रासश्चित्रं दुष्करमेव च ।
ज्ञेया नवालङ्कृतयः शब्दानामित्यसङ्करात् ॥ २० ॥
तत्रान्योक्तेरनुकृतिश्छाया सापि चतुर्व्विधा ।
लोकच्छेकार्भकोक्तीनामेकोक्तेरनुकारतः ॥ २१ ॥
आभाणकोक्तिर्लोकोक्तिः सर्व्वसामान्य एव ताः ।
यानुधावति लोकोक्तिश्छायामिच्छन्ति तां बुधाः ॥२२॥
छेका विदग्धा वैदग्ध्यं कलासु कुशला मतिः ।
तामुल्लिखन्तो छेकोक्तिश्छाया कविभिरिष्यते ॥ २३ ॥
अव्युत्पन्नोक्तिरखिलैरर्भकोक्त्योपलक्ष्यते ।
तेनार्भकोक्तिश्छाया तन्मात्रोक्तिमनुकुर्व्वती ॥ २४ ॥
विप्लुताक्षरमश्लीलं वचो मत्तस्य तादृशी ।
या सा भवति मत्तोक्तिश्छायोत्ताम्यतिशोभते ॥ २५ ॥
अभिप्रायविशेषेण कविशक्तिं विवृण्वती ।

मुत्प्रदायिनीति सा मुद्रा सैव शय्यापि नो मते ॥ २६ ॥
उक्तिः सा कथ्यते यस्यामर्थकोऽप्युपपत्तिमान् ।
लोकयात्रार्थविधिना धिनोति हृदयं सतां ॥ २७ ॥
उभौ विधिनिषेधौ च नियमानियमावपि ।
विकल्पपरिसङ्ख्ये च तदीयाः षडथोक्तयः ॥ २८ ॥
अयुक्तयोरिव मिथो वाच्यवाचकयोर्द्वयोः ।
योजनायै कल्प्यमाना युक्तिरुक्ता मनीषिभिः ॥ २९ ॥
पदञ्चैव पदार्थश्च वाक्यं वाक्यार्थमेव च ।
विषयोऽस्याः प्रकरणं प्रपञ्चश्चेति षड्विधः ॥ ३० ॥
गुम्फना रचनाचर्य्या शब्दार्थक्रमगोचरा ।
शब्दानुकारादर्थानुपूर्व्वार्थेयं क्रमात्त्रिधा ॥ ३१ ॥
उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यं द्विधैव तत् ।
ऋजुवक्रोक्तिभेदेन तत्राद्यं सहजं वचः ॥ ३२ ॥
सा पूर्व्वप्रश्निका प्रश्नपूर्व्विकेति द्विधा भवेत् ।
वक्रोक्तिस्तु भवेद्भङ्ग्या काकुस्तेन कृता द्विधा ॥ ३३ ॥

इत्याग्नेये महापुराणे अलङ्कारे अभिनयादिनिरूपणं नामैक-
चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

## अथ द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः।

———000@000———

### शब्दालङ्काराः।

अग्निरुवाच। स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः।
एकवर्णाऽनेकवर्णावृत्तेर्व्वर्णगुणो द्विधा ॥ १ ॥
एकवर्णगतावृत्तेर्जायन्ते पञ्च वृत्तयः।
मधुरा ललिता प्रौटा भद्रा परुषया सह ॥ २ ॥
मधुरायाश्च वर्गान्तादधो वर्ग्या रणौ स्वनौ (१)।
ह्रस्वस्वरेणान्तरितौ संयुक्तत्वं नकारयोः ॥ ३ ॥
न कार्य्या वर्ग्यवर्णानामावृत्तिः पञ्चमाधिका।
महाप्राणोष्मसंयोगप्रविमुक्तलघूत्तरौ(२) ॥ ४ ॥
ललिता बलभूयिष्ठा(३) प्रौटा या पणवर्गजा।
ऊर्द्धं रेफेण युज्यन्ते नटवर्गोनपञ्चमाः ॥ ५ ॥
भद्रायां परिशिष्टाः स्युः परुषा साऽभिधीयते।
भवन्ति यस्यामूष्माणः संयुक्तास्तत्तदक्षरैः ॥ ६ ॥
अकारवर्ज्जमावृत्तिः स्वराणामतिभूयसी।
अनुस्वारविसर्गौ च पारुष्याय निरन्तरौ ॥ ७ ॥
शषसा रेफसंयुक्ताश्चाकारश्चापि भूयसा।

---

१ रणौ घनाविति ख०।

२ महाप्राणोष्मसंयोगादवियुक्तलघूनराविति ढ०।

३ ललिता बलभूयिष्ठेति ख०। ललिता बलभूयिष्ठेति ढ०

अन्तस्थाभिन्नमाभ्याञ्च हः पारुष्याय संयुतः ॥ ८ ॥
अन्यथापि गुरुर्वर्णः संयुक्तो परिपन्थिनि ।
पारुष्यायादिमांस्तत्र पूजिता न तु पञ्चमी ॥ ९ ॥
क्षेपे शब्दानुकारे च परुषापि प्रयुज्यते ।
कर्णाटी कौन्तली कौन्ती कौङ्कणी वामनासिका(१)॥१०॥
द्रावणी माधवी पञ्चवर्णान्तस्थोष्मभिः क्रमात् ।
अनेकवर्णावृत्तिर्या भिन्नार्थप्रतिपादिका ॥ ११ ॥
यमकं साव्यपेतञ्च व्यपेतञ्चेति तद्द्विधा ।
आनन्तर्य्याद्व्यपेतं व्यपेतं व्यवधानतः ॥ १२ ॥
द्वैविध्येनानयोः स्थानपादभेदाच्चतुर्विधम् ।
आदिपादादिमध्यान्तेष्वेकद्वित्रिनियोगतः ॥ १३ ॥
सप्तधा सप्तपूर्वेण (२) चेत् पादेनोत्तरोत्तरः ।
एकद्वित्रिपदारम्भस्तुल्यः षोढा तदापरं ॥ १४ ॥
तृतीयं त्रिविधं पादस्यादिमध्यान्तगोचरम् ।
पादान्तयमकञ्चैव काञ्चीयमकमेव च ॥ १५ ॥
संसर्गयमकञ्चैव(३) विक्रान्तयमकन्तथा ।
पादादियमकञ्चैव तथाम्रेडितमेव च ॥ १६ ॥
चतुर्व्यवसितञ्चैव मालायमकमेव च ।
दशधा यमकं श्रेष्ठं तद्भेदा बहवोऽपरे ॥ १७ ॥
स्वतन्त्रस्यान्यतन्त्रस्य पदस्यावर्त्तना द्विधा ।

---

१ वाडवासिकेति ख०, ट० च । वनवासिकेति ञ० ।
२ पूर्वपूर्वेणेति ख०, ञ०, ट० च ।
३ समस्तयमकञ्चेति ख० ।

भिन्नार्थोजनपदस्यावृत्तिं मनुजा विदुः ॥ १८ ॥
द्वयोरावृत्तपदयोः समस्ता स्यात्समासतः ।
असमासात्तयोर्व्यस्ता पादे त्वेकत्र विग्रहात् ॥ १९ ॥
वाक्यस्यावृत्तिरप्येवं यथासम्भवमिष्यते ।
अलङ्काराद्यनुप्रासो लघुमध्येवमर्हणात् (१) * ॥ २० ॥
यया कयाचिद्वृत्त्या यत् समानमनुभूयते ।
तद्रूपादिपदासत्तिः सानुप्रासा रसावहा ॥ २१ ॥
गोष्ठ्यां कुतूहलाध्यायी वाग्बन्धश्चित्रमुच्यते ।
प्रश्नः प्रहेलिका गुप्तं च्युतदत्ते तथोभयम् ॥ २२ ॥
समस्या सप्त तद्भेदा नानार्थस्यानुयोगतः ।
यत्र प्रदीयते तुल्यवर्णविन्याससुत्तरं ॥ २३ ॥
स प्रश्नः स्यादेकपृष्टद्विपृष्टोत्तरभेदतः ।
द्विधैकपृष्टो द्विविधः समस्तो व्यस्त एव च ॥ २४ ॥
द्वयोरप्यर्थयोर्गुह्यमानशब्दा प्रहेलिका ।
सा द्विधार्थी च शाब्दी च तत्रार्थी चार्थबोधतः ॥ २५ ॥
शब्दावबोधतः शाब्दी प्राहुः षोढा प्रहेलिकां ।
यस्मिन् गुप्तेऽपि वाक्याङ्गे भात्यर्थोऽपारमार्थिकः ॥ २६ ॥
तदङ्गविहिताकाङ्क्षस्तद्गुप्तं गूढमप्यदः ।
यत्रार्थान्तरनिर्भासो वाक्याङ्गच्यवनादिभिः ॥ २७ ॥
तदङ्गविहिताकाङ्क्षस्तच्च्युतं स्याच्चतुर्विधम् ।

---

१ लघुमध्येवमर्हणादिति ङ० । लघुमध्ये व वर्हणादिति ञ० ।

* लघुमध्येवमर्हणात्, लघुमध्येवमर्हणात्, लघुमध्येव वर्हणात् एतत् पाठत्रयं न सम्यक् प्रतिभाति ।

स्वरव्यञ्जनबिन्दूनां विसर्गस्य च विच्युतेः ॥ २८ ॥
वृत्तेपि यत्र वाक्याङ्गे द्वितीयोर्थः प्रतीयते ।
वृत्तन्तदाहुस्तद्भेदाः स्वराद्यैः पूर्व्ववन्मताः ॥ २९ ॥
अपनीताक्षरस्थाने न्यस्ते वर्णान्तरेऽपि च ।
भासतेऽर्थान्तरं यत्र च्युतदत्तं तदुच्यते ॥ ३० ॥
सुश्लिष्टपद्यमेकं यन्नानाश्लोकांगनिर्म्मितम् ।
सा समस्या परस्यात्मपरयोः कृतिसङ्करात् ॥ ३१ ॥
दुःखेन कृतमत्यर्थं कविसामर्थ्यसूचकम् ।
दुष्करं नीरसत्वेपि विदग्धानां महोत्सवः ॥ ३२ ॥
नियमाच्च विदर्भाच्च बन्धाच्च भवति त्रिधा ।
कवेः प्रतिज्ञा निर्म्माणरम्यस्य नियमः स्मृतः ॥ ३३ ॥
स्थानेनापि स्वरेणापि व्यञ्जनेनापि स त्रिधा ।
विकल्पः प्रातिलोम्यानुलोम्यादेवाभिधीयते ॥ ३४ ॥
प्रातिलोम्यानुलोम्यञ्च शब्देनार्थेन जायते ।
अनेकधावृत्तवर्णविन्यासैः शिल्पकल्पना ॥ ३५ ॥
तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते ।
गोमूत्रिकार्द्धभ्रमणे सर्व्वतोभद्रमम्बुजम् ॥ ३६ ॥
चक्रञ्चक्राब्जकं दण्डो मुरजाश्चेति चाष्टधा ।
प्रत्यर्धं प्रतिपादं स्यादेकान्तरसमाक्षरा ॥ ३७ ॥
द्विधा गोमूत्रिकां पूर्व्वामाहुरश्वपदां परे ।
अन्त्यां गोमूत्रिकां धेनुं जालबन्धं(१) वदन्ति हि ॥ ३८ ॥
मर्त्याभ्यामर्धपादैश्च कुर्य्याद्विन्यासमेतयोः ।

---

१ आनुपश्यमिति क०, ख० च ।

न्यस्तानामिह वर्णानामधोधः क्रमभागिनां ॥ ३९ ॥
अधोधःस्थितवर्णानां यावत्तूर्य्यपदन्नयेत् ।
तुर्य्यपादान्नयेदूर्द्ध पादार्द्धं प्रातिलोम्यतः ॥ ४० ॥
तदेव सर्व्वतोभद्रं त्रिविधं सरसीरुहं ।
चतुष्पत्रं ततो विघ्नं चतुष्पत्रे उभे अपि ॥ ४१ ॥
अथ प्रथमपादस्य मूर्द्दन्यस्निपदाचरं ।
सर्व्वेषामेव पादानामन्ते तदुपजायते ॥ ४२ ॥
प्राक्पदस्यान्तिमं प्रत्यक् पादादौ प्रातिलोम्यतः ।
अन्त्यपादान्तिमञ्चाद्यपादादावचरद्दयं ॥ ४३ ॥
चतुश्छदे भवेदष्टच्छदे वर्णत्रयं पुनः ।
स्यात् षोड़शच्छदे त्वेकान्तरञ्चेदेकमचरं ॥ ४४ ॥
कर्णिकां तोलयेदूर्द्धं पत्राकाराचरावलिं ।
प्रवेशयेत् कर्णिकायाञ्चतुष्पत्रसरोरुहे ॥ ४५ ॥
कर्णिकायां लिखेदेकं द्वे द्वे दिक्षु विदिक्षु च ।
प्रवेशनिर्गमौ दिक्षु कुर्य्यादष्टच्छदेऽम्बुजे ॥ ४६ ॥
विदिक्ष्विषमवर्णानां तावत् पत्रावलीजुषां ।
मध्ये समाचरन्यासः सरोजे षोड़शच्छदे ॥ ४७ ॥
द्विधा चक्रं चतुररं षड़रन्तत्र चादिमं ।
पूर्व्वार्द्धे सदृशा वर्णाः पादप्रथमपञ्चमाः ४८ ॥
अयुजोऽश्वयुजश्चैव तुर्य्यावप्यष्टमावपि ॥ ।
तस्योपपादप्राक्प्रत्यगरेषु च यथाक्रमं ॥ ४९ ॥
स्यात्पादार्द्धचतुष्कन्तु नाभौ तस्याद्यमचरं ।
पश्चिमारावधि नयेन्नेमौ शेषे पदद्वयी ॥ ५० ॥

तृतीयं तुर्य्यपादान्ते प्रथमौ सदृशावुभौ ।
वर्णौ पादत्रयस्यापि दशमः सदृशो यदि ॥ ५१ ॥
प्रथमे चरमे तस्य षड् वर्णाः पश्चिमे यदि ।
भवन्ति द्व्यन्तरं तर्हि हलचक्रमुदाहृतं ॥ ५२ ॥
सम्मुखारेद्वये पादमेकैकं क्रमशो लिखेत् ।
नाभौ तु वर्णं दशमं नेमौ तुर्य्यपदन्नयेत् ॥ ५३ ॥
श्लोकस्याद्यन्तदशमाः समा आद्यन्तिमौ युजोः ।
आदौ वर्णः समौ तुर्य्यपञ्चमावाद्यतुर्य्ययोः ॥ ५४ ॥
द्वितीयप्रातिलोम्येन तृतीयं जायते यदि ।
पदं विदध्यात् पत्रस्य दण्डचक्रात्मकं कृतेः ॥ ५५ ॥
द्वितीयौ प्राग्दले तुल्यौ सप्तमौ च तथापरौ ।
सदृशावुत्तरदलौ द्वितीयाभ्यामथार्द्धयोः ॥ ५६ ॥
द्वितीयषष्ठाः सदृशाश्चतुर्थपञ्चमावपि ।
आद्यन्तपादयोस्तुल्यौ परार्द्धसप्तमावपि ॥ ५७ ॥
समौ तुर्य्यं पञ्चमन्तु क्रमेण विनियोजयेत् ।
तुर्य्यौ योज्यौ तु तद्वच्च दलान्ताः क्रमपादयोः ॥ ५८ ॥
अर्द्धयोरन्तिमाद्यौ तु मुरजे सदृशावुभौ ।
पादार्द्धपतितौ वर्णः प्रातिलोम्यानुलोमतः ॥ ५९ ॥
अन्तिमं परिबध्नीयाद्यावत्तुर्य्यमिहादिमत् ।
पादान्तुर्य्याद्यदेवाद्यं नवमात् षोड़शादपि ॥ ६० ॥
अक्षरात् पुटके मध्ये मध्ये ऽक्षरचतुष्टयम् ।
कृत्वा कुर्य्याद्यथैतस्य मुरजाकारता भवेत् ॥ ६१ ॥
द्वितीयं चक्रमाद्धूलविक्रीडितकसम्मदम् ।

गोमूत्रिका सर्ववृत्तैरन्ये बन्धास्त्वनुष्टुभा ॥ ६२ ॥
नामधेयं यदि न चेदमीषु कविकाव्ययोः ।
मित्रधेयाभितुष्यन्ति नामित्रः खिद्यते तथा ॥ ६३ ॥
वाणवाणासनव्योमखड्गमुद्गरशक्तयः ।
द्विचतुर्थत्रिशृङ्गाटा दम्भोलिमुषलाङ्कुशाः ॥ ६४ ॥
पदं रथस्य नागस्य पुष्करिण्यसिपुत्रिका ।
एते बन्धास्तथा चान्ये एवं ज्ञेयाः स्वयं बुधैः ॥ ६५ ॥
इत्याग्नेये महापुराणे अलङ्कारे शब्दालङ्कारनिरूपणं नाम द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

## अथ त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

### अर्थालङ्काराः ।

अग्निरुवाच । अलङ्करणमर्थानामर्थालङ्कार इष्यते ।
तं विना शब्दसौन्दर्य्यमपि नास्ति मनोहरम् ॥ १ ॥
अर्थालङ्काररहिता विधवेव(१) सरस्वती ।
स्वरूपमथ सादृश्यमुत्प्रेक्षातिशयावपि ॥ २ ॥
विभावना विरोधश्च हेतुश्च सममष्टधा ।
स्वभाव एव भावानां स्वरूपमभिधीयते ॥ ३ ॥
निजमागन्तुकञ्चेति द्विविधं तदुदाहृतम् ।
सांसिद्धिकं निजं नैमित्तिकमागन्तुकं तथा ॥ ४ ॥

---

१ विधुरेवेति ख०, ङ० च ।

साद्दश्यं धर्म्मसामान्यमुपमा रूपकं तथा ।
सहोत्यर्थान्तरन्यासाविति स्यात्तु चतुर्विधम् ॥ ५ ॥
उपमा नाम सा यस्यामुपमानोपमेययोः ।
सत्ता चान्तरसामान्ययोगित्वेऽपि विवक्षितं ॥ ६ ॥
किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्त्तते ।
समासेनासमासेन सा द्विधा प्रतियोगिनः ॥ ७ ॥
विग्रहादभिधानस्य ससमासाऽन्यथोत्तरा ।
उपमाद्योतकपदेनोपमेयपदेन च ॥ ८ ॥
ताभ्याञ्च विग्रहात्त्रेधा ससमासान्त्रिमात् त्रिधा ।
विक्रियमाणा उपमा भवन्त्यष्टादश स्फुटाः ॥ ९ ॥
यत्र साधारणो धर्म्मः कथ्यते गम्यतेऽपि वा ।
ते धर्म्मवस्तुप्राधान्याद्धर्म्मवस्तूपमे उभे ॥ १० ॥
तुल्यमेवोपमीयेते यत्रान्योन्येन धर्म्मिणौ ।
परस्परोपमा सा स्यात् प्रसिद्धेरन्यथा तयोः ॥ ११ ॥
विपरीतोपमा सा स्याद्व्यावृत्तेर्नियमोपमा ।
अन्यत्राप्यनुवृत्तेस्तु भवेदनियमोपमा ॥ १२ ॥
समुच्चयोपमातोऽन्यधर्म्मबाहुल्यकीर्त्तनात् ।
बहोर्धर्म्मस्य साम्येपि वैलक्षण्यं विवक्षितं ॥ १३ ॥
यदुच्यतेऽतिरिक्तत्वं व्यतिरेकोपमा तु सा ।
यत्रोपमा स्याद्बहुभिः सदृशैः सा बहूपमा ॥ १४ ॥
धर्म्माः प्रत्युपमानञ्चेदन्ये मालोपमैव सा ।
उपमानविकारेण तुलना विक्रियोपमा ॥ १५ ॥
त्रैलोक्यासम्भवि किमप्यारोप्य प्रतियोगिनि ।

कविनोपमीयते या प्रथते साद्भुतोपमा ॥ १६ ॥
प्रतियोगिनमारोप्य तदभेदेन कीर्त्तनम् ।
उपमेयस्य सा मोहोपमाऽसौ भ्रान्तिमद्वचः ॥ १७ ॥
उभयोर्धर्म्मिणोस्तथ्यानिश्चयात् संशयोपमा ।
उपमेयस्य संशय्य निश्चयान्निश्चयोपमा ॥ १८ ॥
वाक्यार्थेनैव वाक्यार्थोपमा स्यादुपमानतः ।
आत्मनोपमानादुपमा साधारण्यतिशायिनी ॥ १९ ॥
उपमेयं यदन्यस्य तदन्यस्योपमा मता ।
यद्युत्तरोत्तरं याति तदाऽसौ गगनोपमा (१) ॥ २० ॥
प्रशंसा चैव निन्दा च कल्पिता सदृशी तथा ।
किञ्चिच्च सदृशी ज्ञेया उपमा पञ्चधा पुनः ॥ २१ ॥
उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ २२ ॥
उपमैव तिरोभूतभेदा रूपकमेव वा ।
सहोक्तिः सहभावेन कथनं तुल्यधर्म्मिणां ॥ २३ ॥
भवेदर्थान्तरन्यासः सादृश्येनोत्तरेण सः ।
अन्यथोपस्थिता वृत्तिश्चेतनस्येतरस्य च ॥ २४ ॥
अन्यथा मन्यते यत्र तामुत्प्रेक्षां प्रचक्षते ।
लोकसीमातिवृत्तस्य वस्तुधर्म्मस्य कीर्त्तनम् ॥ २५ ॥
भवेदतिशयो नाम सम्भवासम्भवाद्द्विधा ।
गुणजातिक्रियादीनां यत्र वैकल्यदर्शनं ॥ २६ ॥
विशेषदर्शनायैव सा विशेषोक्तिरुच्यते ।

१ चक्रोपमेति ख० । गमनोपमेति क०, ङ० च ।

प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम् ॥ २७ ॥
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ।
सङ्गतीकरणं युक्त्या यदसंगच्छमानयोः ॥ २८ ॥
विरोधपूर्वकत्वेन तद्विरोध इति स्मृतं ।
सिसाधयिषितार्थस्य हेतुर्भवति साधकः ॥ २९ ॥
कारको ज्ञापक इति द्विधा सोऽप्युपजायते ।
प्रवर्त्तते कारकाख्यः प्राक् पश्चात् कार्य्यजन्मनः॥ ३० ॥
पूर्व्वशेष इति ख्यातस्तयोरेव विशेषयोः ।
कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् ॥ ३१ ॥
ज्ञापकाख्यस्य भेदोऽस्ति नदीपूरादिदर्शनात् ।
अविनाभावनियमो ह्यविनाभावदर्शनात् ॥ ३२ ॥

इत्याग्नेये महापुराणे अलङ्कारे अर्थालङ्कारनिरूपणं नाम त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

## अथ चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

———ooo———

### शब्दार्थालङ्काराः ।

अग्निरुवाच । शब्दार्थयोरलङ्कारो द्वावलङ्कुरुते समं ।
एकत्र निहितो हारः स्तनं ग्रीवामिव स्त्रियाः ॥ १ ॥
प्रशस्तिः कान्तिरौचित्यं संक्षेपो यावदर्थता ।
अभिव्यक्तिरिति व्यक्तं षड्भेदास्तस्य जाग्रति ॥ २ ॥
प्रशस्तिः परवन्मर्मद्रवीकरणकर्म्मणः ।
वाचो युक्तिर्द्विधा सा च प्रेमोक्तिस्तुतिभेदतः ॥ ३ ॥

प्रेमोक्तिस्तुतिपर्य्यायौ प्रियोक्तिगुणकीर्त्तने ।
कान्तिः सर्व्वमनोरूच्यवाच्यवाचकसङ्गतिः ॥ ४ ॥
यथा वस्तु तथा रीतिर्यथा वृत्तिस्तथा रसः ।
ऊर्ज्जः स्वमृदुसन्दर्भादौचित्यमुपजायते ॥ ५ ॥
संक्षेपो वाचकैरल्पैर्बहोरर्थस्य संग्रहः ।
अन्यूनाधिकता शब्दवस्तुनोर्यावदर्थता ॥ ६ ॥
प्रकटत्वमभिव्यक्तिः श्रुतिराक्षेप इत्यपि ।
तस्या भेदौ श्रुतिस्तत्र शब्दं स्वार्थसमर्पणम् ॥ ७ ॥
भवेन्नैमित्तिकी पारिभाषिकी द्विविधैव सा ।
सङ्केतः परिभाषेति ततः स्यात् पारिभाषिकी ॥ ८ ॥
मुख्यौपचारिकी चेति सा च सा च द्विधा द्विधा ।
स्वाभिधेयस्खलद्वृत्तिरमुख्यार्थस्य वाचकः ॥ ९ ॥
यया शब्दो निमित्तेन केनचित्सौपचारिकी ।
सा च लाक्षणिकी गौणी लक्षणागुणयोगतः ॥ १० ॥
अभिधेयाविनाभूता प्रतीतिर्लक्षणोच्यते ।
अभिधेयेन सम्बन्धात्सामीप्यात्समवायतः ॥ ११ ॥
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ।
गौणीगुणानामानन्त्यादनन्ता तद्विवक्षया ॥ १२ ॥
अन्यधर्म्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते यत्र स समाधिरिह स्मृतः ॥ १३ ॥
श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति सचेतनः ।
स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः ॥ १४ ॥
शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम् ।

प्रतिषेध इवेष्टस्य यो विशेषोऽभिधित्सया ॥ १५ ॥
तमाक्षेपं ब्रुवन्त्यत्र स्तुतं स्तोत्रमिदं पुनः ।
अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ॥ १६ ॥
यत्रोक्तं गम्यते नार्थस्तत्समानविशेषणं ।
सा समासोक्तिरुदिता सङ्क्षेपार्थतया बुधैः ॥ १७ ॥
अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् ।
पर्य्यायोक्तं यदन्येन प्रकारेनाभिधीयते ।
एषामेकतमस्येव समाख्या ध्वनिरित्यतः । १८ ॥
इत्याग्नेये महापुराणे अलङ्कारे शब्दार्थालङ्कारनिरूपणं नाम
चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

## अथ पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

### काव्यगुणविवेकः ।

अग्निरुवाच । अलंकृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत् ।
वपुष्यललिते स्त्रीणां हारो भारायते परं ॥ १ ॥
न च वाच्यं गुणो दोषोऽभाव एव भविष्यति ।
गुणाः श्लेषादयो दोषा गूढार्थाद्याः पृथक् कृताः ॥ २ ॥
यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः ।
सम्भवत्येष सामान्यो वैशेषिक इति द्विधा ॥ ३ ॥
सर्व्वसाधारणीभूतः सामान्य इति मन्यते ।
शब्दमर्थमुभौ प्राप्तः सामान्यो भवति त्रिधा ॥ ४ ॥
शब्दमाश्रयते काव्यं शरीरं यः स तद्गुणः ।

श्लेषो लालित्यगाम्भीर्य्यसौकुमार्य्यमुदारता ॥ ५ ॥
सत्येव यौगिकी चेति गुणाः शब्दस्य सप्तधा ।
सुश्लिष्टसन्निवेशत्वं शब्दानां श्लेष उच्यते ॥ ६ ॥
गुणादेशादिना पूर्व्वं पदसम्बन्धमक्षरं ।
यत्र सन्धीयते नैव तल्लालित्यमुदाहृतं ॥ ७ ॥
विशिष्टलक्षणोल्लेखलेख्यमुत्तानशब्दकम् ।
गाम्भीर्य्यं कथयन्त्यार्य्यास्तदेवान्येषु शब्दतां ॥ ८ ॥
अनिष्ठुराक्षरप्रायशब्दता सुकुमारता ।
उत्तानपदतौदार्य्ययुतश्लाघ्यैर्विशेषणैः ॥ ९ ॥
ओजः समासभूयस्त्वमेतत्पद्यादिजीवितं ।
आशब्दात् स्तम्भपर्य्यन्तमोजसैकेन पौरुषं ॥ १० ॥
उच्यमानस्य शब्देन येन केनापि वस्तुनः ।
उत्कर्षमावहन्नर्थो गुण इत्यभिधीयते ॥ ११ ॥
माधुर्य्यं सम्बिधानञ्च कोमलत्वमुदारता ।
प्रौढ़िः सामयिकत्वञ्च तद्भेदाः षट्चकाशति ॥ १२ ॥
क्रोधेर्य्याकारगाम्भीर्य्यान्माधुर्य्यं धैर्य्यगाहिता ।
सम्बिधानं परिकरः स्यादपेक्षितसिद्धये ॥ १३ ॥
यत्काठिन्यादिनिर्मुक्तसन्निवेशविशिष्टता ।
तिरस्कृत्यैव मृदुता भाति कोमलतेति सा ॥ १४ ॥
लक्ष्यते स्थूललक्षत्वप्रवृत्तेर्यच्च लक्षणम् ।
गुणस्य तदुदारत्वमाशयस्यातिसौष्ठवं ॥ १५ ॥
अभिप्रेतं प्रति यतो निर्व्वाहस्योपपादिकाः ।
युक्तयो हेतुगर्भिण्यः प्रौढाप्रौढिरुदाहृता ॥ १६ ॥

स्वतन्त्रस्यान्यतन्त्रस्य वाक्यान्तःसमयोगतः ।
तत्र व्युत्पत्तिरर्थस्य या सामयिकतेति सा ॥ १७ ॥
शब्दार्थावुपकुर्व्वाणो नाम्नोभयगुणः स्मृतः ।
तस्य प्रसादः सौभाग्यं यथासङ्ख्यं प्रशस्तता ॥ १८ ॥
पाको राग इति प्राज्ञैः षट् प्रपञ्चविपञ्चिताः ।
सुप्रसिद्धार्थपदता प्रसाद इति गीयते ॥ १९ ॥
उत्कर्षवान् गुणः कश्चिद्यस्मिन्नुक्ते प्रतीयते ।
तत्सौभाग्यमुदारत्वं प्रवदन्ति मनीषिणः ॥ २० ॥
यथासङ्ख्यमनुद्देशः सामान्यमतिदिश्यते ।
समये वर्णनीयस्य दारुणस्यापि वस्तुनः ॥ २१ ॥
अदारुणेन शब्देन प्राशस्त्यमुपवर्णनं ।
उच्चैः परिणतिः कापि पाक इत्यभिधीयते ॥ २२ ॥
मृद्वीकानारिकेलाम्बुपाकभेदाच्चतुर्व्विधः ।
आदावन्ते च सौरस्यं मृद्वीकापाक एव सः ॥ २३ ॥
काव्येच्छया विशेषो यः स राग इति गीयते ।
अभ्यासोपहितः कान्तिं सहजामपि वर्त्तते ॥ २४ ॥
हारिद्रश्चैव कौसुम्भो नीलो रागश्च स त्रिधा ।
वैशेषिकः परिज्ञेयो यः स्वलक्षणगोचरः ॥ २५ ॥

इत्याग्नेये महापुराणे काव्यगुणविवेको नाम पञ्चचत्वारिंश-
दधिकत्रिशततमोऽध्यायः ।



## अथ षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---000---

### काव्यदोषविवेकः ।

अग्निरुवाच । उद्वेगजनको दोषः सभ्यानां स च सप्तधा ।
वक्तृवाचकवाच्यानामेकद्वित्रिनियोगतः ॥ १ ॥
तत्र वक्ता कविर्नाम प्रथते स च भेदतः ।
सन्दिहानोऽविनीतः सन्नज्ञो ज्ञाता चतुर्व्विधः ॥ २ ॥
निमित्तपरिभाषाभ्यामर्थसंस्पर्शिवाचकम् ।
तद्भेदौ पदवाक्ये द्वे कथितं लक्षणं द्वयोः ॥ ३ ॥
असाधुत्वाप्रयुक्तत्वे द्वावेव पदनिग्रहौ ।
शब्दशास्त्रविरुद्धत्वमसाधुत्वं विदुर्बुधाः ॥ ४ ॥
व्युत्पन्नै रनिबद्धत्वमप्रयुक्तत्वमुच्यते ।
छान्दसत्वमविस्पष्टत्वञ्च कष्टत्वमेव च ॥ ५ ॥
तदसामयिकत्वञ्च ग्राम्यत्वञ्चेति पञ्चधा ।
छान्दसत्वं न भाषायामविस्पष्टमबोधतः ॥ ६ ॥
गूढार्थता विपर्य्यस्तार्थता संशयितार्थता ।
अविस्पष्टार्थता भेदास्तत्र गूढार्थतेति सा ॥ ७ ॥
यत्रार्थो दुःखसंवेद्यो विपर्य्यस्तार्थता पुनः ।
विवक्षितान्यशब्दार्थप्रतिपत्तिर्मलीमसा (१) ॥ ८ ॥
अन्यार्थत्वासमर्थत्वे एतामेवोपसर्पतः ।

---

१ मलीमसेति ख० ।

सन्दिह्यमानवाच्यत्वमाहुः संशयितार्थतां ॥ ९ ॥
दोषत्वमनुबध्नाति सज्जनोद्वेजनाहते ।
असुखोच्चार्यमाणत्वं कष्टत्वं समयाच्युतिः ॥ १० ॥
असामयिकता नेयामिताश्च मुनयो जगुः ।
ग्राम्यता तु जघन्यार्थप्रतिपत्तिः खलीकृता ॥ ११ ॥
तस्याश्च ग्राम्यवाच्यस्य वचनात्स्मरणादपि ।
तद्वाचकपदेनाभिसाम्याद्भवति सा त्रिधा ॥ १२ ॥
दोषः साधारणः प्रातिस्विकोऽर्थस्य स तु द्विधा ।
अनेकभागुपालम्भः साधारण इति स्मृतः ॥ १३ ॥
क्रियाकारकयोर्भ्रंशो विसन्धिः पुनरुक्तता ।
व्यस्तसम्बन्धता चेति पञ्च साधारणा मताः (१) ॥ १४ ॥
अक्रियत्वं क्रियाभ्रंशो भ्रष्टकारकता पुनः ।
कर्त्रादिकारकाभावो विसन्धिः सन्धिदूषणम् ॥ १५ ॥
विगतो वा विरुद्धो वा सन्धिः स भवति द्विधा ।
सन्धेर्विरुद्धता कष्टपाठादर्थान्तरागमात्(२) ॥ १६ ॥
पुनरुक्तत्वमाभीक्ष्ण्यादभिधानं द्विधैव तत् ।
अर्थावृत्तिः पदावृत्तिरर्थावृत्तिरपि द्विधा ॥ १७ ॥
प्रयुक्तपरशब्देन (३) तथा शब्दान्तरेण च ।
नावर्त्तते पदावृत्तौ वाच्यमावर्त्तते पदम् ॥ १८ ॥
व्यस्तसम्बन्धता सुष्ठु सम्बन्धो व्यवधानतः ।
सम्बन्धान्तरनिर्भासात् सम्बन्धान्तरजन्मनः ॥ १९ ॥

---

१ मता इति ख०, ज० च।          २ कष्टपाठादर्थान्तरगमादिति ङ० ।

३ प्रयुक्तपरशब्देनेति ख०, ज० च।

अभावेपि तयोरस्त्यव्यवधानात्रिधैव सा ।
अन्तरा पदवाक्याभ्यां प्रतिभेदं पुनर्द्विधा ॥ २० ॥
वाच्यमर्थ्यमानत्वात्तद्द्विधा पदवाक्ययोः ।
व्युत्पादितपूर्व्ववाच्यं व्युत्पाद्यञ्चेति भिद्यते ॥ २१ ॥
इष्टव्याघातकारित्वं हेतोः स्यादसमर्थता ।
असिद्धत्वं विरुद्धत्वमनैकान्तिकता तथा ॥ २२ ॥
एवं सत्प्रतिपक्षत्वं कालातीतत्वसङ्करः ।
पक्षे सपक्षे नास्तित्वं विपक्षेऽस्तित्वमेव तत् ॥ २३ ॥
काव्येषु परिषद्यानां न भवेदप्यरुन्तुदम् ।
एकादशनिरर्थत्वं(१) दुष्करादौ नदुष्यति ॥ २४ ॥
दुःखीकरोति दोषज्ञानगूढार्थत्वं न दुष्करे ।
न ग्राम्यतोद्वेगकारी प्रसिद्धेर्लोकशास्त्रयोः ॥ २५ ॥
क्रियाभ्रंशेन लक्ष्मास्ति क्रियाध्याहारयोगतः ।
अष्टकारकताक्षेपवलाध्याहृतकारके ॥ २६ ॥
प्रत्यक्षो गद्यते नैव क्षतं विगतसन्धिना ।
काष्टपाठादिसन्धित्वं दुर्व्वचादौ न दुर्भगम् ॥ २७ ॥
अनुप्रासे पदावृत्तिर्व्यस्तसम्बन्धता शुभा ।
नार्थसंग्रहणे दोषो व्युत्क्रमाद्यैर्न शिष्यते ॥ २८ ॥
विभक्तिसंज्ञालिङ्गानां यत्रोद्वेगो न धीमताम् ।
संख्यायास्तत्र भिन्नत्वमुपमानोपमेययोः ॥ २९ ॥
अनेकस्य तथैकेन बहूनां बहुभिः शुभा ।
कवीनां समुदाचारः समयो नाम गीयते ॥ ३० ॥

१ एकादशनिरर्थत्वमिति ख० ।

समान्यश्च विशिष्टश्च धर्मवन्नवति द्विधा ।
सिद्धसैद्धान्तिकानाञ्च कवीनाञ्चाविवादतः ॥ ११ ॥
यः प्रसिध्यति सामान्य इत्यसौ समयी मतः ।
सर्व्वे सिद्धान्तिका येन सञ्चरन्ति निरत्ययं ॥ १२ ॥
कियन्त एव वा येन सामान्यस्तेन स द्विधा ।
छेदसिद्धान्ततोऽन्यः स्यात् केषाञ्चिद्भ्रान्तितो यथा ॥१३॥
तर्कज्ञानं मुनेः कस्य कस्यचित् क्षणभङ्गिका ।
भूरचैतन्यता कस्य ज्ञानस्य सुप्रकाशता ॥ १४ ॥
अज्ञातस्थूलताशब्दानेकान्तत्वं तथार्हतः ।
शैववैष्णवशाक्तेयसौरसिद्धान्तिनां मतिः ॥ १५ ॥
जगतः कारणं ब्रह्म साङ्ख्यानां सप्रधानकं ।
अस्मिन् सरस्वतीलोके सञ्चरन्तः परस्परम् ॥ १६ ॥
बध्नन्ति व्यतिपश्यन्तो यद्विशिष्टः स उच्यते ।
परिग्रहादप्यसतां सतामेवापरिग्रहात् ॥ १७ ॥
भिद्यमानस्य तस्यायं द्वैविध्यमुपगीयते ।
प्रत्यक्षादिप्रमाणैर्यद्बाधितं तदसद्विदुः ॥ १८ ॥
कविभिस्तत् प्रतिग्राह्यं ज्ञानस्य द्योतमानता ।
यदेवार्थक्रियाकारि तदेव परमार्थसत् ॥ १९ ॥
अज्ञानाज्ज्ञानतस्त्वेकं ब्रह्मैव परमार्थसत् ।
विष्णुः सर्गादिहेतुः स मृन्दालङ्कारकपवान् ।
अपरा च परा विद्या तां ज्ञात्वा मुच्यते भवात् ॥ ४० ॥

इत्याग्नेये महापुराणे अलङ्कारे काव्यदोषविवेको नाम
षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

# अथ सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः।

---ooo---

## एकाक्षराभिधानं।

अग्निरुवाच। एकाक्षराभिधानञ्च मातृकान्तं वदामि ते।
अ विष्णुः प्रतिषेधः स्यादा पितामहवाक्ययोः॥ १॥
सीमायामथाव्ययं आ भवेत्संक्रोधपीडयोः।
इः कामे रतिलक्ष्मीरी उः शिवे रक्षकाद्य ऊः(१)॥ २॥
ऋ शब्दे चादितौ ऋस्यात् ऌ ॡ ते वै दितौ गुहे।
ए देवी ऐ योगिनी स्यादो ब्रह्मा औ महेश्वरः॥ ३॥
अङ्कामः अः प्रशस्तः स्यात्(२) को ब्रह्मादौ कु कुत्सिते।
खं शून्येन्द्रियं खड्गो गन्धर्व्वे च विनायके॥ ४॥
गङ्गीते गो गायने स्याद् घो घण्टा किङ्किणीमुखे।
ताड़ने ङश्च विषये स्पृहायाञ्चैव भैरवे॥ ५॥
चो दुर्जने निर्म्मले छन्छेदे जिर्ज्जयने तथा।
जं गीते झः प्रशस्ते स्याद्बले(३) ञो गायने च टः॥ ६॥
ठश्चन्द्रमण्डले शून्ये शिवे चोद्बन्धने मतः।
डश्च रुद्रे ध्वनौ त्रासे ढक्कायां ढो ध्वनौ मतः॥ ७॥
णो निष्कर्षे निश्चये च तश्चौरे क्रोडपुच्छके।
भक्षणे थश्छेदने दो धारणे शोभने मतः॥ ८॥

---

१ अथ रक्षकाद्य ऊरिति ख०। २ प्रशान्तः स्यादिति ख०।

३ वधे इति ख०।

धो धातरि च धुस्तूरे नो वृन्दे सुगते तथा।
प उपवने विख्यातः फश्च झञ्झानिले मतः॥ ९॥
फुः फुत्कारे निष्फले च विः पक्षी भञ्च तारके।
मा श्रीर्मानञ्च माता स्याद्याग यो वातवीरणे॥ १०॥
रो वह्नौ च लः शक्रे च लो विधातरि ईरितः।
विश्लेषणे वो वरुणे शयने शञ्च शं सुखे॥ ११॥
षः श्रेष्ठे सः परोक्षे च सा लक्ष्मीः सं कचे मतः।
धारणे हस्तथा रुद्रे क्षः क्षत्रे चाक्षरे मतः॥ १२॥
क्षो नृसिंहे हरौ तद्वत् क्षेत्रपालकयोरपि।
मन्त्र एकाक्षरो देवो भुक्तिमुक्तिप्रदायकः॥ १३॥
क्षैहयशिरसे नमः सर्व्वविद्याप्रदो मनुः।
अकाराद्यास्तथा मन्त्रा मातृकामन्त्र उत्तमः॥ १४॥
एकपद्मेऽर्च्चयेदेतान्नव दुर्गाश्च पूजयेत्।
भगवती कात्यायनी कौशिकी चाथ चण्डिका॥ १५॥
प्रचण्डा सुरनायिका उग्रा पार्व्वती दुर्गया।
ओं चण्डिकायै विद्महे भगवत्यै धीमहि तन्नो दुर्गा प्रचोदयात्।
क्रमादि तु षडङ्गं स्याज्जपो गुरुगुरुः क्रमात्॥ १६॥
अजितापराजिता चाथ जया च विजया ततः।
कात्यायनी भद्रकाली मङ्गला सिद्धिरेवती॥ १७॥
सिद्धादिवटुकाः पूज्या हेतुकश्च कपालिकः।
एकपादो भीमरूपो दिक्पालान्मध्यतो नव॥ १८॥
ह्रीं दुर्गे दुर्गे रक्षणि स्वाहामन्त्रार्थसिद्धये।
गौरी पूज्या च धर्म्माद्याः स्कन्दाद्याः शक्तयो यजेत्॥१९॥

प्रज्ञा ज्ञाना क्रिया वाचा वागीशी ज्वालिनी तथा ।
कामिनी काममाला च इन्द्राद्याः शक्तिपूजनं ॥ २० ॥
ओं गं स्वाहा मूलमन्त्रोऽयं गं वा गणपतये नमः ।
षडङ्गो रक्तशुक्लश्च दन्ताक्षपरशूत्कटः ॥ २१ ॥
समोदकोऽथ (१) गन्धादिगन्धोल्कायेति च क्रमात् ।
गजो महागणपतिर्महोल्कः पूज्य एव च ॥ २२ ॥
कुष्माण्डाय एकदन्तत्रिपुरान्तकाय श्यामदन्तविकटहरहासाय ।
लम्बनाशाननाय पद्मदंष्ट्राय मेघोल्काय धूमोल्काय ।
वक्रतुण्डाय विघ्नेश्वराय विकटोत्कटाय गजेन्द्रगमनाय ।
भुजगेन्द्रहाराय शशाङ्कधराय गणाधिपतये स्वाहा ।
एतैर्मनुभिः स्वाहान्तैः पूज्य तिलहोमादिनार्थभाक् ।
काद्यैर्वा बीजसंयुक्तैस्तैराद्यैश्च नमोऽन्तकैः ॥ २३ ॥
मन्त्राः पृथक् पृथग्वा स्युर्द्विरेफद्विमुखाक्षिणः(२)* ।
कात्यायनं स्कान्द प्राह यस्तद्व्याकरणं वदे ॥ २४ ॥

इत्याग्नेये महापुराणे एकाक्षराभिधानं नाम सप्तचत्वारिंश-
दधिकत्रिशततमोऽध्यायः ।

---

१ समो देवोऽथेति ख० ।

२ द्वे द्वे रेखाये दक्षिणा इति ख० ।

* द्विरेफद्विमुखाक्षिण इत्यत्र पाठः पाठसंदोहेषु समीचीनो भवितुं नार्हति ।

# अथाष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः।

———000———

## व्याकरणं।

स्कन्द उवाच। वक्ष्ये व्याकरणं सारं सिद्धशब्दस्वरूपकम्।
कात्यायनविबोधाय बालानां बोधनाय च ॥ १ ॥
प्रत्याहारादिकाः संज्ञाः शास्त्रसंव्यवहारगाः।
अ इ उ ण ऋ ऌ क ए ओ ङ ऐ औ च ह य व र ट ल ण ञ
म ङ ण नम झ भ ञ घ ढ ध ष ज ब ग ड द श ख फ छ ठ थ च
ट त क प य श ष स र ह ल इति प्रत्याहारः।
उपदेश इहलन्तं भवेदजनुनासिकः ॥ २ ॥
आदिवर्णो ग्रहणमाचोऽप्यन्त्येनेता सहैव तु।
तयोर्मध्यगतानां स्यादुपाहकः स्वस्य तथवा ॥ ३ ॥
अण् एङ् अट् यङ् छव् भम् अष् अक् इक् अण् इण् यण्
णकारेण चकारेण। अम् यम् ङम् अच् इच् ऐच् मय् मय् भय् खय्
जव् भव् खव् चव् शव् अस् हस् वस् भस् अल् हल् वल् रल्
झल् सल् इति प्रत्याहारः।

इत्याग्नेये महापुराणे व्याकरणे प्रत्याहारो नामाष्टचत्वारिंश-
दधिकत्रिशततमोऽध्यायः।

————

# अथोनपञ्चाशदधिकद्विशततमोऽध्यायः ।

———ooo@ooo———

## सन्धिसिद्धरूपं ।

स्कन्द उवाच । वक्ष्ये सन्धिसिद्धरूपं स्वरसन्धिमथादितः ।

दण्डाग्रं सागता दधीदं नदीहते मधूदकं ॥ १ ॥

पितृषभः लृकारश्च तवेदं सकलोदकं ।

अर्द्धर्चोऽयं तवल्कारः सैषा सैन्द्री तवौदनम् ॥ २ ॥

खट्वौघोऽभवदित्येवं व्यसुधीर्वंस्वलङ्कृतं ।

पित्रर्थोपवनं रायौ नायको लावको नयः ॥ ३ ॥

तरइह तयिहेत्यादि तेऽत्र योऽत्र अलेऽकाजं ।

प्रज्ञातिर्नो अहो एहि अ अवेहि इ इन्द्रकं ॥ ४ ॥

उ उत्तिष्ठ कवी एतौ वायु एतौ वने इमे ।

अमी एते यज्ञभूते एहि देव इमनय ॥ ५ ॥

वक्ष्ये सन्धिं व्यञ्जनानां वाग्यतोऽजैकमातृकः ।

षडेते तदिमे वादिवाङ्नीतिः षण्मुखादिकम् ॥ ६ ॥

वाङ्मनसं वग्भावादिर्वाक् श्लक्ष्णं तच्छरीरकं ।

तन्नु नाति तच्चरेच्च क्रुङ्ङास्ते च सुगण्णिह ॥ ७ ॥

भवांश्चरन् भवाञ्छादो भवांष्टीका भवांष्ठकः ।

भवांस्तीर्थं भवांस्थेयात् भवांश्च त्वा भवाञ्जयः ॥ ८ ॥

भवाँल्लिखते भवाञ्छ्येते भवाञ्जयेते भवाञ्छीनः ।

त्वम्भर्त्ता त्वङ्करोष्यादिः सन्धिर्योगो विसर्गजः ॥ ९ ॥

कश्चिन्स्यात् कश्चरेत् कष्टः काष्ठः कस्थश्च कश्चलेत् ।
क×खनेत् क×करोति कः क ॱ पठेत् कॱ फलेत वा ॥१०॥
कष्ष्वशुरः कःश्वशुरः कस्सावरः कःसावरः ।
कः फलेत कः शयिता कोऽत्र योधः क उत्तमः ॥ ११ ॥
देवा एते भो इह सोदरा यान्ति भगो व्रज ।
सुपूः सुदूराश्चिरत्न वायुर्यातिं पुनर्न हि ॥ १२ ॥
पुनरेति स यातीह एष याति क ईश्वरः ।
ज्योतीरूपं तवच्छत्रं म्लेच्छधीश्छिद्रमच्छिदत् ॥ १३ ॥

इत्याग्नेये महापुराणे व्याकरणे सन्धिसिद्धरूपं नामो-
नपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

## अथ पञ्चाशदधिकत्रिशततमोऽध्यायः ।

———ooo———

### सुब्विभक्तिसिद्धरूपं ।

स्कन्द उवाच । विभक्तिसिद्धरूपञ्च कात्यायन वदामि ते ।
द्वे विभक्ती सुप्तिङश्च सुपः सप्त विभक्तयः ॥ १ ॥
सुऔजसिति प्रथमा अमौट्शसो द्वितीया ।
टाभ्यां भिसिति तृतीया ङेभ्यांभ्यसश्चतुर्थ्यपि ॥ २ ॥
ङसिभ्यांभ्यसः पञ्चमी स्यात्ङसोसामिति षष्ठ्यपि ।
ङिओस्सुविति सप्तमी स्यात् सुः प्रातिपदिकात्पराः ॥३॥
द्विविधं प्रातिपदिकं स्वरान्तञ्च हलन्तकं ।

प्रत्येकं त्रिविधं तत् स्यात् पुमांस्त्री च नपुंसकं ॥ ४ ॥
दृश्यन्ते नायकास्तेषामनुक्रमानाच्च वीर्य्यतः ।
वृक्षः सर्व्वोऽथ पूर्व्वश्च प्रथमश्च द्वितीयकः ॥ ५ ॥
तृतीयः खगड़पा वह्निः सखापतिरहर्पतिः ।
पटुर्नीर्ग्रामणीन्द्रश्च खलपूर्म्मितभूः स्वभूः ॥ ६ ॥
सुश्रीः सुधीः पिता भ्राता ना कर्त्ता क्रोष्टुनप्तृकौ ।
सुरा रा गौस्तथा द्यौर्ग्लौः स्वरान्ताः पुंसि नायकाः ॥७॥
सुवाक् त्वक् पृषत् सम्राट् जन्मभाक् च अवेडपि ।
आपो मरुद्भवन् दीव्यन् भवांश्च मघवान् पिवन् ॥ ८ ॥
भगवानधवानर्व्वान्वर्षिष्ठमत् सर्व्व वित्सुपृत् ।
सुसीमा कुण्डी राजा च श्वा युवा मघवा तथा ॥ ८ ॥
पूषा सुकर्म्मा यज्वा च सुवर्म्मा च सुधर्म्मणा ।
अर्य्यमा वृत्रहा पन्थाः सुककुदादिपश्च च ॥ १० ॥
प्रशान् सुतांश्च पञ्चाद्याः सुगीः सुराः सुपूरपि ।
चन्द्रमाः सुवचाः श्रेयान् विद्वांश्चोशनसा सह ॥ ११ ॥
पेचिवान् गौरवानड्वान् गोधूश्चित्वद्रुहो श्वलिट् ।
स्त्रियां जाया जरा बाला एड़का सह वृड्या ॥ १२ ॥
क्षत्रिया बहुराजा च बहुदा माऽथ बालिका ।
माया कौमुदगन्धा च सर्व्वा पूर्व्वा सहान्यया ॥ १३ ॥
द्वितीया च तृतीया च बुद्धिः स्त्री श्रीर्नदी सुधीः ।
भवन्ती चैवन्दीव्यन्ती भाती भान्ती च यान्त्यपि ॥ १४ ॥
शृण्वती तुदती कर्त्री तुदन्ती कुर्वती मही ।
रुन्धती क्रीड़ती दान्ती पालयन्ती सुराण्यपि ॥ १५ ॥

गौरी पुत्रवती नौश्च वधूर्दैवतया भुवा ।
तिस्रो द्वे कति वर्षाभूः स्वसा माता वरा च गौः ॥ १६ ॥
नौर्वाक्त्वक्प्राच्यवाचीति तिरश्ची समुदीच्यपि ।
शरद्विद्युत् सरिद्योषित् अग्निवित् सम्पदा दृशत् ॥ १७ ॥
येषा सा वेदवित्संवित् बह्वी राज्ञी त्वया मया ।
सीमा पश्चादयो राजी धूः पूश्चैव दिशा (१)गिरा ॥ १८ ॥
चतस्रो विदुषी चैव केयं दिक् दृक्च तादृशी ।
असौ स्त्रियां नायकाश्च नायकाश्च नपुंसके ॥ १९ ॥
कुण्डं सर्वं सोमपश्च दधि वारि खलप्वथ ।
मधु त्रपु कर्त्तृ भर्त्तृ अतिवक्तृ पयः पुरः ॥ २० ॥
प्राक्प्रत्यक् च तिर्य्यगुदक् जगद् जाग्रत्तथा सक्तत् ।
सुसम्यञ्च सुदगड्डीह अहः किञ्चेदमित्यपि ॥ २१ ॥
षट्सर्पिः श्रेयश्चत्वारि अदोऽन्ये चोह्या: परे ।
एतेभ्यः प्रथमादयश्च स्युः प्रातिपदिकात्परा: ॥ २२ ॥
धातुप्रत्ययहीनं यत्स्यात् प्रातिपदिकन्तु तत् ।
प्रातिपदिकात् स्वलिङ्गार्थवचने प्रथमा भवेत् ॥ २३ ॥
सम्बोधने च प्रथमा उक्ते कर्म्मणि कर्त्तरि ।
कर्म्म यत् क्रियते तत्स्यात् द्वितीया कर्मणि स्मृता ॥ २४ ॥
क्रियते येन करणं कर्त्ता यश्च करोति सः ।
अनुक्ते तिङ्कृत्तद्धितैस्तृतीया करणे भवेत् ॥ २५ ॥
कारके कर्त्तरि च सा सम्प्रदाने चतुर्थ्यपि ।
यस्मै दित्सा धारयते सम्प्रदानं तदीरितं ॥ २६ ॥

१ द्विशेति ख० ।

अपादानं यतोऽपैति आदत्ते च भयं यतः ।
अपादाने पञ्चमी स्यात् स्वस्वाम्यादौ च षष्ठ्यपि ॥ २७ ॥
आधारो योऽधिकरणं विभक्तिस्तत्र सप्तमी ।
एकार्थे चैकवचनं द्व्यर्थे द्विवचनं भवेत् ॥ २८ ॥
बहुषु बहुवचनं सिद्धरूपाण्यथो वदे ।
वृक्षः सूर्य्योऽम्बुवाहोऽर्के हरवे हेद्विजातयः ॥ २९ ॥
विप्रो गजान्महेन्द्रेण यमाभ्यामनलैः कृतं ।
रामाय मुनिवर्य्याभ्यां केभ्यो धर्म्मात् हरौ रतिः ॥ ३० ॥
शराभ्यां पुस्तकेभ्यश्च अर्थस्येश्वरयोर्गतिः ।
बालानां सज्जने प्रीतिर्हंसयोः कमलेषु च ॥ ३१ ॥
एवं काममहेशाद्याः शब्दा ज्ञेयाश्च वृक्षवत् ।
सर्व्वे विश्वे च सर्वस्मै सर्वस्मात्कतरो मतः ॥ ३२ ॥
सर्वेषां स्वश्च विश्वस्मिन् शेषं रूपञ्च वृक्षवत् ।
एवञ्चोभयकतरकतमान्यतरादयः ॥ ३३ ॥
पूर्व्वे पूर्व्वाय पूर्वस्मै पूर्वस्मात् सुसमागतः ।
पूर्व्वे त्वृद्धिश्च पूर्वस्मिन् शेषरूपन्तु सर्ववत् ॥ ३४ ॥
एवं परावराद्याश्च दक्षिणोत्तरकान्तराः ।
अपरश्चाधरो नेमाः प्रथमाः प्रथमेऽर्कवत् ॥ ३५ ॥
एवं चरमायतया अल्पार्धा नेमकादयः ।
द्वितीयस्मै द्वितीयाय द्वितीयस्मात् द्वितीयकात् ॥ ३६ ॥
द्वितीयस्मिन् द्वितीये च तृतीयश्च तथाऽर्कवत् ।
सोमपाः सोमपौ ज्ञेयौ सोमपाः सोमपां व्रज ॥ ३७ ॥
कीलालपौ सोमपश्च सोमपा सोमपे दद ।

सोमपाभ्यां सोमपाभ्यः सोमपः सोमपोः कुलं ॥ ३८ ॥
एवं कीलालपाद्याः स्युः कविरग्निस्तथाऽरयः ।
हे कवे कविमग्नी तान् हरीन् सात्यकिना हतं ॥ ३९ ॥
रविभ्यां रविभिर्देहि वह्नये यः समागतः ।
अग्नेरग्नेोस्तथाग्नीनां कवौ कव्योः कविष्वऽथ ॥ ४० ॥
एवं सुमतिरभ्रान्तिः सुकीर्त्तिः सुष्टुतिस्तथा ।
सखा सखायौ सखायः हे सखे व्रज सत्पतिं ॥ ४१ ॥
सखायञ्च सखायौ च सखीन् सख्या गतो दद ।
सख्ये सख्युश्च सख्युश्च सख्योः शेषः कवेरिव ॥ ४२ ॥
पत्या पत्ये च पत्युश्च पत्युः पत्योस्तथाऽग्निवत् ।
द्वौ द्वौ द्वाभ्यां द्वाभ्यां द्विलाद्यर्थे द्वयोर्द्वयोः ॥ ४३ ॥
त्रयस्त्रींश्च त्रिभिस्त्रिभ्यस्त्रयाणाञ्च त्रिषु क्रमात् ।
कविवत् कतिकतीतिशेषं बहुवचनं स्मृतम् ॥ ४४ ॥
नीर्नियौ च नियो हे नीः नियं नियौ नियो निया ।
नीभ्यां नीभिर्निये नीभ्यः नियाविति नियोस्तथा ॥ ४५ ॥
सुश्रीः सुधीः प्रभृतयो ग्रामणीः पूजयेद्धरिं ।
ग्रामण्यौ ग्रामण्यो ग्रामण्यं ग्रामण्या ग्रामणीभिः ॥ ४६ ॥
ग्रामण्यो ग्रामण्यामेवं सेनानीप्रमुखाः सुभूः ।
सुभुवौ च स्वयम्भुवः स्वयम्भुञ्च स्वयम्भुवः ॥ ४७ ॥
स्वयम्भुवा स्वयम्भुवि एवं प्रतिभुवादयः ।
खलपः खलप्वौ श्रेष्ठौ खलप्वश्च खलप्वि च ॥ ४८ ॥
एवं शरपूमुखाः स्युः क्रोष्टा क्रोष्टार ईरिताः ।
क्रोष्टूंश्च क्रोष्टुना क्रोष्ट्रा क्रोष्टूनां क्रोष्टरीदृशं ॥ ४९ ॥

पिता पितरौ पितरः हेपितः पितरौ शुभौ ।
पितॄन् पितुः पितुः पित्रोः पितॄणां पितरीष्वयं ॥ ५० ॥
एवं भ्राता च जामातृमुखा नॄणां नृणां तथा ।
कर्त्ता कर्त्तारौ कर्त्तॄंश्च कर्त्तॄणां कर्त्तरीष्वयं ॥ ५१ ॥
पितृवच्चैवमुद्गाता स्वसा नप्त्रादयः स्मृताः ।
सुराः सुरायौ सुरायः सुरायाश्च सुराय्यपि ॥ ५२ ॥
गौः गावौ गाञ्च गवा च गोर्गवोश्च गवां गवि ।
एवं द्योर्ग्लौश्चापि तथा स्वरान्ताः पुंसि नायकाः ॥ ५३ ॥
सुवाक् सुवाचौ सुवाचा सुवाग्भ्याञ्च सुवाक्ष्वपि ।
एवं दिक्प्रमुखाः प्राङ्च प्राञ्चौ प्राञ्चश्च भो व्रज ॥ ५४ ॥
प्राग्भ्यां प्राग्भिः प्राचाञ्च प्राचि च प्राङ्सु प्राङ्क्ष्वपि ।
एवं ह्युदङ्ङुदीचौ वा सम्यङ् प्रत्यक्समीच्यपि ॥ ५५ ॥
तिर्य्यङ् तिरश्च सध्राङ् च विश्वद्र्याङ् पूर्ववत् स्मृताः ।
अदद्र्यङ्ङदमुयङ् स्यात् तथामुमुयङ्ङीरितः ॥ ५६ ॥
अदद्र्याञ्चो ह्यमुद्रीचः अदद्र्याग्भ्याञ्च पूर्व्ववत् ।
तत्त्वहट् तत्त्वहषौ च तत्त्वहड्भ्यां समागतः ॥ ५७ ॥
तत्त्वहृषि तत्त्वहट्सु एवं काष्ठतड़ादयः ।
भिषक् भिषग्भ्यां भिषजि जन्मभागादयस्तथा ॥ ५८ ॥
मरुत् मरुद्भ्यां मरुति एवं यत्नजिदादयः ।
भवान् भवन्तौ भवतां भवंश्चैव भवत्यपि ॥ ५९ ॥
महान्महान्तौ महतामेवं भगवदादयः ।
एवं मघवान्मघवन्तौ अग्निचिच्चाग्निचित्यपि ॥ ६० ॥
अग्निचित्स्वेवमेवान्यत् वेदवित्तत्त्ववित्स्वपि ।

वेदविदामिवमन्यत् यः समस्तेन सर्व्ववित् ॥ ६१ ॥
राजा राजानौ राज्ञः राज्ञि राजनि राजन् ।
यज्वा यज्वानस्तद्वत् करी दण्डी च दण्डिनौ ॥ ६२ ॥
पन्थाः पन्थानौ च पथः पथिभ्यां पथि चेदृशम् ।
मन्था ऋभुक्षाः पथ्याद्याः पञ्च पञ्च च पञ्चभिः ॥ ६३ ॥
प्रतान् प्रतानौ प्रतान्भ्यां हे प्रतांश्च सुशर्म्मणः ।
आपः अपः अद्भिरप्येवं प्रशांश्चैव प्रशाम्स्यपि ॥ ६४ ॥
कः केन सर्व्ववत् केषु अयं चेमे इमानयः ।
अनेन चाभ्यामेभिश्च अस्मै चेभ्यः स्वमस्य च ॥ ६५ ॥
अनयोरेषामेषु स्याच्चत्वारश्चतुरस्तथा ।
चतुर्णाञ्च चतुर्षऽस्ति सुगीः अथ सुगिर्थ्यपि ॥ ६६ ॥
सुद्यौः सुदिवौ सुद्युभ्यां विड्विषौ विट्सु याद्दृशः ।
याद्दृग्भ्याञ्चैव विड्भ्याञ्च षट् षट् षणाञ्च षट्स्वपि ॥६७॥
सुवचाः सुवचसा च सुवचोभ्यामथेदृशम् ।
हे सुवचो हे उशनन् उशना वोशनस्यपि ॥ ६८ ॥
पुरदंशा अनेहा हेविद्वन् विद्वांस उत्तमाः ।
विदुषे नमो विद्वद्भ्यां विद्वत्सु च बभूविवान् ॥ ६९ ॥
एवञ्च पेचिवान् श्रेयान् श्रेयांसो श्रेयसस्तथा ।
असौ अमू अमी अथ हा अमुं अमूनिहामुना ॥ ७० ॥
अमीभिरमुष्मै वामुष्मादमुष्य वामुयोस्तथा ।
अमीषाममुष्मिन्नित्येवं गोधुक् गोधुग्भिरागतः ॥ ७१ ॥
गोधुक्ष्वित्येवमन्येपि मित्रद्रुहो मित्रदुहा ।
मित्रध्रुग्भ्यां मित्रध्रुग्भिरेवं चित्रद्रुहादयः ॥ ७२ ॥

खलिट् खलिड्भ्यां खलिड्भि अनड्वाननडुत्सु च ।
अजन्ताश्च हलन्ताश्च पुंस्यथोऽथ स्त्रियां वदे ॥ ७२ ॥

इत्याग्नेये महापुराणे व्याकरणे पुंलिङ्गशब्दसिद्धरूपं नाम पञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

## अथैकपञ्चाशदधिकत्रिशततमोऽध्यायः ।

———ooo———

स्त्रीलिङ्गशब्दसिद्धरूपं ।

स्कन्द उवाच । रमा रमे रमाः शुभा रमां रमे रमास्तथा ।
रमया च रमाभ्याञ्च रमाभिः कृतमव्ययं ॥ १ ॥
रमायै च रमाभ्याश्च रमाया रमयोः शुभं ।
रमाणाञ्च रमायाञ्च रमास्वेवं कलादयः ॥ २ ॥
जरा जरसौ जर इति जरसश्च जरा जरां ।
जरसश्च जरास्वेवं सर्व्वा सर्व्वे च सर्व्वया ॥ ३ ॥
सर्व्वस्यै देहि सर्व्वस्याः सर्व्वस्याः सर्व्वयोस्तथा ।
शेषं रमावद्रूपं स्याद् द्वे द्वे तिस्रश्च तिसृणां ॥ ४ ॥
बुद्धीर्बुद्धा बुद्धये च बुद्धेः बुद्धेश्च हेमते ।
कविवत्स्यान्मुनीनाञ्च नद्यौ नद्यौ नदीं नदीः ॥ ५ ॥
नद्या नदीभिर्नद्यै च नद्याश्चैव नदीषु च ।
कुमारी शृभगीत्येवं श्रीः श्रियौ च श्रियः श्रिया ॥ ६ ॥

श्रियै श्रियै स्त्री स्त्रियश्च स्त्रीश्च स्त्रियः स्त्रिया स्त्रियै ।
स्त्रियाः स्त्रीणां स्त्रियाश्च ग्रामण्यां धेन्वै च धेनवे॥ ७ ॥
जम्बूर्जम्ब्वौ च जम्ब्वश्च जम्बूनाश्च फलम्भिव ।
वर्षाभ्वौ च पुनर्भ्वौ च मातृर्वापि च गौश्च नौः ॥ ८ ॥
वाग्वाचा वाग्भिश्च वाक्षु स्रग्भ्यां स्रजि स्रजोस्तथा ।
विद्वद्भ्याञ्चैव विद्वत्सु भवती स्याद् भवन्त्यपि ॥ ९ ॥
दीव्यन्ती भाती भान्ती च तुदन्ती च तुदत्यपि ।
रुदती रुन्धती देवी गृह्णती चोरयन्त्यपि॥ १० ॥
दृषत् दृषद्भ्यां दृषदि विशेषविदुषी कृतिः ।
समित् समिद्भ्यां समिधि सीमा सीम्नि च सीमनि ॥ ११ ॥
दामनीभ्यां ककुद्भ्याञ्च केशमाभ्यां तथासु च ।
गीर्भ्याञ्चैव गिरा गीर्षु सुभूः सुपूः पुरा पुरि ॥ १२ ॥
द्यौर्द्युभ्यां दिवि द्युषु तादृश्या तादृशो दिशः ।
यादृश्यां यादृशी तद्वत् सुवचोभ्यां सुवचःस्वपि ।
असौ चामूममू चामूरमूभिरमुयाऽमुयोः ॥ १३ ॥

इत्याग्नेये महापुराणे व्याकरणे स्त्रीलिङ्गशब्दसिद्धरूपं नामैक-
पञ्चाशदधिकद्विशततमोऽध्यायः ।

---

# अथ द्विपञ्चाशदधिकत्रिशततमोऽध्यायः।

———000@000———

## नपुंसकशब्दसिद्धरूपं।

स्कन्द उवाच। नपुंसके किं के कानि किं के कानि ततो जलं।
सर्वं सर्वे च पूर्वाद्याः सोमपं सोमपानि च॥ १॥
ग्रामणि ग्रामणिनी च ग्रामणि ग्रामणीन्यपि।
वारि वारिणी वारीणि वारिणां वारिणीदृशं॥ २॥
शुचये शुचिने देहि मृदुने मृदवे तथा।
त्रपु त्रपुणि त्रपुणाञ्च खलपूनि खलप्वि च॥ ३॥
कर्त्तॄ च कर्त्तॄणि कर्त्तॄ अतिर्य्यतिरिणास्तथा।
अभिन्नाभिनिनी चैव सुवचांसि सुवासु च॥ ४॥
यद्यत्त्विमे तत् कर्म्माणि इदश्वे मे त्विमानि च।
ईदृक्त्वदोऽमुमी अमूनि अमुना स्यादमीषु च॥ ५॥
अहमावां वयं मां वै आवामस्मान्मया कृतं।
आवाभ्याञ्च तथास्माभिर्मह्यमस्मभ्यमेव च॥ ६॥
मदावाभ्यां मदस्माच्च पुत्रोऽयं मम चावयोः।
अस्माकमपि चास्मासु त्वं युवां यूयमीजिरे॥ ७॥
त्वां युवाञ्च युष्मांश्च त्वया युष्माभिरीरितं।
तुभ्यं युवाभ्यां युष्मभ्यं त्वत् युवाभ्याञ्च युष्मत्॥ ८॥
तव युवयोर्युष्माकं त्वयि युष्मासु भारती।
उपलक्षणमेवैतत् सुब्भलन्तास्तु ते स्मृताः॥ ९॥

इत्याग्नेये महापुराणे व्याकरणे नपुंसकशब्दसिद्धरूपं नाम द्विपञ्चाशदधिकत्रिशततमोऽध्यायः।

## अथ त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ।

———000@000———

### कारकं ।

स्कन्द उवाच । कारकं सम्प्रवक्ष्यामि विभक्त्यर्थसमन्वितं ।
ग्रामोऽस्ति हिमवाकौह नौमि विष्णुं श्रिया सह ॥ १ ॥
स्वतन्त्रः कर्त्ता विद्यात्सं व्रतिनः समुपासते ।
हेतुकर्त्तानम्भयते हितं वै कर्म्मकर्त्तरि ॥ २ ॥
स्वयं भिद्येत् प्राकृतधीः स्वयञ्च छिद्यते तरुः ।
कर्त्ताऽभिहित उत्तमः कर्त्ताऽनभिहितोऽधमः ॥ ३ ॥
कर्त्ताऽनभिहितो धर्म्मः शिष्ये व्याख्यायते यथा ।
कर्त्ता पञ्चविधः प्रोक्तः कर्म्म सप्तविधं शृणु ॥ ४ ॥
ईप्सितं कर्म्म च यथा श्रद्दधाति हरिं यतिः ।
अनीप्सितं कर्म्म यथा अहिं लङ्घयते भृशं ॥ ५ ॥
नैवेप्सितं नानीप्सितं दुग्धं सम्भक्षयन्नजः ।
भक्षयेदप्यकथितं गोपालो दोग्धि गां पयः ॥ ६ ॥
कर्त्तृकर्म्मोऽथ गमयेच्छिष्यं ग्रामं गुरुर्यथा ।
कर्म्म चाभिहितं पूजा क्रियते वै श्रिये हरेः ॥ ७ ॥
कर्म्मानभिहितं स्तोत्रं हरेः कुर्य्यात्तु सर्व्वदं ।
करणं द्विविधं प्रोक्तं वाह्यमभ्यन्तरं तथा ॥ ८ ॥
चक्षुषा रूपं गृह्णाति वाह्यं दात्रेण तल्लुनेत् ।
सम्प्रदानं त्रिधा प्रोक्तं प्रेरकं ब्राह्मणाय गां ॥ ९ ॥

नरो ददाति नृपतये दासस्तदनुमन्तृकं ।
अनिराकर्त्तृकं भर्त्रे दद्यात् पुष्पाणि सज्जनः ॥ १० ॥
अपादानं द्विधा प्रोक्तं चलमश्वात्सु धावतः ।
पतितस्माचलं ग्रामादागच्छति स वैष्णवः ॥ ११ ॥
चतुर्द्धा चाधिकरणं व्यापकन्दध्नि वै घृतम् ।
तिलेषु तैलं देवार्थमौपश्लेषिकमुच्यते ॥ १२ ॥
गृहे तिष्ठेत् कपिश्च स्मृतं वैषयिकं यथा ।
जले मत्स्यो वने सिंहः स्मृतं सामीप्यकं यथा ॥ १३ ॥
गङ्गायां घोषो वसति औपचारिकमीदृशं ।
तृतीया चाथ वा षष्ठी स्मृताऽनभिहिते तथा ॥ १४ ॥
विष्णुः सम्पूज्यते लोकैर्गन्तव्यन्तेन तस्य वा ।
प्रथमाऽभिहितकर्त्तृकर्म्मणोः प्रणमेद्धरिम् ॥ १५ ॥
हेतौ तृतीया चान्नेन वसेद्दृष्ट्वाय वै जलं ।
चतुर्थी तादर्थ्येऽभिहिता पञ्चमी पर्य्युपाङ्मुखैः ॥ १६ ॥
योगे दृष्टः परि ग्रामादेवोऽयं बलवत् पुरा ।
पूर्व्वो ग्रामादृते विष्णोर्न मुक्तिरितरो हरेः ॥ १७ ॥
पृथग्विनाद्यैस्तृतीया पञ्चमी च तथा भवेत् ।
पृथग्ग्रामाद्धिरण्येन विना श्रीश्च श्रिया श्रियः ॥ १८ ॥
कर्म्मप्रवचनीयाद्यैर्द्वितीया योगतो भवेत् ।
अन्वर्ज्जुनञ्च योद्धारो ह्यभितो ग्राममीरितं ॥ १९ ॥
नमःस्वाहास्वधास्वस्तिवषडाद्यैश्चतुर्थ्यपि ।
नमो देवाय ते स्वस्ति तुमर्थाद्भाववाचिनः ॥ २० ॥
पाकाय पक्तये याति तृतीया सहयोगके ।

हेत्वर्थे कुत्सितेऽङ्गे सा तृतीया च विशेषणे । २१ ॥
पिताऽगात्सह पुत्रेण काणोऽक्ष्णा गदया हरिः ।
अर्थेन निवसेद्भृत्यः काले भावे च सप्तमी ॥ २२ ॥
विष्णौ नते भवेन्मुक्तिर्वसन्ते स गतो हरिम् ।
नृणां स्वामी नृषु स्वामी नृणामीशः सताम्पतिः ॥ २३ ॥
नृणां साक्षी नृषु साक्षी गोषु नाथो गवाम्पतिः ।
गोषु सूतो गवां सूतो राज्ञां दायादकोऽस्त्विह ॥ २४ ॥
अन्नस्य(१) हेतोर्वसति षष्ठी स्मृत्यर्थकर्मणि ।
मातुः स्मरति गोप्तारं नित्यं स्यात् कर्तृकर्मणोः ।
अपां भेत्ता तव कृतिर्न निष्ठादिषु षष्ठ्यपि ॥ २५ ॥

इत्याग्नेये महापुराणे व्याकरणे कारकं नाम त्रिपञ्चाश-
दधिकत्रिशततमोऽध्यायः ।

---

## अथ चतुःपञ्चाशदधिकत्रिशततमोऽध्यायः ।

### समासः ।

स्कन्द उवाच । षोढा समासं वक्ष्यामि अष्टाविंशतिधा पुनः ।
नित्यानित्यविभागेन लुगलोपेन च द्विधा ॥ १ ॥
कुम्भकारश्च नित्यः स्यात्प्रकारादिकस्तथा ।
राज्ञः पुमान् राजपुमान् नित्योऽयञ्च समासकः ॥ २ ॥

---

१ अर्थस्येति ज० ।

कष्टश्रितो लुक्समासः कण्ठेकालादिकस्त्वलुक् ।
स्यादष्टधा तत्पुरुषः प्रथमाद्यसुपा सह ॥ ३ ॥
प्रथमातत्पुरुषोऽयं पूर्व्वं कायस्य विग्रहे ।
पूर्वकायोऽपरकायो ह्यधरोत्तरकायकः ॥ ४ ॥
अर्द्धं कणाया अर्द्धकणा भिक्षातूर्य्यमग्रेटग्रम् ।
आपन्नजीविकस्तद्वत् द्वितीया चाधराश्रितः ॥ ५ ॥
वर्षभोग्यो वर्षभोग्यो धान्यार्थश्च तृतीयया ।
चतुर्थी स्याद्विष्णुबलिर्वृकभीतिश्च पञ्चमी ॥ ६ ॥
राज्ञः पुमान् राजपुमान् षष्ठी वृक्षफलं तथा ।
सप्तमी चाक्षशौण्डोऽयमद्वितो नञ्समासकः ॥ ७ ॥
कर्मधारयः सप्तधा नीलोत्पलमुखाः स्मृताः ।
विशेषणपूर्वपदो विशेष्योत्तरतस्तथा ॥ ८ ॥
वैयाकरणखसूचिः शीतोष्णं द्विपदं शुभम् ।
उपमानपूर्वपदः शङ्खपाण्डर इत्यपि ॥ ९ ॥
उपमानोत्तरपदः पुरुषव्याघ्र इत्यपि ।
सम्भावनापूर्वपदो गुणवृद्धिरितीटग्रम् ॥ १० ॥
गुण इति वृद्धिर्वाच्या सुहृदेव सुबन्धुकः ।
अवधारणपूर्वपदो बहुव्रीहिश्च सप्तधा ॥ ११ ॥
द्विपदश्च बहुव्रीहिरारूढभवनो नरः ।
अर्चिताशेषपूर्व्वोऽयं बहुभिः परिकीर्त्तितः ॥ १२ ॥
एते विप्रायोपदशाः सङ्ख्योत्तरपदस्त्वयम् ।
सङ्ख्योभयपदो यद्वद्द्विता द्विकत्रयो नरः ॥ १३ ॥
सहपूर्वपदोऽयं स्यात् समूलोद्धृतकण्टकः ।

व्यतिहारलक्षणार्थः केशाकेशि नखानखि ॥ १४ ॥
दिग्लक्ष्या स्याद्दक्षिणपूर्व्वा द्विगुराभाषितो द्विधा ।
एकवद्वापि द्विगुक्तं पञ्चमूली त्वनेकधा ॥ १५ ॥
द्वन्द्वः समासो द्विविधो ह्यौतरेतरयोगकः ।
रुद्रविष्णू समाहारो भेरीपटहमीदृगम् ॥ १६ ॥
द्विधाख्यातोऽव्ययीभावो नामपूर्व्वपदो यथा ।
शाकस्य मात्रा शाकप्रति यथाऽव्ययपूर्व्वकः ॥ १७ ॥
उपकुम्भञ्चोपरथ्यं प्राधान्येन चतुर्विधः ।
उत्तरपदार्थमुख्यो द्वन्द्वश्चाभयमुख्यकः ।
पूर्व्वार्थगोऽव्ययीभावो बहुव्रीहिश्च बाह्यगः ॥ १८ ॥

इत्याग्नेये महापुराणे व्याकरणे समासो नाम चतुःपञ्चाश-
दधिकत्रिशततमोऽध्यायः ।

---

## अथ पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ।

———०००@०००———

### तद्धितं ।

स्कन्द उवाच । तद्धितं त्रिविधं वक्ष्ये सामान्यवृत्तिरीदृशी ।
ले व्यंसलो वत्सलः स्यादिलचि स्यात्तु फेनिलं ॥ १ ॥
लोमशः शे पामनो ने इलचि स्याच्च पिच्छिलं ।
अणि प्राश्च आर्षकः स्यात् दन्तादुरचि दन्तुरः ॥ २ ॥
रे स्यान्मधुरं सुषिरं रे स्यात् केशर ईदृशः ।

हिरण्यं ये मालवो वे वलचि स्याद्रजस्वलः ॥ ३ ॥
इनो धनी करो हस्तो धनिकं टिकनोरितं ।
पयस्वी विनि मायावी जर्णायुयुचि ईरितं ॥ ४ ॥
वाग्मी मिनि आलचि स्याद्वाचालश्चाटचोरितं ।
फलिनो वर्हिणः केको वृन्दारकस्तथा कनि ॥ ५ ॥
आलुचि शीतञ्च सहते शीतालुः स्यालुरीदृशः ।
हिमालुरालुचि स्याच्च हिमं न सहते तथा ॥ ६ ॥
रूपं वातादुलचि स्याद् वातुलश्चानपत्यके ।
वाशिष्ठः कौरवो वासः पाञ्चालः सोस्य वासकः ॥ ७ ॥
तत्र वासो माथुरः स्यादेत्यधीते च चान्तकः ।
व्युत्क्रमं वेत्ति क्रमकः नरश्चक्राम कौशकः ॥ ८ ॥
प्रियङ्गूनां भवं चेत्रं प्रैयङ्गवीनकं खञि ।
मौद्गीनं कौद्रवीणञ्च वैदेहश्चानपत्यके ॥ ९ ॥
इञि दाचिरौशरथिः कचि नारायणादिकं ।
आश्वागनः स्याच्च फञि यचि गार्ग्यश्च वात्सकः ॥ १० ॥
ढकि स्यादैनतेयादिश्चाटकेरस्तथैरकि ।
ढकि गोधेरको रूपं गोधारश्चारकोरितं ॥ ११ ॥
क्षत्रियो घे कुलीनः खे ण्ये कैरव्यादयः स्मृताः ।
यति मूर्द्धन्यमुख्यादिः सुगन्धिरिति रूपकं ॥ १२ ॥
तारकादिभ्य इतनि नभस्तारकितादयः ।
अनङ्गि स्याच्च कुण्डोऽग्नी पुष्पधन्वसुधन्वनो ॥ १३ ॥
चक्षुपि चित्रचक्षुः स्याच्चित्तमस्य च शब्दके ।
चणपि स्यात् केशचणः रूपे स्वरत् पटरूपकम् ॥ १४ ॥

ईयसौ च पटीयान् स्यात् तरप्यप्यतरादिकम् ।
पचतितरान्त तरपि तमप्यटतितमामपि ॥ १५ ॥
गृहीतमा कल्पपि स्यादिन्द्रकल्पोऽर्ककल्पकः ।
राजदेशीयो देशीये देश्ये देश्यादिरूपकम् ॥ १६ ॥
पटुजातीयो जातीये जानुमात्रञ्च मात्रचि ।
ऊरुद्वयसो द्वयसचि ऊरुद्घ्नञ्च दघ्नचि ॥ १७ ॥
तर्याट स्यात् पञ्चतयः दौवारिकठकीरितं ।
सामान्यवृत्तिरुक्ताऽथ अव्ययाख्यश्च तद्धितः ॥ १८ ॥
यस्माद्यतस्तसिलि च यत्र तत्र त्रलीरितं ।
अस्मिन् काले ह्यधुनास्यादिदानीञ्चैव दान्यपि ॥ १९ ॥
सर्वस्मिन् सर्वदा दास्यात्तस्मिन्काले हिलीरितं ।
तर्हि र्हाऽस्मिन् काल इह कर्हि कस्मिंश्च कालके ॥ २० ॥
यथा थालि थमि कथं पूर्वस्यान्दिशि सञ्चरेत् ।
अस्ताति चैव पूर्वस्याः पूर्वादिनामगोयकाः ॥ २१ ॥
पुरस्तात् सञ्चरेद्ग गच्छेत् सद्यस्त्वल्येऽहनीरितं ।
उति पूर्वाब्दे च परुत् पूर्वतरे परार्य्यपि ॥ २२ ॥
एषमोऽस्मिन् संवत्सरे रूपं समसि चेरितं ।
एद्यवौ परेद्यवि स्यात् परस्मिन्नहनीरितं ॥ २३ ॥
अद्यास्मिन्नहनि द्ये स्यात् पूर्वेद्युश्च तथेद्युसि ।
दक्षिणस्यान्दिशि वसेत् दक्षिणाद्दक्षिणाद्युभौ ॥ २४ ॥
उत्तरस्यान्दिशि वसेदुत्तरादुत्तराद्युभौ ।
उपरि वसेदुपरिष्टाद् भवेद्रिष्टाति ऊर्द्धकात् ॥ २५ ॥
उत्तरेण च पितॄणां आचि च स्याच्च दक्षिणा ।

आह्वौ दक्षिणाक्षि वसेद्द्विप्रकारं द्विधा च धा ॥ २६ ॥
अमुक्षि चैकध्यं कुरु त्वं द्वैधन्धमुक्षि चेद्दृशं ।
द्वौ प्रकारौ द्विधा धाचि(१) आसुसुरतरं यथा(२)* ॥२७॥
निपातास्तद्धिताः प्रोक्ताः तद्धितो भाववाचकः ।
पटोर्भावः पटुत्वञ्च पटुता तल्निचेरितं ॥ २८ ॥
प्रथिमा चेमनि पृथोः सौख्यं सुखात् ष्यञीरितम् ।
स्तेयं याति च स्तेनस्य ये सख्युः सख्यमीरितं ॥ २९ ॥
कपेर्भावश्च कापेयं सैन्यं पथ्यं यञीरितं ।
आश्वं कौमारकं चाणि रूपं चाणि च यौवनम् ।
आचार्य्यकं कणि प्रोक्तमेवमन्येपि तद्धिताः ॥ ३० ॥

इत्याग्नेये महापुराणे व्याकरणे तद्धितसिद्धरूपं नाम
पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

## अथ षट्पञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

उणादिसिद्धरूपम् ।

कुमार उवाच । उणादयोऽभिधास्यन्ते प्रत्यया धातुतः परे ।
उणि कारुश्च शिल्पी स्यात् जायुर्मायुश्च पित्तकं ॥ १ ॥
गोमायुर्वायुर्वेदेषु वहुलं स्युरुणादयः ।

---

१ पाठोऽयं पौनरुक्त्यादोषेण दुष्टः ।
२ स्वयं सुसुतरा यथेति ज० । असुसुतरां यथेति ट० ।
* पाठोऽयं, एतत्पाठस्थलाभिषिक्तपाठान्तरञ्च न सम्यक् प्रतिभाति ।

भायुः स्वादुश्च हेत्वाद्याः किंशारुर्धान्यशूककः ॥ २ ॥
कृकवाकुः कुक्कुटः स्याद् गुरुभर्त्ता महस्तथा ।
शयुश्चाजगरो ज्ञेयः स हरायुधमुच्यते ॥ ३ ॥
स्वरुर्वज्रं वपुरसि समसारं फल्गुरीरितं ।
गृहञ्च छनि किरचि मन्दिरं तिमिरं तमः ॥ ४ ॥
दूलचि सलिलं वारि कल्याणं भण्डिलं स्मृतं ।
बुधो विद्वान् क्रमो स्यान्न शिविरं गुप्तसंस्थितिः ॥ ५ ॥
श्रोतुर्विडालश्च तुनि अभिधानादुणादयः ।
कर्णः कामी च गृहभूर्यास्तुजवालकः स्मृतः ॥ ६ ॥
अनड्वान् वहतेर्विनि स्याज्जातो जीवार्णवौषधं ।
नौ यक्षिरिननि हरिणः मृगः कामी च भाजनम्(१)॥७॥
कम्बोजो भाजनश्चाण्डं सरण्डश्च चतुष्पदः ।
तरुरेरण्डः सज्जातो वरुड़ः साम निर्भरं ॥ ८ ॥
स्फारं प्रभूतं स्यान्नान्तप्रत्यये चीरवल्कलं ।
कातरो भीरुकश्चमूः प्रचण्डो जवनं तृणं ॥ ९ ॥
जगच्चैव तु भूर्लोको कृगानुर्ज्योतिरङ्गकः ।
बर्व्वरः कुटिलो धूर्त्तश्चत्वरञ्च चतुष्पथं ॥ १० ॥
चीवरं भिक्षुप्रावृत्तिरादित्यो मित्र ईरितः ।
पुत्रः सूनुः पिता तातः पृदाकुर्व्याघ्रवृश्चिके ।
गर्त्तोऽवटोऽथ भरतो नटोऽपरेप्युणादयः ॥ ११ ॥

इत्याग्नेये महापुराणे व्याकरणे उणादिसिद्धरूपं नाम षट्-
पञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

१ पाठोऽयं न साधु मन्यते ।

# अथ सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः ।

———ooo———

## तिङ्विभक्तिसिद्धरूपं ।

कुमार उवाच । तिङ्विभक्तिं प्रवक्ष्यामि तथादेशं समासतः ।
तिङस्त्रिष्वपि वर्त्तन्ते भावे कर्म्मणि कर्त्तरि ॥ १ ॥
सकर्म्मकार्म्मकाश्च कर्त्तरि द्विपदे स्मृताः ।
सकर्म्मकाकर्म्मणि च तदादेशस्तथेरितः ॥ २ ॥
वर्त्तमाने लडाख्यातो विध्याद्यर्थे लिङीरितः ।
विध्यादौ लोडाशिषि च भूतानद्यतने च लङ् ॥ ३ ॥
भूते लुङ् लिट् परोक्षेऽथ भाविन्यद्यतने च लुट् ।
लिङाशिषि च शेषेऽर्थे लृट् भविष्यति लृङ्भवेत् ॥ ४ ॥
लिङ्निमित्ते क्रियातिपत्तौ परे नवात्मनेपदम् ।
पूर्व्वं नव परस्मैपदन्तिप्तसन्तीति प्रथमः पुमान ॥ ५ ॥
सिप्थसथ मध्यमनरो मिप्वस्मसश्चोत्तमः पुमान् ।
त आतां अन्तात्मने मुख्यः थासाथां ध्वञ्च मध्यमः ॥ ६ ॥
उत्तम इ वहि महि भूवाद्या धातवः स्मृताः ।
भविरेधिः पचिर्नन्दिर्ध्वंसिः श्रंसिः पदिस्वदिः ॥ ७ ॥
शीङः क्रीड़ा जुहोतिश्च जहातिश्च दधात्यपि ।
दीव्यतिः स्वपितिर्नह्यिः सुनोतिर्वसिरेव च ॥ ८ ॥
तुदिर्मृशतिर्मुञ्चतिः रुधिर्भुजिस्त्यजिस्तनिः ।
शवादिके विकरणे मनिश्चैव करोत्यपि ॥ ९ ॥

क्रीड़ितिर्ङ्गो यहिप्रयोरिः पा नीरर्भिव नायकाः ।
भुवि स्यात् तिङ् भवति सः भवतस्तौ भवन्ति ते ॥१०॥
भवसि त्वं युवां भवथो यूयं भवथ चाप्यहं ।
भवाम्यावां भवावश्च भवामो ह्येधते कुलं ॥११॥
एधेते द्वे तथैधन्ते एधसे त्वं हि मेधया ।
एधेथे च समेधध्वे एधे ह्येधावहे धिया ॥ १२ ॥
एधामहे हरेर्भक्त्या पचतीत्यादि पूर्व्ववत् ।
भूयतेऽनुभूयते ऽसौ भावे कर्म्मणि वै यकि ॥ १३ ॥
बुभूषति सनीत्येवं णिचि भावयतीश्वरं ।
यङि बोभूयते वाद्यं बोभोति स्याच्च यङ्लुकि ॥ १४ ॥
पुत्रीयति पुत्रकाम्यत्येवं पटपटायते ।
घटयत्यऽथ सनि णिचि बुभूषयति रूपकं ॥ १५ ॥
भवेद्भवेतां च लिङि भवेयुश्च भवेः परे ।
भवेतञ्च भवेतेवं भवेयञ्च भवेव च भवेम च ॥ १६ ॥
एधेत एधेयातामेधेरन् मनसा श्रिया ।
एधेथाश्च एधेयाथामेधेध्वमेधेय एधेवहि एधेमहि ॥ १७ ॥
अस्तु तावद्भवतां लोटि भवन्तु भवताद्भव ।
भवतं भवत भवानि भवाव च भवाम च ॥ १८ ॥
एधतामेधेतामेधन्तामेधै पचावहै पचामहै ।
अभ्यनन्ददपचतामचन्नपचन्नस्तथा ॥ १९ ॥
अभवतमभवतापचमपचावपचाम च ।
ऐधतैधेतामैधध्वं ऐधे चैधामहीरितं ॥ २० ॥
अभूदभूतामभूवनभूयाभूवमेव लुङ् ।

ऐधिष्टैधिषातां नरावैधिष्ठा ऐधिषीढ्वं ॥ २१ ॥
लिटि बभूव बभूवतुः बभूवुश्च बभूविथ ।
बभूवथुर्बभूव च बभूविव बभूविम ॥ २२ ॥
पेचे पेचाते पेचिरे त्वमेधाञ्चकृषे तथा ।
एधाञ्चक्राथे पेचिध्वे पेचे पेचिमहे तथा ॥ २३ ॥
लुटि भविता भवितारौ भवितारो हरादयः ।
भवितासि भवितास्थो भवितास्मस्तथा वयं ॥ २४ ॥
पक्ता पक्तारौ पक्तारः पक्तासे त्वं शुभौदनं ।
पक्ताध्वे पक्ताहे चाहं पक्तास्महे हरेयकं ॥ २५ ॥
लिङ्याशिषि सुखं भूयात् भूयास्तां हरिशङ्करौ ।
भूयासुस्ते च भूयास्त्वं युवां भूयास्तमीश्वरौ ॥ २६ ॥
भूयास्त यूयं भूयासमहं भूयास्म सर्व्वदा ।
यज्ञोष्ट ह्येधिषीयास्तां यज्ञोरञ्चेधिसीय च ॥ २७ ॥
यज्ञीवह्येधिसीमहि लिङि चायक्ष्यतेति लृङ् ।
अयक्ष्येतामयक्ष्यन्तायक्ष्ये ऽयक्ष्येथां युवां ॥ २८ ॥
अयक्ष्यध्वमेधिष्यावह्येधिष्याम ह्यरेवंयम् ।
लृटि ह्याङ्गविष्यतोति एधिष्यामह ईदृशम् ॥ २९ ॥
एवं विभावयिष्यन्ति बोभविष्यति रूपकं ।
घटयेत् पटयेत्तद्वत् पुत्रीयति च काम्यति ॥ ३० ॥

इत्याग्नेये महापुराणे व्याकरणे तिङ्सिद्धरूपं नाम
सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

# अथाष्टपञ्चाशदधिकत्रिशततमोऽध्यायः ।

कृत्सिद्धरूपम् ।

कुमार उवाच । कृतस्त्रिष्वपि विज्ञेया भावे कर्म्मणि कर्त्तरि ।

अज्ल्युट् क्तिन् घञा भावे युजकारत एव च । १ ॥

अचि धर्मस्य विनय उत्करः प्रकरस्तथा ।

देवो भद्रः श्रीकरश्च ल्युटि रूपन्तु शोभनम् ॥ २ ॥

क्तिनि वृद्धिस्तुतिमती घञि भावोऽथ युच्यपि ।

कारणा भावनेत्यादि अकारे च चिकित्सया ॥ ३ ॥

तथा-तव्यो ह्यनीयश्च कर्त्तव्यं करणीयकम ।

देयं ध्येयश्चैव यति ण्यति कार्य्यश्च कृत्यकाः ॥ ४ ॥

कर्त्तरि क्तादयो ज्ञेया भावे कर्म्मणि च क्वचित् ।

गतो ग्रामं गतो ग्राम आश्लिष्टश्च गुरुस्त्वया ॥ ५ ॥

शतृङ् शानचौ भवन् एधमानो भवन्त्यपि ।

वुण् तृचौ सर्व्वधातुभ्यो भावको भविता तथा ॥ ६ ॥

क्विवन्तश्च स्वयम्भूश्च भूते लिटः क्वसुः कान च ॥

बभूविवान् पेचिवांश्च पेचानः श्रद्धानकः ॥ ७ ॥

अणि स्युः कुम्भकाराद्या भूतेष्युणादयः स्मृताः ।

वायुः पायुश्च कारुः स्याद्वृत्तं छन्दमीरितं ॥ ८ ॥

इत्याग्नेये महापुराणे व्याकरणे कृत्सिद्धरूपं नामा-
ष्टपञ्चाशदधिकत्रिशततमोऽध्यायः ।

# अथोनषष्ट्यधिकत्रिशततमोऽध्यायः ।

---ooo---

## स्वर्गपातालादिवर्गाः ।

अग्निरुवाच । स्वर्गादिनामलिङ्गो यो हरिस्तं प्रवदामि ते ।
स्वःस्वर्गनाकत्रिदिवा द्योदिवौ द्वे त्रिपिष्टपं ॥ १ ॥
देवा वृन्दारका लेखा रुद्राद्या गणदेवताः ।
विद्याधरोऽप्सरोयक्षरक्षोगन्धर्व्वकिन्नराः ॥ २ ॥
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।
देवद्विषोऽसुरा दैत्याः सुगतः स्यात्तथागतः ॥ ३ ॥
ब्रह्मात्मभूः सुरज्येष्ठो विष्णुर्नारायणो हरिः ।
रेवतीशो हली रामः कामः पञ्चशरः स्मरः ॥ ४ ॥
लक्ष्मीः पद्मालया पद्मा सर्व्वः सर्व्वेश्वरः शिवः ।
कपर्द्दोऽस्य जटाजूटः पिनाकोऽजगवन्धनुः ॥ ५ ॥
प्रमथाः स्युः पारिषदा मृडानी चण्डिकाऽम्बिका ।
द्वैमातुरो गजास्यश्च सेनानीरग्निभूर्गुहः ॥ ६ ॥
आखण्डलः सुनासीरः सूत्रामाणो दिवस्पतिः ।
पुलोमजा शचीन्द्राणी देवी तस्य तु वल्लभा ॥ ७ ॥
स्यात् प्रासादो वैजयन्तो जयन्तः पाकशासनिः ।
ऐरावतेऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ८ ॥
ह्रादिनी वज्रमस्त्री स्यात् कुलिशम्भिदुरं पविः ।
व्योमयानं विमानोऽस्त्री पीयूषममृतं सुधा ॥ ८ ॥

स्यात् सुधर्म्मा देवसभा स्वर्गङ्गा सुरदीर्घिका ।
स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्व्वशीमुखाः ॥ १० ॥
हाहा हूहूश्च गन्धर्व्वा अग्निर्वह्निर्धनञ्जयः ।
जातवेदाः कृष्णवर्त्मा आश्रयाशश्च पावकः ॥ ११ ॥
हिरण्यरेताः सप्तार्चिः शुक्रश्चैवाशुशुक्षणिः ।
शुचिरप्पित्तमौर्व्वस्तु वाडवो वडवानलः ॥ १२ ॥
वह्नेर्द्वयोर्ज्वालकीलावर्च्चिर्हेतिः शिखा स्त्रियां ।
त्रिषु स्फुलिङ्गोऽग्निकणो धर्म्मराजः परेतराट् ॥ १३ ॥
कालोऽन्तको दण्डधरः श्राद्धदेवोऽथ राक्षसः ।
कौणपास्रपक्रव्यादा यातुधानश्च नैर्ऋतिः ॥ १४ ॥
प्रचेता वरुणः पाशी श्वसनः स्पर्शनोऽनिलः ।
सदागतिर्मातरिश्वा प्राणो मरुत् समीरणः ॥ १५ ॥
जवो रंहस्तरसी तु लघुक्षिप्रमरन्द्रुतम् ।
सत्वरं चपलं तूर्णमविलम्बितमाशु च ॥ १६ ॥
सततेऽनारताश्रान्तसन्ततावरतानिशं ।
नित्यानवरताजस्रमप्यथातिशयो भरः ॥ १७ ॥
अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ।
तीव्रैकान्तनितान्तानि गाढवाढदृढानि च ॥ १८ ॥
गुह्यकेशो यक्षराजो राजराजो धनाधिपः ।
स्यात् किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः ॥ १९ ॥
निधिर्ना शेवधिर्व्योम त्वभ्रं पुष्करमम्बरम् ।
द्योदिवौ चान्तरीक्षं खं काष्ठाशाककुभो दिशः ॥ २० ॥
अभ्यन्तरन्त्वन्तरालं चक्रवालन्तु मण्डलं ।

तडित्वान् वारिदो मेघस्तनयित्नुर्वलाहकः ॥ २१ ॥
कादम्बिनी मेघमाला स्तनितं गर्जितं तथा ।
शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभाः ॥ २२ ॥
तडित्सौदामिनी विद्युच्चञ्चला चपलाऽपि च ।
स्फूर्जथुर्व्वज्रनिर्घोषो वृष्टिघातस्त्ववग्रहः ॥ २३ ॥
धारा सम्पात आसारः शीकरोऽम्बुकणाः स्मृताः ।
वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनं ॥ २४ ॥
अन्तर्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणं ।
अपिधानतिरोधानपिधानच्छादनानि च ॥ २५ ॥
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ।
विधुः कुमुदबन्धुश्च बिम्बोऽस्त्री मण्डलं त्रिषु ॥ २६ ॥
कला तु षोडशो भागो भित्तं शकलखण्डके ।
चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ॥ २७ ॥
लक्षणं लक्ष्मकं चिह्नं शोभा कान्तिर्द्युतिश्छविः ।
सुषमा परमा शोभा तुषारस्तुहिनं हिमं ॥ २८ ॥
अवश्यायस्तु नीहारः प्रालेयः शिशिरो हिमः ।
नक्षत्रमृक्षं भन्तारा तारकाऽप्युडु वा स्त्रियां ॥ २९ ॥
गुरुर्जीव आङ्गिरस उशना भार्गवः कविः ।
विधुन्तुदस्तमो राहुर्लक्ष्मं राश्युदयः स्मृतः ॥ ३० ॥
सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।
हरिदश्वब्रध्नपूषद्युमणिर्म्मिहिरो रविः ॥ ३१ ॥
परिवेषस्तु परिधिरुपसूर्य्यकमण्डले ।
किरणोऽस्रमयूखांशुगभस्तिघृणिधृष्णयः ॥ ३२ ॥

भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियां ।
स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ॥ ३३ ॥
रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ।
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ॥ ३४ ॥
तिग्मं तीक्ष्णं खरं तद्वद्दिष्टोऽनेहा च कालकः ।
घस्रो दिनाहनी चैव सायंसन्ध्या पितृप्रसूः ॥ ३५ ॥
प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्यूषसी अपि ।
प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यमथ शर्व्वरी ॥ ३६ ॥
यामी तमी तमिस्रा च ज्योत्स्नी चन्द्रिकयान्विता ।
आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी ॥ ३७ ॥
अर्द्धरात्रनिशीथौ द्वौ प्रदोषो रजनीमुखं ।
स पर्व्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ॥ ३८ ॥
पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ।
कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥ ३९ ॥
अमावास्या त्वमावस्या दर्शः सूर्य्येन्दुसङ्गमः ।
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः ॥ ४० ॥
संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ।
कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम् ॥ ४१ ॥
स्याद्धर्म्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।
मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः ॥ ४२ ॥
स्यादानन्दथुरानन्दः शर्म्मशातसुखानि च ।
श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ ४३ ॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियां ।

दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्व्विधिः ॥ ४४ ॥
क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियां ।
हेतुर्ना कारणं वीजं निदानं त्वादिकारणम् ॥ ४५ ॥
चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसम्मनः ।
बुद्धिर्म्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ॥ ४६ ॥
प्रेक्षोपलब्धिश्चित्सम्वित्प्रतिपज्ज्ञप्तिचेतनाः ।
धीर्धारणावती मेधा सङ्कल्पः कर्म्म मानसं ॥ ४७ ॥
सङ्ख्या विचारणा चर्च्चा विचिकित्सा तु संशयः ।
अध्याहारस्तर्क ऊहः समौ निर्णयनिश्चयौ ॥ ४८ ॥
मिथ्यादृष्टिर्नास्तिकता भ्रान्तिर्म्मिथ्यामतिर्भ्रमः ।
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ४९ ॥
मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।
मुक्तिः कैवल्यनिर्व्वाणश्रेयोनिःश्रेयसामृतं ॥ ५० ॥
मोक्षोऽपवर्गोऽथाज्ञानमविद्याहम्मतिः स्त्रियां ।
विमर्द्दोत्थे परिमलो गन्धे जनमनोहरे ॥ ५१ ॥
आमोदः सोऽतिनिर्हारी सुरभिर्घ्राणतर्पणः ।
शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डराः ॥ ५२ ॥
अवदातः सितो गौरो वलक्षो धवलोऽर्ज्जुनः ।
हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ ५३ ॥
कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।
पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ॥ ५४ ॥
रोहितो लोहितो रक्तः शोणः कोकनदच्छविः ।
अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः ॥ ५५ ॥

श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते।
कड़ारः कपिलः पिङ्गपिशङ्गौकद्रुपिङ्गलौ॥ ५६॥
चित्रं किर्म्मीरकल्माषशवलैताश्च कर्ब्बुरे।
व्याहार उक्तिर्लपितमपभ्रंशोऽपशब्दकः॥ ५७॥
तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता।
इतिहासः पुरावृत्तं पुराणं पञ्चलक्षणं॥ ५८॥
आख्यायिकोपलब्धार्था प्रबन्धः कल्पना कथा।
समाहारः संग्रहस्तु प्रवह्लिका प्रहेलिका॥ ५९॥
समस्या तु समासार्था स्मृतिस्तु धर्म्मसंहिता।
आख्याह्वे चाभिधानञ्च वार्त्ता वृत्तान्त ईरितः॥ ६०॥
हूतिराकारणाह्वानमुपन्यासस्तु वाङ्मुखं।
विवादो व्यवहारः स्यात् प्रतिवाक्योत्तरे समे॥ ६१॥
उपोद्घात उदाहारो ह्यथ मिथ्याभिसंशनम्।
अभिशापो यशः कीर्त्तिः प्रश्नः पृच्छानुयोगकः॥ ६२॥
आम्रेडितं द्विस्त्रिरुक्तं कुत्सानिन्दे च गर्हणे।
स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः॥ ६३॥
अनुलापो मुहुर्भाषा विलापः परिदेवनं।
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः॥ ६४॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः।
उषती वागकल्याणी मङ्गलं हृदयङ्गमं॥ ६५॥
अत्यर्थमधुरं सान्त्वमवद्धं स्यादनर्थकं।
निष्ठुराश्लीलपरुषं ग्राम्यं वै सुनृतं प्रिये॥ ६६॥
सत्यं तथ्यमृतं सम्यङ्नादनिस्वाननिस्वनाः।

आरवारावसंरावविरावा अथ मर्म्मरः ॥ ६७ ॥
स्वनिते वस्त्रपर्णानां भूषणानान्तु शिञ्जितं ।
वीणायाः निक्वणः क्वाणः तिरश्चां वाशितं रुतं ॥ ६८ ॥
कोलाहलः कलकलो गीतं गानमिमे समे ।
स्त्री प्रतिश्रुत् प्रतिध्वाने तन्त्रीकण्ठान्निसादकः ॥ ६९ ॥
काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ।
कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ॥ ७० ॥
समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ।
विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ७१ ॥
ततं वीणादिकं वाद्यमानद्धं मुरजादिकं ।
वंश्यादिकन्तु शुषिरं कांस्यतालादिकं घनं ॥ ७२ ॥
चतुर्व्विधमिदं वाद्यं वादित्रातोद्यनामकं ।
मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥ ७३ ॥
स्याद्यशःपटहो ढक्का भेर्य्यामानकदुन्दुभिः ।
आनकः पटहो भेदा झर्झरीडिण्डिमादयः ॥ ७४ ॥
मर्द्दलः पणवस्तुल्यौ क्रियामानन्तु तालकः ।
लयः साम्यं ताण्डवन्तु नाट्यं लास्यञ्च नर्त्तनं ॥ ७५ ॥
तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ।
राजा भट्टारको देवः साभिषिका च देव्यपि ॥ ७६ ॥
शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
वीभत्सरौद्रे च रसाः शृङ्गारः शुचिरुज्ज्वलः ॥ ७७ ॥
उत्साहवर्द्धनो वीरः कारुण्यं करुणा घृणा ।
कृपा दया चानुकम्पाऽप्यनुक्रोशोऽप्यथो हसः ॥ ७८ ॥

हासो हास्यञ्च बीभत्सं विकृतं त्रिष्विदं द्वयं ।
विस्मयोऽद्भुतमाश्चर्य्यं चित्रमप्यथ भैरवं ॥ ६६ ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकं ।
भयङ्करं प्रतिभयं रौद्रन्तूग्रममी त्रिषु ॥ ६७ ॥
चतुर्द्दश दरत्रासौ भीतिर्भीः साध्वसम्भयं ।
विकारो मानसो भावोऽनुभावो भावबोधनः ॥ ६८ ॥
गर्व्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः ।
अनादरः परिभवः परिभावस्तिरस्क्रिया ॥ ६९ ॥
व्रीडा लज्जा त्रपा ह्रीः स्यादभिध्यानं धने स्पृहा ।
कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलं ॥ ७० ॥
स्त्रीणां विलासविव्वोकविभ्रमा ललितन्तथा ।
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ॥ ७१ ॥
द्रवकेलिपरीहासाः क्रीड़ा लीला च कूर्द्दनं ।
स्यादाच्छुरितकं हासः सोत्प्रासः समनाक्स्मितं ॥ ७२ ॥
अधोभुवनपातालं च्छिद्रं श्वभ्रं वपा शुषिः ।
गर्त्तावटौ भुवि श्वभ्रे तमिस्त्रन्तिमिरं तमः ॥ ७३ ॥
सर्पः पृदाकुर्भुजगो दन्दशूको विलेशयः ।
विषं क्ष्वेडश्च गरलं निरयो दुर्गतिः स्त्रियां ॥ ७४ ॥
पयः कीलालममृतमुदकं भुवनं वनं ।
भङ्गस्तरङ्ग ऊर्म्मिर्व्वा कल्लोलोल्लोलकौ च तौ ॥ ७५ ॥
पृषन्तिविन्दुपृषताः कूलं रोधश्च तीरकं ।
तोयोत्थितं तत् पुलिनं जम्बालं पङ्ककर्द्दमौ ॥ ७६ ॥
जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ।

आतरस्तरपण्यं स्याद्द्रोणी काष्ठाम्बुवाहिनी ॥ ७७ ॥
कलुषश्चाविलोऽच्छस्तु प्रसन्नोऽथ गभीरकं ।
अगाधं दासकैवर्त्तौ शम्बूका जलशुक्तयः ॥ ७८ ॥
सौगन्धिकन्तु कह्लारं नीलमिन्दीवरं कजं ।
स्यादुत्पलं कुवलयं सिते कुमुदकैरवे ॥ ७९ ॥
शालूकमेषां कन्दः स्यात् पद्मं तामरसङ्कजं ।
नीलोत्पलं कुवलयं रक्तं कोकनदं स्मृतम् ॥ ८० ॥
करहाटः शिफा कन्दं किञ्जल्कः केशरोऽस्त्रियां ।
खनिः स्त्रियामाकरः स्यात् पादाः प्रत्यन्तपर्व्वताः ॥८१॥
उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका ।
स्वर्गपातालवर्गाद्या उक्ता नानार्थकान् शृणु ॥ ८२ ॥

इत्याग्नेये महापुराणे स्वर्गपातालादिवर्गा नामोनषष्ट्य-
धिकत्रिशततमोऽध्यायः ।

---

## अथ षष्ट्यधिकत्रिशततमोऽध्यायः ।

—000—

### अव्ययवर्गाः ।

अग्निरुवाच । आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ।
आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात् कोपपीडयोः ॥१॥
पापकुत्सेषदर्थे कु धिग्जुगुप्सननिन्दयोः ।
चान्वाचयसमाहारेतरेतरसमुच्चये ॥ २ ॥

स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति ।
स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे ॥ ३ ॥
सकृत्सहैकवारे स्यादाराद्दूरसमीपयोः ।
प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः ॥ ४ ॥
पुनःसहार्थयोः शश्वत् साक्षात् प्रत्यक्षतुल्ययोः ।
खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत ॥ ५ ॥
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ।
प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ॥ ६ ॥
इति हेतौ प्रकरणे प्रकाशादिसमाप्तिषु ।
प्राच्यां पुरस्तात् प्रथमे पुरार्थेऽग्रत इत्यपि ॥ ७ ॥
यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वऽथोथ च ॥ ८ ॥
वृथा निरर्थकाविध्योर्नानाऽनेकोभयार्थयोः ।
नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ॥ ९ ॥
प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु ।
गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि ॥ १० ॥
उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ।
अमा सह समीपे च कं वारिणि च मूर्धनि ॥ ११ ॥
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ।
तूष्णीमर्थे सुखे जोषं किम्पृच्छायां जुगुप्सने ॥ १२ ॥
नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने ।
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ॥ १३ ॥

ननु वितर्के परिप्रश्ने समयाऽन्तिकमध्ययोः ।
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ॥ १४ ॥
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ।
उरर्युरी चोररी च विस्तारेऽङ्गीकृते त्रयम् ॥ १५ ॥
स्वर्गे परे च लोके स्वर्वार्त्तासम्भावयोः किल ।
निषेधवाक्यालङ्कारे जिज्ञासावसरे(१) खलु ॥ १६ ॥
समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः ।
नामप्रकाशयोः प्रादुर्मिथोऽन्योन्यं रहस्यपि ॥ १७ ॥
तिरोऽन्तर्द्धौ तिर्यगर्थे हा विषादशुगर्त्तिषु ।
अहहेत्यद्भुते खेदे हि हेतावथधारणे ॥ १८ ॥
चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।
मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः ॥ १९ ॥
स्राग्झटित्यञ्जसाह्नाय सपदि द्राङ्मङ्क्षु च द्रुते ।
बलवत् सुष्ठु किमुत विकल्पे किं किमूत च ॥ २० ॥
तु हि च स्म ह वै पादपूरणे पूजनेऽप्यति ।
दिवाऽह्नीत्यथ दोषा च नक्तञ्च रजनाविति ॥ २१ ॥
तिर्यगर्थे साचि तिरोऽप्यथ सम्बोधनार्थकाः ।
स्युः प्याट्पाडङ्ग हे है भोः समया निकषा हिरुक् ॥२२॥
अतर्किते तु सहसा स्यात् पुरः पुरतोऽग्रतः ।
स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ॥ २३ ॥
किञ्चिदीषन्मनागल्पे प्रेत्याऽमुत्र भवान्तरे ।

---

१ जिज्ञासानुनये इति ञ० ।

यथा तथा चैव साम्ये अहो हो इति विस्मये ॥ २४ ॥
मौने तु तूष्णीं तूष्णीकं सद्यः सपदि तत्क्षणे ।
दिष्ट्या समुपजोषमित्यानन्देऽथान्तरेऽन्तरा ॥ २५ ॥
अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ।
युक्ते द्वे साम्प्रतं स्थानेऽभीक्ष्णं शश्वदनारते ॥ २६ ॥
अभावे नह्यनो नापि मास्म मालञ्च वारणे ।
पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाऽञ्जसा द्वयम् ॥ २७ ॥
प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ।
समन्ततस्तु परितः सर्वतो विष्वगित्यपि ॥ २८ ॥
अकामानुमतौ काममसूयोपगमेऽस्तु च ।
ननु च स्याद्विरोधोक्तौ कच्चित् कामप्रवेदने ॥ २९ ॥
निःषमं दुःषमं गर्ह्ये यथास्वन्तु यथायथं ।
मृषा मिथ्या च वितथे यथार्थन्तु यथातथं ॥ ३० ॥
स्युरेवन्तु पुनर्वैवेत्यवधारणवाचकाः ।
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयं ॥ ३१ ॥
संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ।
अल्पे नीचैर्महत्युच्चैः प्रायोभूम्न्यद्रुते शनैः ॥ ३२ ॥
सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ।
अस्ति सत्त्वे रुषोक्तावूमुं प्रश्नेऽनुनये त्वयि ॥ ३३ ॥
हुं तर्के स्यादुषा रात्रेरवसाने नमो नतौ ।
पुनरर्थेऽङ्गनिन्दायां दुष्ठु सुष्ठु प्रशंसने ॥ ३४ ॥
सायं साये प्रगे प्रातः प्रभाते निकषाऽन्तिके ।
परुत्परार्य्येषमोऽब्दे पूर्वे पूर्वतरे यति ॥ ३५ ॥

अथात्वाङ्गाऽथ पूर्वेद्युरित्यादौ पूर्वोत्तरा परात् ।
तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः ॥ २६ ॥
उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ।
ह्यो गतेऽनागतेऽह्नि श्वः परश्वः श्वःपरेऽहनि ॥ २७ ॥
तदा तदानीं युगपदेकदा सर्वदा सदा ।
एतर्हि सम्प्रतीदानीमधुना साम्प्रतन्तथा ॥ २८ ॥

इत्याग्नेये महापुराणे अव्ययवर्गो नाम षष्ट्यधिक-
त्रिशततमोऽध्यायः ।

---

## अथैकषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

### नानार्थवर्गः ।

अग्निरुवाच । आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ।
पद्ये यशसि च श्लोकः शरे खड्गे च सायकः ॥ १ ॥
आनकः पटहो भेरी कलङ्कोऽङ्कापवादयोः ।
मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः ॥ २ ॥
स्यात् पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ।
महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ॥ ३ ॥
शालावृको कपिक्रोष्टौ मानं स्यात्मितिसाधनं ।
सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ॥ ४ ॥
योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु ।

भोगः सुखे स्त्र्यादिभृतावह्नो यत्नशिराकरौ ॥ ५ ॥
काके भगण्डौ करटौ दुर्षर्मा शिपिविष्टकः ।
रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाऽशुभे ॥ ६ ॥
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ।
निष्ठानिष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि ॥ ७ ॥
भूगोवाचस्त्विड़ा इलाः प्रगाढ़ं भृशकृच्छ्रयोः ।
भृशप्रतिज्ञयोर्वाढ़ं शक्तस्थूलौ दृढ़ौ त्रिषु ॥ ८ ॥
विन्यस्तसंहतौ व्यूढ़ौ कृष्णो व्यासेऽर्जुने हरौ ।
पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ ९ ॥
मौर्व्यां द्रव्याश्रिते सत्वशुक्लसन्ध्यादिके गुणः ।
श्रेष्ठेऽधिपे ग्रामणीः स्यात् जुगुप्साकरुणे घृणे ॥ १० ॥
तृष्णा स्पृहापिपासे द्वे विपणिः स्याद्वणिक्पथे ।
विषाभिमरलोहेषु तीक्ष्णं क्लीवे खरे त्रिषु ॥ ११ ॥
प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु ।
करणं क्षेत्रगात्रादावीरिणं शून्यमूषरं ॥ १२ ॥
यन्ता हस्तिपके सूते वह्निज्वाला च हेतयः ।
श्रुतं शास्त्रावधृतयोर्युगपर्य्याप्तयोः कृतं ॥ १३ ॥
ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे ।
विविक्तौ पूतविजनौ मूर्च्छितौ मूढ़सोच्छ्रयौ ॥ १४ ॥
अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।
निदानागमयोस्तीर्थमृषिजुष्टजले गुरौ ॥ १५ ॥
प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियां ।
स्त्री सम्विज्ज्ञानसम्भाषाक्रियाकाराजिनामसु ॥ १६ ॥

धर्म्मे रहस्युपनिषत् स्यादृतौ वत्सरे शरत् ।
पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ १७ ॥
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ।
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ॥ १८ ॥
विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे ।
वधूर्जाया स्नुषा स्त्री च सुधालेपोऽमृतं स्नुही ॥ १९ ॥
स्पृहा सम्प्रत्ययः श्रद्धा पण्डितम्मन्यगर्व्वितौ ।
ब्रह्मबन्धुरधिक्षेपे भानू रश्मिदिवाकरौ ॥ २० ॥
ग्रावाणौ शैलपाषाणौ मूर्खनीचौ पृथग्जनौ ।
तरुशैलौ शिखरिणौ तनुस्त्वग्देहयोरपि ॥ २१ ॥
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च ।
उत्थानं पौरुषे तन्त्रे व्युत्थानं प्रतिरोधने ॥ २२ ॥
निर्य्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ।
व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥ २३ ॥
मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाटा च कामजो दशको गणः ॥ २४ ॥
पैशून्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डश्चैव पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ २५ ॥
अकर्म्मगुह्ये कौपीनं मैथुनं सङ्गतौ रतौ ।
प्रधानं परमार्थो धीः प्रज्ञानं बुद्धिचिह्नयोः ॥ २६ ॥
क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ।
आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥ २७ ॥
रत्नं स्वजातिश्रेष्ठेऽपि लक्ष्म चिह्नप्रधानयोः ।

कलापो भूषणे वर्हे तूणीरे संहतेऽपि च ॥ २८ ॥
तल्पं शय्याट्टदारेषु डिम्भौ तु शिशुवालिशौ।
स्तम्भौ स्थूणाजडीभावौ सभ्ये संसदि वै सभा ॥ २९ ॥
किरणप्रग्रहौ रश्मी धर्माः पुण्ययमादयः।
ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ॥ ३० ॥
प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु।
समयाः शपथाचारकालसिद्धान्तसंविदः ॥ ३१ ॥
अत्ययोऽतिक्रमे कृच्छ्रे सत्यं शपथतथ्ययोः।
वीर्य्यं बलप्रभावौ च रूप्यं रूपे प्रशस्तके ॥ ३२॥
दुरोदरो द्यूतकारे पणे द्यूते दुरोदरं।
महारण्ये दुर्गपथे कान्तारः पुन्नपुंसकं ॥ ३३ ॥
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहादिके हरिः।
दरोऽस्त्रियां भये श्वभ्रे जठरः कठिनेऽपि च ॥ ३४ ॥
उदारो दातृमहतोरितरस्त्वन्यनीचयोः।
चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ॥ २५ ॥
बलिः करोपहारादौ सैन्यस्थैर्य्यादिके बलं।
स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च ॥ ३६ ॥
शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः।
द्यूताक्षे सारिफलकेऽप्याकर्षोऽथाऽक्षमिन्द्रिये ॥ ३७ ॥
ना द्यूताङ्गे च कर्षे च व्यवहारे कलिद्रुमे।
उष्णीषः स्यात् किरीटादौ कर्षूः कुल्याभिधायिनी ॥३८॥
प्रत्यक्षेऽधिकृतेऽध्यक्षः सूर्य्यवह्नी विभावसू।
शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः ॥ ३९ ॥

तेजःपुरीषयोर्वर्च्च आगः पापापराधयोः ।
छन्दः पद्येऽभिलाषे च साधीयान् साधुवाढ़योः ।
व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यग्नीन्दर्कास्तमोनुदः ॥ ४० ॥

इत्याग्नेये महापुराणे नानार्थवर्गो नामैक-
षष्ट्यधिकत्रिशततमोऽध्यायः ।

---

## अथ द्विषष्ट्यधिकत्रिशततमोऽध्यायः ।

———०:०———

### भूमिवनौषध्यादिवर्गाः ।

अग्निरुवाच । वक्ष्ये भूपुराद्रिवनौषधिसिंहादिवर्गकान् ।
भूरनन्ता क्षमा धात्री क्ष्माप्याकुः स्याद्धरित्रपि ॥ १ ॥
मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।
जगत्त्रिपिष्टपं लोकं भुवनं जगती समा ॥ २ ॥
अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।
सरणिः पद्धतिः पद्या वर्त्तन्येकपदीति च ॥ ३ ॥
पूः स्त्री पुरीनगर्य्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥ ४ ॥
तच्छाखानगरं वेशो वेश्याजनसमाश्रयः ।
आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ ५ ॥
रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियां ।
प्राकारो वरणः शालः प्राचीरं प्रान्ततो वृतिः ॥ ६ ॥

भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसं।
वासः कूटो द्वयोः शाला सभा सञ्जवनन्त्विदम् ॥ ७ ॥
चतुःशालं मुनीनान्तु पर्णशालोटजोऽस्त्रियां।
चैत्यमायतनन्तुल्ये वाजिशाला तु मन्दुरा ॥ ८ ॥
हर्म्यादि धनिनां वासः प्रासादो देवभूभुजां।
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ॥ ९ ॥
कपोतपालिकायान्तु विटङ्कं पुं नपुंसकं।
कवाटमररन्तुल्ये निःश्रेणिस्त्वधिरोहिणी ॥ १० ॥
सम्मार्जनी शोधनी स्यात् सङ्करोऽवकरस्तथा।
अद्रिगोत्रगिरिग्रावा गहनं काननं वनं ॥ ११ ॥
आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।
स्यादेतदेव प्रमदवनमन्तःपुरोचितं ॥ १२ ॥
वीथ्यालिरावलिः पङ्क्तिश्रेणीलेखास्तु राजयः।
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ॥ १३ ॥
ओषध्यः फलपाकान्ताः पलाशी द्रुद्रुमागमाः।
स्थाणु वा ना ध्रुवः शङ्कुः प्रफुल्लोत्फुल्लसंस्फुटाः ॥ १४ ॥
पलाशं छदनं पर्णमिध्ममेधः समित् स्त्रियां।
बोधिद्रुमश्चलदलो दधित्थग्राहिमन्मथाः ॥ १५ ॥
तस्मिन् दधिफलः पुष्पफलदन्तशठावपि।
उडुम्बरे हेमदुग्धः कोविदारे द्विपत्रकः ॥ १६ ॥
सप्तपर्णो विशालत्वक् कृतमालं सुवर्णकः।
आरेवतव्याधिघातसम्पाकचतुरङ्गुलाः ॥ १७ ॥
स्याज्जम्बीरे दन्तशठो वरुणे तिक्तशाकः।

पुन्नागे पुरुषस्तुङ्गः केशरो देववल्लभः ॥ १८ ॥
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।
वञ्जुलश्चित्रकश्चाथ द्वौ पीतनकपीतनौ ॥ १९ ॥
आम्रातके मधूके तु गुड़पुष्पमधुद्रुमौ ।
पीलौ गुड़फलः स्रंसी नादेयी चाम्बुवेतसः ॥ २० ॥
शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीरमोचकाः ।
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेणिलः समौ ॥ २१ ॥
गालवः शावरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।
शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ २२ ॥
वैकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ।
तिन्दुकः स्फूर्जकः कालो नादेयी भुमिजम्बुकः ॥ २३ ॥
काकतिन्दौ पीलुकः स्यात् पाटलिर्मोक्षमुष्ककौ ।
क्रमुकः पट्टिकाख्यः स्यात्तुम्बी कैटर्य्यकट्फले ॥ २४ ॥
वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ।
सर्जकासनजीवाश्च पीतसालेऽथ मालके ॥ २५ ॥
सर्जाश्वकर्णौ वीरेन्द्रौ इन्द्रद्रुः ककुभोऽर्जुनः ।
इङ्गुदी तापसतरुर्मोचा शाल्मलिरेव च ॥ २६ ॥
चिरविल्वो नक्तमालः करजश्च करञ्जके ।
प्रकीर्य्यः पूतिकरजो मर्कटाङ्गारवल्लरी ॥ २७ ॥
रोही रोहितकः प्लीहशत्रुर्दाड़िमपुष्पकः ।
गायत्री बालतनयः खदिरो दन्तधावनः ॥ २८ ॥
अरिमेदो विट्खदिरे कदरः खदिरे सिते ।
पञ्चाङ्गुलो वर्द्धमानश्चञ्चुर्गन्धर्वहस्तकः ॥ २९ ॥

पिण्डीतको मरुवकः पीतदारु च दारु च।
देवदारु पूतिकाष्ठं श्यामा तु महिलाह्वया॥ ३०॥
लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली।
मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः॥ ३१॥
श्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः।
पीतद्रुः सरलश्चाथ निचुलोऽम्बुज इज्जलः॥ ३२॥
काकोडुम्बरिका फल्गुररिष्टः पिचुमर्दकः।
सर्व्वतोभद्रको निम्बे शिरीषस्तु कपीतनः॥ ३३॥
बकुलो वञ्जुलः प्रोक्तः पिच्छिलाऽगुरुशिंशपाः।
जया जयन्ती तर्कारी कणिका गणिकारिका॥ ३४॥
श्रीपर्णमग्निमन्थः स्याद्वत्सको गिरिमल्लिका।
कालस्कन्धस्तमालः स्यात् तण्डुलीयोऽल्पमारिषः॥ ३५॥
सिन्धुवारस्तु निर्गुण्डी सैवास्फोता वनोद्भवा।
गणिका यूथिकाऽम्बष्ठा सप्तला नवमालिका॥ ३६॥
अतिमुक्तः पुण्ड्रकः स्यात्कुमारी तरणिः सहा।
तत्र शोणे कुरुवकस्तत्र पीते कुरण्टकः॥ ३७॥
नीला झिण्टी द्वयोर्बाणा झिण्टी सैरीयकस्तथा।
तस्मिन्रक्ते कुरुवकः पीते सहचरी द्वयोः॥ ३८॥
धुस्तूरः कितवो धूर्त्तो रुचको मातुलङ्गके।
समीरणो मरुवकः प्रस्थपुष्पः फणिज्झकः॥ ३९॥
कुठेरकस्तु पर्णासेऽथास्फोता वसुकार्कके।
शिवमल्ली पाशुपतो वृन्दा वृक्षादनी तथा॥ ४०॥
जीवन्तिका वृक्षरुहा गुडूची तन्त्रिकाऽमृता।

सोमवल्ली मधुपर्णी मूर्वा तु मोरटी तथा ॥ ४१ ॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।
पाठाऽम्बष्ठा विद्धकर्णी प्राचीना वनतिक्तिका ॥ ४२ ॥
कटुः कटुम्भरा चाथ चक्राङ्गी शकुलादनी ।
आत्मगुप्ता प्रावृषायी कपिकच्छुश्च मर्कटी ॥ ४३ ॥
अपामार्गः शैखरिकः प्रत्यक्पर्णी मयूरकः ।
फञ्जिका ब्राह्मणी भार्गी द्रवन्ती शम्बरी वृषा ॥ ४४ ॥
मण्डूकपर्णी भण्डीरी समङ्गा कालमेषिका ।
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ॥ ४५ ॥
पृश्निपर्णी पृथक्पर्णी कलशिर्धावनिर्गुहा ।
निदिग्धिका स्पृशी व्याघ्री क्षुद्रा दुस्पर्शया सह ॥ ४६ ॥
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ।
कालमेषी कृष्णफला वाकुची पूतिफल्यऽपि ॥ ४७ ॥
कणोषणोपकुल्या स्याच्छ्रेयसी गजपिप्पली ।
चव्यन्तु चविका काकचिञ्ची गुञ्जे तु कृष्णला ॥ ४८ ॥
विश्वा विषा प्रतिविषा वनशृङ्गाटगोक्षुरौ ।
नारायणी शतमूली कालेयकहरिद्रवः ॥ ४९ ॥
दार्वी पचम्पचा दारु शुक्ला हैमवती वचा ।
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ ५० ॥
आस्फोता गिरिकर्णी स्यात् सिंहास्यो वासको वृषः ।
मिशी मधुरिकाऽच्छत्रा कोकिलाक्षेक्षुरक्षुरा ॥ ५१ ॥
विडङ्गोऽस्त्री कृमिघ्नः स्यात् वज्रद्रुस्नुक्स्नुही सुधा ।
मृद्वीका गोस्तनी द्राक्षा बला वाट्यालकस्तथा ॥ ५२ ॥

काला मसूरविदला त्रिपुटा त्रिवृता त्रिवृत् ।
मधुकं क्लीतकं यष्टिमधुका मधुयष्टिका ॥ ५३ ॥
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च या सिता ।
गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ॥ ५४ ॥
मोचा रम्भा च कदली भण्टाकी दुष्प्रधर्षिणी ।
स्थिरा ध्रुवा सालपर्णी शृङ्गी तु ऋषभो वृषः ॥ ५५ ॥
गाङ्गेरुकी नागबला मुषली तालमूलिका ।
ज्योत्स्नी पटोलिका जाली अजशृङ्गी विषाणिका ॥ ५६ ॥
स्याल्लाङ्गलिक्यग्निशिखा ताम्बूली नागवल्ल्यपि ।
हरेणू रेणुका कौन्ती ह्रीवेरो दिव्यनागरं ॥ ५७ ॥
कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ।
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ॥ ५८ ॥
ग्रन्थिपर्णं शुकं बर्हि वला तु त्रिपुटा त्रुटिः ।
शिवा तामलकी चाथ हनुर्हट्टविलासिनी ॥ ५९ ॥
कुटं नटं दशपुरं वानेयं परिपेलवम् ।
तपस्विनी जटामांसी पृक्का देवी लता लघूः ॥ ६० ॥
कर्चुरको द्राविड़को गन्धमूली शठी स्मृता ।
स्यादृक्षगन्धा छगलान्त्री वेगी वृद्धदारकः ॥ ६१ ॥
तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।
चाङ्गेरी चुक्रिकाम्बष्ठा स्वर्णक्षीरी हिमावती ॥ ६२ ॥
सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।
जीवन्ती जीवनी जीवा भूमिनिम्बः किरातकः ॥ ६३ ॥
कूर्चशीर्षो मधुकरश्चन्द्रः कपिष्ठकस्तथा ।

दद्रुघ्नः स्यादेडगजो वर्षाभूः शोथहारिणी ॥ ६४ ॥
कुनन्दती निकुम्भस्ता(१) यमानी वार्षिका तथा ।
लशुनङ्गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ ६५ ॥
वाराही वदरा गृष्टिः काकमाची तु वायसी ।
शतपुष्पा सितच्छत्रा ऽतिच्छत्रा मधुरा मिसिः ॥ ६६ ॥
अवाक्पुष्पी कारवी च सरणा तु प्रसारणी ।
कटम्भरा भद्रवला कर्च्चूरश्च शटी स्मृता ॥ ६७ ॥
पटोलः कुलकस्तिक्तः कारवेल्लः कटिल्लकः ।
कुष्माण्डकस्तु कर्कारुरिर्वारुः कर्कटी स्त्रियौ ॥ ६८ ॥
इक्ष्वाकुः कटुतुम्बी स्याद्विशाला त्विन्द्रवारुणी ।
अर्शोघ्नः शूरणः कन्दो मुस्तकः कुरुविन्दकः ॥ ६९ ॥
वंशे त्वक्सारकर्म्मारवेणुमस्करतेजनाः ।
छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ॥ ७० ॥
तृणराजाह्वयस्तालो घोण्टा क्रमुकपूगकौ ।
शार्दूलद्वीपिनौ व्याघ्रे हर्य्यक्षः केशरी हरिः ॥ ७१ ॥
कोलः पोत्री वराहः स्यात् कोक ईहामृगो वृकः ।
लूतोर्णनाभौ तु समौ तन्तुवायश्च मर्कटे ॥ ७२ ॥
वृश्चिकः शूककीटः स्यात्सारङ्गस्तोककौ समौ ।
कृकवाकुस्ताम्रचूडः पिकः कोकिल इत्यपि ॥ ७३ ॥
काके तु करटारिष्टौ वकः कह्व उदाहृतः ।
कोकश्चक्रश्चक्रवाको कादम्बः कलहंसकः ॥ ७४ ॥
पतङ्गिका पुत्तिका स्यात्सरघा मधुमक्षिका ।

१ पकुम्भदन्ती मिदं ह ति ख० ।

द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमराऽलयः ॥ ७५ ॥
केकी शिखीस्य वाक्केका शकुन्तिशकुनिद्विजाः ।
स्त्री पक्षतिः पक्षमूलञ्चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ७६ ॥
गतिरुड्डीनसण्डीनौ कुलायो नीड़मस्त्रियां ।
पेशी कोषो द्विहीनेऽण्डं पृथुकः शावकः शिशुः ॥ ७७ ॥
पोतः पाकोऽर्भको डिम्भः सन्दोहव्यूहको गणः ।
स्तोमौघनिकरव्राता निकुरम्बं कदम्बकं ।
सङ्घातसञ्चयौ वृन्दं पुञ्जराशी तु कूटकं ॥ ७८ ॥

इत्याग्नेये महापुराणे भूमिवनौषध्यादिवर्गा नाम द्विषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

## अथ त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ।

———000———

### नृब्रह्मक्षत्रविट्शूद्रवर्गाः ।

अग्निरुवाच । नृब्रह्मक्षत्रविट्शूद्रवर्गान्वक्ष्येऽथ नामतः ।
नरः पञ्चजना मर्त्या वद्र्योपाऽबला वधूः ॥ १ ॥
कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका ।
कुलटा पुंश्चल्यसती नग्निका स्त्री च कोटवी ॥ २ ॥
कात्यायन्यर्धवृद्धा या सैरिन्ध्री परवेश्मगा ।
असिक्नी स्यादवृद्धा या मलिनी तु रजस्वला ॥ ३ ॥
वारस्त्री गणिका वेश्या भ्रातृजायास्तु यातरः ।
ननान्दा तु स्वसा पत्युः सपिण्डास्तु सनाभयः ॥ ४ ॥

समानोदर्य्यसोदर्य्यसगर्भसहजाः समाः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ५ ॥
दम्पती जम्पती भार्य्यापती जायापती च तौ ।
गर्भाशयो जरायुः स्यादुल्बञ्च कललोऽस्त्रियां ॥ ६ ॥
गर्भो भ्रूण इमौ तुल्यौ क्लीवं षण्ढो नपुंसकम् ।
स्यादुत्तानशया डिम्भा बालो माणवकः स्मृतः ॥ ७ ॥
पिचिण्डिलो वृहत्कुक्षिरवभ्रटो नतनासिके ।
विकलाङ्गस्तु पोगण्ड आरोग्यं स्यादनामयम् ॥ ८ ॥
स्यादेडे वधिरः कुब्जे गडुलः कुकरे कुनिः ।
क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ॥ ९ ॥
स्त्री क्षुत्क्षुतं क्षयं पुंसि कासस्तु क्षवथुः पुमान् ।
शोथस्तु श्वयथुः शोफः पादस्फोटो विपादिका ॥ १० ॥
किलासं सिध्मकच्छ्वान्तु पाम पामा विचर्च्चिका ।
कोठो मण्डलकं कुष्ठं श्वित्रे दुर्नामकार्शसी ॥ ११ ॥
अनाहस्तु निबन्धः स्याद्ग्रहणी रुक्प्रवाहिका ।
वीजवीर्य्येन्द्रियं शुक्रं पललं क्रव्यमामिषं ॥ १२ ॥
वुक्काऽग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ।
पश्चाद्ग्रीवा शिरा मन्या नाडी तु धमनिः शिरा ॥१३॥
तिलकं क्लोम मस्तिष्कं दूषिका नेत्रयोर्मलम् ।
अन्त्रं पुरी तद्गुल्मस्तु प्लीहा पुंस्यऽथ वस्नसा ॥ १४ ॥
स्नायुः स्त्रियां कालखण्डयकृती तु ऽसमे इमे ।
स्यात् कर्पूरः कपालोऽस्त्री कीकसकुल्यमस्थि च ॥ १५ ॥
स्याच्छरीरास्थ्नि कङ्कालः पृष्ठास्थ्नि तु कशेरुका ।

शिरोऽस्थनि करोटि: स्त्री पार्श्वास्थनि तु पर्शुका ॥१६॥
अङ्गं प्रतीकोऽवयवः शरीरं वर्ष्म विग्रहः ।
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ॥ १७ ॥
पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ।
कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे ॥ १८ ॥
स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ।
भगं योनिर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी ॥ १९ ॥
पिचिण्डकुक्षी जठरोदरं तुन्दं कुचौ स्तनौ ।
चूचुकन्तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ २० ॥
स्कन्धो भुजशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी ।
पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ॥ २१ ॥
प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ।
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ॥ २२ ॥
पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ।
बद्धमुष्टिकरो रत्निररत्निः स कनिष्ठवान् ॥ २३ ॥
कम्बुग्रीवा त्रिरेखा साऽवटुर्घाटा कृकाटिका ।
अधः स्याच्चिबुकञ्चोष्ठादय गण्डौ गलो हनुः ॥ २४ ॥
अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने ।
चिकुरः कुन्तलो बालः प्रतिकर्म प्रसाधनम् ॥ २५ ॥
आकल्पवेशौ नेपथ्यं प्रत्यक्षं खेलयोगजम् ।
चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ २६ ॥
कर्णिका तालपत्रं स्यात्लम्बनं स्याल्ललन्तिका ।
मञ्जीरो नूपुरं पादे किङ्किणी क्षुद्रघण्टिका ॥ २७ ॥

दैर्घ्यमायाम आरोहः परिणाहो विशालता ।
पटच्चरं जीर्णवस्त्रं संव्यानञ्चोत्तरीयकम् ॥ २८ ॥
रचना स्यात् परिस्पन्द आभोगः परिपूर्णता ।
समुद्गकः सम्पुटकः प्रतिग्राहः पतद्ग्रहः ॥ २९ ॥

इत्याग्नेये महापुराणे नृवर्गो नाम त्रिषष्ट्यधिक-
त्रिशततमोऽध्यायः ।

---

## अथ चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

### ब्रह्मवर्गः ।

अग्निरुवाच । वंशोऽन्ववायो गोत्रं स्यात् कुलान्यभिजनान्वयौ ।
मन्त्रव्याख्याकृदाचार्य्य आदेष्टा त्वध्वरे व्रती ॥ १ ॥
यष्टा च यजमानः स्यात् प्रात्वारम्भ उपक्रमः ।
सतीर्थ्याश्चैकगुरवः सभ्याः सामाजिकास्तथा ॥ २ ॥
सभासदः सभास्तारा ऋत्विजो याजकाश्च ते ।
अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ॥ ३ ॥
चषालो यूपकटकः समे स्थण्डिलचत्वरे ।
आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ॥ ४ ॥
पृषदाज्यं सदध्याज्ये परमान्नन्तु पायसम् ।
उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ ५ ॥
परम्पराकं शमनं प्रोक्षणञ्च वधार्थकम् ।

पूजा नमस्याऽपचितिः सपर्य्यार्च्चार्हणाः समाः ॥ ६ ॥
वरिवस्या तु शुश्रूषा परिचर्य्याप्युपासनम् ।
नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥ ७ ॥
मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ।
कल्पे विधिक्रमौ ज्ञेयौ विवेकः पृथगात्मता ॥ ८ ॥
संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ।
भिक्षुः परिव्राट् कर्म्मन्दी पाराशर्य्यपि मस्करी ॥ ९ ॥
ऋषयः सत्यवचसः स्नातकश्चाप्लुतव्रती ।
ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ १० ॥
शरीरसाधनापेक्षं नित्यं यत् कर्म्म तद्यमः ।
नियमस्तु स यत् कर्म्मानित्यमागन्तुसाधनम् ।
स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ११ ॥

इत्याग्नेये महापुराणे ब्रह्मवर्गो नाम चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

## अथ पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ।

———ooo———

### क्षत्रविट्शूद्रवर्गाः ।

अग्निरुवाच । मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ॥ १ ॥
चक्रवर्त्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ।
मन्त्री धीसचिवोऽमात्यो महामात्राः प्रधानकाः ॥ २ ॥

द्रष्टरि व्यवहाराणां प्राड्विवाकाऽक्षदर्शकौ ।
भौरिकः कनकाध्यक्षोऽथाध्यक्षाधिकृतौ समौ ॥ ३ ॥
अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ४ ॥
षण्डो वर्षवरस्तुल्याः सेवकार्थ्यनुजीविनः ।
विषयानन्तरो राजा शत्रुर्मित्रमतः परं ॥ ५ ॥
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ।
चरः स्पशः स्यात्प्रणिधिरुत्तरः काल आयतिः ॥ ६ ॥
तत्कालस्तु तदात्वं स्यादुदर्कः फलमुत्तरं ।
अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ॥ ७ ॥
भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका ।
प्रभिन्नो गर्जितो मत्तो वमथुः करशीकरः ॥ ८ ॥
स्त्रियां सृणिस्त्वङ्कुशोऽस्त्री परिस्तोमः कुथो द्वयोः ।
कर्णीरथः प्रवहणं दोला प्रेङ्खादिका स्त्रियां ॥ ९ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
भटा योधाश्च योद्धारः कञ्चुको वारणोऽस्त्रियां ॥ १० ॥
शीर्षण्यञ्च शिरस्त्रेऽथ तनुत्रं वर्म्म दंशनं ।
आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥ ११ ॥
व्यूहस्तु बलविन्यासश्चक्रञ्चानीकमस्त्रियां ।
एकेभैकरथा त्र्यश्वाः पत्तिः पञ्चपदातिकाः ॥ १२ ॥
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरं ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥ १३ ॥
अनीकिनी दशानीकिन्योऽक्षौहिण्यो गजादिभिः ।

धनुः कोदण्डइष्वासौ कोटिरस्याटनी स्मृता ॥ १४ ॥
लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ।
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ १५ ॥
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ।
असिऋष्टिश्च निस्त्रिंशः करवालः कृपाणवत् ॥ १६ ॥
सरुः खड्गस्य मुष्टौ स्यादीली तु करपालिका ।
द्वयोः कुठारः सुधितिः छुरिका चासिपुत्रिका ॥ १७ ॥
प्रासस्तु कुन्तो विज्ञेयः सर्वला तोमरोऽस्त्रियां ।
वैतालिका बोधकरा मागधा वन्दिनस्तुतौ ॥ १८ ॥
संशप्तकास्तु समयात्सङ्ग्रामादनिवर्तिनः ।
पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियां ॥ १९ ॥
अहं पूर्वमहं पूर्व्वमित्यहंपूर्व्विका स्त्रियां ।
अहमहमिका सा स्याद्योऽहङ्कारः परस्परम् ॥ २० ॥
शक्तिः पराक्रमः प्राणः शौर्य्यं स्थानसहोबलं ।
मूर्छा तु कश्मलं मोहोऽप्यवमर्द्दस्तु पीड़नं ॥ २१ ॥
अभ्यवस्कन्दनन्त्वभ्यासादनं विजयो जयः ।
निर्वासनं संज्ञपनं मारणं प्रतिघातनं ॥ २२ ॥
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
विशो भुमिस्पृशो वैश्या वृत्तिर्वर्तनजीवने ॥ २३ ॥
कृष्यादिवृत्तयो ज्ञेयाः कुसीदं वृद्धिजीविका ।
उद्धारोऽर्थप्रयोगः स्यात्कणिशं सस्यमञ्जरी ॥ २४ ॥
किंशारुः सस्यशूकं स्यात् स्तम्बो गुच्छस्तृणादिनः ।
धान्यं व्रीहिः स्तम्बकरिः कड़ङ्गरो बुषं स्मृतं ॥ २५ ॥

माषादयः शमीधान्ये शूकधान्ये यवादयः ।
तृणधान्यानि नीवाराः शूर्पं प्रस्फोटनं स्मृतं ॥ २६ ॥
स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ ।
समानौ रसवत्यान्तु पाकस्थानमहानसे ॥ २७ ॥
पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवाः ।
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ॥२८॥
क्लीबेऽम्बरीषं भ्राष्टो ना कर्कर्यालुर्गलन्तिका ।
आलिञ्जरः स्यान्मणिकं सुषवी कृष्णजीरके ॥ २९ ॥
आरनालस्तु कुल्माषं वाह्लीकं हिङ्गु रामठं ।
निशा हरिद्रा पीता स्त्री खण्डे मत्स्यण्डिफाणिते ॥ ३० ॥
कूर्चिका क्षीरविकृतिः स्निग्धं मसृणचिक्कणं ।
पृथुकः स्याच्चिपिटको धाना भ्रष्टयवास्त्रियः ॥ ३१ ॥
जेमनं लेप आहारो माहेयी सौरभी च गौः ।
युगादीनाञ्च वोढारो युग्यप्रासङ्गशाटकाः ॥ ३२ ॥
चिरसूता वष्कयणी धेनुः स्यान्नवसूतिका ।
सन्धिनी वृषभाक्रान्ता वेहद्गर्भोपघातिनी ॥ ३३ ॥
पण्याजीवो ह्यापणिको न्यासश्चोपनिधिः पुमान् ।
विपणो विक्रयः सङ्ख्या सङ्ख्येये ह्यादश त्रिषु ॥ ३४ ॥
विंशत्याद्याः सदैकत्वे सर्व्वाः संख्येयसंख्ययोः ।
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ॥ ३५ ॥
पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरं ।
मानन्तु लाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ३६ ॥
ते षोड़शाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ।

सुवर्णविस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले ॥ ३७ ॥
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ।
कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः ॥३८॥
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ॥ ३९ ॥
शुल्बमौदुम्बरं लौहे तीक्ष्णं कालायसायसी ।
क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ॥ ४० ॥
गरलं माहिषं शृङ्गं त्रपुसीसकपिच्चटं ।
हिण्डीरोऽब्धिकफः फेणो मधूच्छिष्टन्तु सिक्थकम् ॥ ४१ ॥
रङ्गवङ्गे पिचुस्तूलो कूलटो तु मनःशिला ।
यवक्षारश्च पाक्यः स्यात् त्वक्क्षीरा वंशलोचना: ॥ ४२ ॥
वृषला जघन्यजाः शूद्राश्चाण्डालान्त्याश्च शङ्कराः ।
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ॥ ४३ ॥
रङ्गाजीवश्चित्रकरस्त्वष्टा तक्षा च वर्धकिः ।
नाडिन्धमः स्वर्णकारो नापितान्तावसायिनः ॥ ४४ ॥
जावालः स्यादजाजीवो देवाजीवस्तु देवलः ।
जायाजीवास्तु शैलूषा भृतको भृतिभुक्तथा ॥ ४५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।
विहीनोपसदो जाल्मो भृत्ये दासेरचेटकाः ॥ ४६ ॥
पटुस्तु पेशलो दक्षो मृगयुर्लुब्धकः स्मृतः ।
चाण्डालस्तु दिवाकीर्त्तिः पुस्तं लेप्यादिकर्मणि ॥ ४७ ॥
पञ्चालिका पुत्त्रिका स्याद्दर्करस्तरुणः पशुः ।
मञ्जूषा पेटकः पेडा तुल्यसाधारणो समो ।

प्रतिमा स्यात् प्रतिकृतिर्वर्गा ब्रह्मादयः स्मृताः ॥ ४८ ॥

इत्याग्नेये महापुराणे च्वविट्शूद्रवर्गा नाम पञ्चषष्ट्याधिकत्रिशततमोऽध्यायः ॥

---

## अथ षट्षष्ट्यधिकत्रिशततमोऽध्यायः ।

———000@000———

### सामान्यनामलिङ्गानि ।

अग्निरुवाच । सामान्यान्यथ वक्ष्यामि नामलिङ्गानि तच्छृणु ।
सुकृती पुण्यवान् धन्यो महेच्छस्तु महाशयः ॥ १ ॥
प्रवीणनिपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।
स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे ॥ २ ॥
कृती कृतज्ञः कुशल आसक्तोद्युक्त उत्सुकः ।
इभ्य आढ्यः परिवृढो ह्यधिभूर्नायकोऽधिपः ॥ ३ ॥
लक्ष्मीवान् लक्ष्मणः श्रील: स्वतन्त्रः स्वैर्य्यऽपावृतः ।
खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः ॥ ४ ॥
जाल्मोऽसमीक्ष्यकारी स्यात् कुण्ठो मन्दः क्रियासु यः ।
कर्म्मशूरः कर्म्मठः स्याद्भक्षको घस्मरोऽद्मरः ॥ ५ ॥
लोलुपो गर्धलो गृध्नुर्विनीतप्रश्रितौ तथा ।
धृष्टे धृष्णुर्वियातश्च निभृतः प्रतिभान्विते ॥ ६ ॥
प्रगल्भौ भीरुको भीरुर्वन्दारुरभिवादके ।
भूष्णुर्भविष्णुर्भविता ज्ञाता विदुरविन्दुकौ ॥ ७ ॥
मत्तशौण्डोत्कटक्षीवाश्चण्डस्त्वत्यन्तकोपनः ।

देवानञ्चति देवद्र्यङ् विष्वद्र्यङ् विष्वगञ्चति ॥ ८ ॥
यः सहाञ्चति स सध्र्यङ् स तिर्य्यङ् यस्तिरोऽञ्चति ।
वाचोयुक्तिः पटुर्वाग्मी वावदूकश्च वक्तरि ॥ ९ ॥
स्याज्जल्पकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
अपध्वस्तो धिक्कृतः स्याद्बद्धे कीलितसंयतौ ॥ १० ॥
वरणः शब्दनो नान्दीवादी नान्दीकरः समाः ।
व्यसनार्त्तोपरक्तौ द्वौ बद्धे कीलितसंयतौ(१) ॥ ११ ॥
विहस्तव्याकुलौ तुल्यौ नृशंसक्रूरघातुकाः ।
पापो धूर्त्तो वञ्चकः स्यान्मूर्खे वैदेहवालिशौ ॥ १२ ॥
कदर्य्ये कृपणक्षुद्रौ मार्गणो याचकार्थिनौ ।
अहङ्कारवानहंयुः स्याच्छुभंयुस्तु शुभान्वितः ॥ १३ ॥
कान्तं मनोरमं रुच्यं हृद्याभीष्टे ह्यभीप्सिते ।
असारं फल्गु शून्यं वै मुख्यवर्य्यवरेण्यकाः ॥ १४ ॥
श्रेयान् श्रेष्ठः पुष्कलः स्यात्प्राग्र्याग्र्याग्रीयमग्रिमं ।
वड्रोरु विपुलं पीनपीव्नी तु स्थूलपीवरे ॥ १५ ॥
स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशन्तनु ।
मात्राकुटीलवकणा भूयिष्ठं पुरुहं पुरु ॥ १६ ॥
अखण्डं पूर्णसकलमुपकण्ठान्तिकाभितः ।
समीपे सन्निधाभ्यासौ नेदिष्ठं सुसमीपकं ॥ १७ ॥
सुदूरे तु दविष्ठं स्याद्वृत्तं निस्तलवर्त्तुले ।
उच्चप्रांशून्नतोदग्रा ध्रुवोऽनित्यः सनातनः ॥ १८ ॥
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ।

१ पाठोऽयं पुनरुक्तिदोषेण दुष्टः ।

चञ्चलं तरलञ्चैव कठोरं जठरं दृढ़ं ॥ १९ ॥
प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ।
एकतानोऽनन्यवृत्तिरेकाग्रमविलम्बितं ॥ २० ॥
उच्चावचं नैकभेदं सम्बाधकलिलं तथा ।
तिमितं स्तिमितं क्लिन्नमभियोगस्त्वभिग्रहः ॥ २१ ॥
स्फातिर्वृद्धौ प्रथा ख्यातौ समाहारः समुच्चयः ।
अपहारस्त्वपचयो विहारस्तु परिक्रमः ॥ २२ ॥
प्रत्याहार उपादानं निर्हारोऽभ्यवकर्षणं ।
विघ्नोऽन्तरायः प्रत्यूहः स्यादास्यासना स्थितिः ॥२३॥
सन्निधिः सन्निकर्षः स्यात्संक्रमो दुर्गसञ्चरः ।
उपलम्भस्त्वनुभवः प्रत्यादेशो निराकृतिः ॥ २४ ॥
परिरम्भःपरिष्वङ्गः संश्लेष उपगूहनं ।
अनुमा पक्षहेत्वाद्यैर्डिम्बे भ्रमरविप्लवौ ॥ २५ ॥
असन्निकृष्टार्थज्ञानं शब्दाद्धि शाब्दमीरितं ।
सादृश्यदर्शनात्तुल्ये बुद्धिः स्यादुपमानकं ॥ २६ ॥
कार्य्यं दृष्ट्वा विना नस्यादर्थापत्तिः परार्थधीः ।
प्रतियोगिन्यऽगृहीते भुवि नास्तीत्यभावकः ।
इत्यादिनामलिङ्गो हि हरिरुक्तो नृबुद्धये ॥ १७ ॥

इत्याग्नेये महापुराणे सामान्यनामलिङ्गानि नाम
षट्षष्ट्यधिकत्रिशततमोऽध्यायः ॥

## अथ सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ।

———000@000———

### नित्यनैमित्तिकप्राकृतप्रलयाः ।

अग्निरुवाच । चतुर्विधस्तु प्रलयो नित्यो यः प्राणिनां लयः ।
सदा विनाशो जातानां ब्राह्मो नैमित्तिको लयः ॥ १ ॥
चतुर्युगसहस्रान्ते प्राकृतः प्राकृतो लयः ।
लय आत्यन्तिको ज्ञानादात्मनः परमात्मनि ॥ २ ॥
नैमित्तिकस्य कल्पान्ते वक्ष्ये रूपं लयस्य ते ।
चतुर्युगसहस्रान्ते क्षीणप्राये महीतले ॥ ३ ॥
अनावृष्टिरतीवोग्रा जायते शतवार्षिकी ।
ततः सत्त्वक्षयः स्याच्च ततो विष्णुर्जगत्पतिः ॥ ४ ॥
स्थितो जलानि पिबति भानोः सप्तसु रश्मिषु ।
भूपातालसमुद्रादितोयं नयति संक्षयं ॥ ५ ॥
ततस्तस्यानुभावेन तोयाहारोपबृंहिताः ।
त एव रश्मयः सप्त जायन्ते सप्त भास्कराः ॥ ६ ॥
दहन्त्यशेषं त्रैलोक्यं सपातालतलं द्विज ।
कूर्म्मपृष्ठसमा भूः स्यात्ततः कालाग्निरुद्रकः ॥ ७ ॥
शेषाहिश्वाससम्पातात् पातालानि दहत्यधः ।
पातालेभ्यो भुवं विष्णुर्भुवः स्वर्गं दहत्यतः ॥ ८ ॥
अम्बरीषमिवाभाति त्रैलोक्यमखिलं तथा ।
ततस्तापपरीतास्तु लोकद्वयनिवासिनः ॥ ९ ॥

गच्छन्ति ते महर्लोकं महर्लोकाज्जनं ततः ।
रुद्ररूपी जगद्दग्ध्वा मुखनिश्वासतो हरेः ॥ १० ॥
उत्तिष्ठन्ति ततो मेघा नानारूपाः सविद्युतः ।
शतं वर्षाणि वर्षन्तः शमयन्त्यग्निमुत्थितम् ॥ ११ ॥
सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि शतं मरुत् ।
मुखनिश्वासतो विष्णोर्नाशं नयति तान् घनान् ॥ १२ ॥
वायुं पीत्वा हरिः शेषे शेते चैकार्णवे प्रभुः ।
ब्रह्मरूपधरः सिद्धैर्जलगैर्मुनिभिस्तुतः ॥ १३ ॥
आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः ।
आत्मानं वासुदेवाख्यं चिन्तयन्मधुसूदनः ॥ १४ ॥
कल्पं शेते प्रबुद्धोऽथ ब्रह्मरूपी सृजत्यसौ ।
द्विपरार्धन्ततो व्यक्तं प्रकृतौ लीयते द्विज ॥ १५ ॥
स्थानात् स्थानं दशगुणमेकस्माद्गुण्यते स्थले ।
ततोऽष्टादशमे भागे परार्धमभिधीयते ॥ १६ ॥
परार्धं द्विगुणं यत्तु प्राकृतः प्रलयः स्मृतः ।
अनावृष्ट्याऽग्निसम्पर्कात् कृते संज्वलने द्विज ॥ १७ ॥
महदादेर्विकारस्य विशेषान्तस्य संचये ।
कृष्णेच्छाकारिते तस्मिन् सम्प्राप्ते प्रतिसञ्चरे ॥ १८ ॥
आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धादिकं गुणं ।
आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ॥ १९ ॥
रसात्मिकाश्च तिष्ठन्ति ह्यापस्तासां रसो गुणः ।
पीयते ज्योतिषा तासु नष्टास्वग्निश्च दीप्यते ॥ २० ॥
ज्योतिषोऽपि गुणं रूपं वायुर्ग्रसति भास्करं ।

नष्टे ज्योतिषि वायुश्च बली दोधूयते महान् ॥ २१ ॥
वायोरपि गुणं स्पर्शमाकाशं ग्रसते ततः ।
वायौ नष्टे तु चाकाशमनीरवं तिष्ठति द्विज ॥ २२ ॥
आकाशस्याथ वै शब्दं भूतादिर्ग्रसते च खं ।
अभिमानात्मकं खञ्च भूतादिं ग्रसते महान् ॥ २३ ॥
भूमिर्याति लयञ्चाप्सु आपो ज्योतिषि तद्व्रजेत् ।
वायौ वायुश्च खे खञ्च अहङ्कारे लयं स च ॥ २४ ॥
महत्तत्त्वे महान्तञ्च प्रकृतिर्ग्रसते द्विज ।
व्यक्ताऽव्यक्ता च प्रकृतिर्व्यक्तस्याव्यक्तके लयः ॥ २५ ॥
पुमानेकाक्षरः शुद्धः सोऽप्यंशः परमात्मनः ।
प्रकृतिः पुरुषश्चैतौ लीयेते परमात्मनि ॥ २६ ॥
न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥ २७ ॥

इत्याग्नेये महापुराणे नित्यनैमित्तिकप्राकृतप्रलया नाम सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

## अथाष्टषष्ट्यधिकत्रिशततमोऽध्यायः ।

———ooo@ooo———

### आत्यन्तिकलयगर्भोत्पत्तिनिरूपणं ।

अग्निरुवाच । आत्यन्तिकं लयं वक्ष्ये ज्ञानादात्यन्तिको लयः ।
आध्यात्मिकादिसन्तापं ज्ञात्वा स्वस्य विरागतः ॥ १ ॥

आध्यात्मिकस्तु सन्तापः शारीरो मानसो द्विधा ।
शारीरो बहुभिर्भेदैस्तापोऽसौ श्रूयतां द्विज ॥ २ ॥
त्यक्त्वा जीवो भोगदेहं गर्भमाप्नोति कर्मभिः ।
आतिवाहिकसंज्ञस्तु देहो भवति वै द्विज ॥ ३ ॥
केवलं स मनुष्याणां मृत्युकाल उपस्थिते ।
याम्यैः पुंभिर्मनुष्याणां तच्छरीरं द्विजोत्तमाः ॥ ४ ॥
नीयते याम्यमार्गेण नान्येषां प्राणिनां मुने ।
ततः स्वर्याति नरकं स भ्रमेद्घटयन्त्रवत् ॥ ५ ॥
कर्मभूमिरियं ब्रह्मन् फलभूमिरसौ स्मृता ।
यमो योनीश्च नरकं निरूपयति कर्मणा ॥ ६ ॥
पूरणीयाश्च तेनैव यमश्चैवानुपश्यतां ।
वायुभूताः प्राणिनश्च गर्भस्ते प्राप्नुवन्ति हि ॥ ७ ॥
यमदूतैर्मनुष्यस्तु नीयते तञ्च पश्यति ।
धर्म्मी च पूज्यते तेन पापिष्ठस्ताड्यते गृहे ॥ ८ ॥
शुभाशुभं कर्म्म तस्य चित्रगुप्तो निरूपयेत् ।
बान्धवानामशौचे तु देहे स्वल्पातिवाहिके ॥ ९ ॥
तिष्ठत्ययति धर्म्मज्ञ दत्तपिण्डाशनस्ततः ।
तत्त्यक्त्वा प्रेतदेहन्तु प्राप्यान्यं प्रेतलोकतः(१) ॥ १० ॥
वसेत् क्षुधा तृषा युक्त आमश्राद्धान्नभुङ्नरः ।
आतिवाहिकदेहात्तु प्रेतपिण्डैर्विना नरः ॥ ११ ॥
न हि मोक्षमवाप्नोति पिण्डांस्तत्रैव सोऽश्नुते ।
कृते सपिण्डीकरणे नरः संवत्सरात्परं ॥ १२ ॥

---

१ प्रेतलौकिके इति ख० ।

प्रेतदेहं समुत्सृज्य भोगदेहं प्रपद्यते।
भोगदेहावुभौ प्रोक्तावशुभशुभसंज्ञितौ॥ १३॥
भुक्त्वा तु भोगदेहेन कर्म्मबन्धाद्विपात्यते।
तं देहं परतस्तस्माद्भक्षयन्ति निशाचराः॥ १४॥
पापे तिष्ठति चेत् स्वर्गं तेन भुक्तं तदा द्विज।
तदा द्वितीयं गृह्णाति भोगदेहन्तु पापिनां॥ १५॥
भुक्त्वा पापन्तु वै पश्चाद्येन भुक्तं त्रिपिष्टपं।
शुचीनां श्रीमतां गेहे स्वर्गभ्रष्टोऽभिजायते॥ १६॥
पुण्ये तिष्ठति चेत्पापन्तेन भुक्तं तदा भवेत्।
तस्मिन् सम्भक्षिते देहे शुभं गृह्णाति विग्रहम्॥ १७॥
कर्म्मण्यल्पावशेषे तु नरकादपि मुच्यते।
मुक्तस्तु नरकाद्याति तिर्य्यग्योनिं न संशयः॥ १८॥
जीवः प्रविष्टो गर्भन्तु कललेऽप्यत्र तिष्ठति(२)।
घनीभूतं द्वितीये तु तृतीयेऽवयवास्ततः॥ १९॥
चतुर्थेऽस्थीनि त्वङ्मांसम्पञ्चमे रोमसम्भवः।
षष्ठे चेतोऽथ जीवस्य दुःखं विन्दति सप्तमे॥ २०॥
जरायुवेष्टिते देहे मूर्द्ध्नि बद्धाञ्जलिस्तथा।
मध्ये क्लीबस्तु वामे स्त्री दक्षिणे पुरुषस्थितिः॥ २१॥
तिष्ठत्युदरभागे तु पृष्ठस्याभिमुखस्तथा।
यस्यां तिष्ठत्यसौ योनौ तां स वेत्ति न संशयः॥ २२॥
सर्वञ्च वेत्ति वृत्तान्तमारभ्य नरजन्मनः।

२ गच्छतीति क०।

अन्धकारश्च महतीं पीड़ां विन्दति मानवः ॥ २३ ॥
मातुराहारपीतन्तु सप्तमे मास्युपाश्नुते ।
अष्टमे नवमे मासि भृशमुद्विजते तथा ॥ २४ ॥
व्यवाये पीड़ामाप्नोति मातुर्व्यायामके तथा ।
व्याधिश्च व्याधितायां स्यान्मुहूर्त्तं शतवर्षवत् ॥ २५ ॥
सन्तप्यते कर्मभिस्तु कुरुतेऽथ मनोरथान् ।
गर्भाद्विनिर्गतो ब्रह्मन् मोचज्ञानं करिष्यति ॥ २६ ॥
सूतिवातैरधोभूतो निःसरेद्योनियन्त्रतः ।
पीड्यमानो मासमात्रं करस्पर्शेन दुःखितः ॥ २७ ॥
खशब्दात् सुद्रश्रोतांसि देहे श्रोत्रं विविक्तता ।
श्वासोच्छ्वासौ गतिर्वायोर्वक्त्रसंस्पर्शनं तथा(१) ॥२८॥
अभिरूपं दर्शनं स्यादूष्मा पक्तिश्च पित्तकं ।
मेधा वर्णं बलं छाया तेजः शौर्य्यं शरीरके ॥ २९ ॥
जलात्स्वेदश्च रसनन्देहे वै संप्रजायते ।
क्लेदो वसा रसा रक्तं शुक्रमूत्रकफादिकं ॥ ३० ॥
भूमेर्घ्राणं केशनखं गौरवं स्थिरतोऽस्थितः ।
मातृजानि मृदून्यत्र त्वङ्मांसहृदयानि च ॥ ३१ ॥
नाभिर्मज्जा(२) शकृन्मेदःक्लेदान्यामाशयानि च ।
पितृजानि शिरास्नायुशुक्रश्चैवात्मजानि तु ॥ ३२ ॥
कामक्रोधौ भयं हर्षो धर्म्माधर्म्मात्मता तथा ।
आकृतिः स्वरवर्णौ तु मेहनाद्यं तथा च यत् ॥ ३३ ॥

---

१ श्वासोच्छ्वासौ गतिर्वायो वाक्यसंस्पर्शनमिति ङ० ।
२ नाभिर्मेढमिति ख०, ङ० च ।

तामसानि तथाऽज्ञानं प्रमादालस्यतृट्क्षुधाः ।
मोहमात्सर्य्यवैगुण्यशोकायासभयानि च ॥ ३५ ॥
कामक्रोधौ तथा शौर्य्यं यशेप्सा बहुभाषिता ।
अहङ्कारः परावज्ञा राजसानि महामुने ॥ ३६ ॥
धर्म्मेप्सा मोक्षकामित्वं परा भक्तिश्च केशवे ।
दाक्षिण्यं व्यवसायित्वं सात्त्विकानि विनिर्द्दिशेत् ॥३७॥
चपलः क्रोधनो भीरुर्बहुभाषो कलिप्रियः ।
स्वप्ने गगनगश्चैव बहुवातो नरो भवेत् ॥ ३८ ॥
अकालपलितः क्रोधी महाप्राज्ञो रणप्रियः ।
स्वप्ने च दीप्तिमत्प्रेक्षी बहुपित्तो नरो भवेत् ॥ ३९ ॥
स्थिरमित्रः स्थिरोत्साहः स्थिराङ्गो द्रविणान्वितः ।
स्वप्ने जलसितालोकी बहुश्लेष्मा नरो भवेत् ॥ ४० ॥
रसस्तु प्राणिनां देहे जीवनं रुधिरं तथा ।
लेपनञ्च तथा मांसमेहस्नेहकरस्तु तत् ॥ ४१ ॥
धारणन्त्वऽस्थि मज्जा स्यात्पूरणं वीर्य्यवर्धनं ।
शुक्रवीर्य्यकरं ह्योजः प्राणकृज्जीवसंस्थितिः ॥ ४२ ॥
ओजः शुक्रात् सारतरमापीतं हृदयोपगं ।
षड़ङ्गश्चक्थिनौ बाहुमूर्धा जठरमीरितं ॥ ४३ ॥
षट् त्वचा बाह्यतो यद्वदन्या रुधिरधारिका ।
विलासधारिणी चान्या चतुर्थी कुण्डधारिणी ॥ ४४ ॥
पञ्चमी विद्रधिस्थानं षष्ठे प्राणधरा मता ।
कलासप्तमी मांसधरा द्वितीया रक्तधारिणी ॥ ४५ ॥
यकृत्प्लीहाश्रया चान्या मेदोधराऽस्थिधारिणी ।

मज्जास्रे अपुरीषाणां धरा पक्वाशयस्थिता ।
षष्ठी पित्तधरा शुक्रधरा शुक्राशयाऽपरा ॥ ४६ ॥

इत्याग्नेये महापुराणे आत्यन्तिकलयगर्भोत्पत्तिनिरूपणं नाम
ष्टषष्ट्यधिकत्रिशततमोऽध्यायः ।

---

## अथोनसप्तत्यधिकत्रिशततमोऽध्यायः ।

———000———

### शरीरावयवाः ।

अग्निरुवाच । श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं धीः खञ्च भूतगं ।
शब्दस्पर्शरूपरसगन्धाः खादिषु तद्गुणाः ॥ १ ॥
पायूपस्थौ करौ पादौ वाग्भवेत् कर्मखन्तथा ।
उत्सर्गानन्दकादानगतिवागादि कर्म्म तत् ॥ २ ॥
पञ्चकर्मेन्द्रियाण्यत्र पञ्चबुद्धीन्द्रियाणि च ।
इन्द्रियार्थाश्च पञ्चैव महाभूता मनोऽधिपाः ॥ ३ ॥
आत्माऽव्यक्तश्चतुर्विंशतत्त्वानि पुरुषः परः ।
संयुक्तश्च वियुक्तश्च यथा मत्स्योदके उभे ॥ ४ ॥
अव्यक्तमाश्रितानीह रजःसत्त्वतमांसि च ।
आन्तरः पुरुषो जीवः स परं ब्रह्म कारणं ॥ ५ ॥
स याति परमं स्थानं यो वेत्ति पुरुषं परं ।
सप्ताशयाः स्मृता देहे रुधिरस्यैक आशयः ॥ ६ ॥
श्लेष्मणश्चामपित्ताभ्यां पक्वाशयस्तु पञ्चमः ।

वायुमूत्राशयः सप्तः स्त्रीणां गर्भाशयोऽष्टमः ॥ ७ ॥
पित्तात्पक्वाशयोऽग्नेः स्याद्योनिर्विकशिता श्रुतौ ।
पद्मवद्गर्भाशयः स्यात्तत्र धत्ते सरक्तकं ॥ ८ ॥
शुक्रं स्वशुक्रतश्चाङ्ग कुन्तलान्यत्र कालतः ।
न्यस्तं शुक्रमतो योनौ नेति गर्भाशयं मुने ॥ ९ ॥
ऋतावपि च योनिश्चेद्वातपित्तकफावृता ।
भवेत्तदा विकाशित्वं नैव तस्यां प्रजायते ॥ १० ॥
वुक्कात्पुक्कसकप्लीहकृतकोष्ठाङ्गहृद्व्रणाः ।
तण्डुकश्च महाभाग निबद्धान्याशये मतः ॥ ११ ॥
रसस्य पच्यमानस्य साराद्भवति देहिनां ।
प्लीहा यकृच्च धर्म्मज्ञ रक्तफेणाच्च पुक्कसः ॥ १२ ॥
रक्तं पित्तञ्च भवति तथा तण्डुकसंज्ञकः ।
मेदोरक्तप्रसाराच्च वुक्कायाः सम्भवः स्मृतः ॥ १३ ॥
रक्तमांसप्रसाराच्च भवन्त्यन्त्राणि देहिनां ।
सार्धत्रिव्यामसंख्यानि तानि नृणां विनिर्द्दिशेत् ॥ १४ ॥
त्रिव्यामानि तथा स्त्रीणां प्राहुर्वेदविदो जनाः ।
रक्तवायुसमायोगात् कामो यस्योद्भवः स्मृतः ॥ १५ ॥
कफप्रसाराद्भवति हृदयं पद्मसन्निभं ।
अधोमुखं तच्छुषिरं यत्र जीवो व्यवस्थितः ॥ १६ ॥
चैतन्यानुगता भावाः सर्वे तत्र व्यवस्थिताः ।
तस्य वामे तथा प्लीहा दक्षिणे च तथा यकृत् ॥ १७ ॥
दक्षिणे च तथा क्लोम पद्मस्यैवं प्रकीर्त्तितं ।
स्रोतांसि यानि देहेऽस्मिन् कफरक्तवहानि च ॥ १८ ॥

तेषां भूतानुमानाच्च भवतीन्द्रियसम्भवः ।
नेत्रयोर्मण्डलं शुक्लं कफाद्भवति पैतृकं ॥ १९ ॥
कृष्णञ्च मण्डलं वातात्तथा भवति मातृकं ।
पित्तात्त्वङ्मण्डलं ज्ञेयं मातापितृसमुद्भवं ॥ २० ॥
मांसासृक्कफजा जिह्वा मेदोऽसृक्कफमांसजौ ।
वृषणौ दश प्राणस्य ज्ञेयान्यायतनानि तु ॥ २१ ॥
मूर्द्धा हृन्नाभिकण्ठाश्च जिह्वा शुक्रञ्च शोणितं ।
गुदं वस्तिश्च गुल्फश्च कण्डराः षोड़शेरिताः ॥ २२ ॥
द्वे करे द्वे च चरणे चतस्रः पृष्ठतो गले ।
देहे पादादिशीर्षान्ते जालानि चैव षोड़श ॥ २३ ॥
मांसस्नायुशिरास्थिभ्यः चत्वारश्च पृथक् पृथक् ।
मणिबन्धनगुल्फेषु निबद्धानि परस्परं ॥ २४ ॥
षट् कूर्चानि स्मृतानीह हस्तयोः पादयोः पृथक् ।
ग्रीवायाञ्च तथा मेढ्रे कथितानि मनीषिभिः ॥ २५ ॥
पृष्ठवंशस्योपगतास्चतस्रो मांसरज्जवः ।
नवत्यश्च तथा पेश्यस्तासां बन्धनकारिकाः ॥ २६ ॥
सीरण्यश्च तथा सप्त पञ्च मूर्द्धानमाश्रिताः ।
एकैका मेढ्रजिह्वास्ता अस्थि षष्टिशतत्रयं ॥ २७ ॥
सूक्ष्मैः सह चतुःषष्टिर्दशना विंशतिर्नखाः ।
पाणिपादशलाकाश्च तासां स्थानचतुष्टयं ॥ २८ ॥
षष्ट्यङ्गुलीनां द्वे पार्ष्ण्योः गुल्फेषु च चतुष्टयं ।
चत्वार्यरत्न्योरस्थीनि जङ्घयोस्तद्वदेव तु ॥ २९ ॥
द्वे द्वे जानुकपोलोरुफलकांशसमुद्भवं ।

असूर्य्यानांशकञ्श्रोणिफलके चैवमादिशेत् ॥ २० ॥
भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ।
ग्रीवायाञ्च तथाऽस्थीनि जत्रुकञ्च तथा हनुः ॥ २१ ॥
तन्मूले द्वे ललाटाक्षिगण्डनासाङ्घ्र्यवस्थिताः ।
पर्शुकास्तालुकैः सार्द्धमर्बुदैश्च द्विसप्ततिः ॥ २२ ॥
द्वे शङ्खके कपालानि चत्वार्य्येव शिरस्तथा ।
उरः सप्तदशास्थीनि सन्धीनां द्वे शते दश ॥ २३ ॥
अष्टषष्टिस्तु शाखासु षष्टिश्चैकविवर्जिता ।
अन्तरा वै त्र्यशीतिश्च स्नायोर्नवशतानि च ॥ २४ ॥
त्रिंशाधिके द्वे शते तु अन्तराधौ तु सप्ततिः ।
ऊर्द्धगाः षट्शतान्येव शाखास्तु कथितानि तु ॥ २५ ॥
पञ्चपेशीशतान्येव(१) चत्वारिंशत्तथोर्द्धगाः ।
चतुःशतन्तु शाखासु अन्तराधौ च षष्टिका ॥ २६ ॥
स्त्रीणां चैकाधिका वै स्याद्विंशतिश्चतुरुत्तरा ।
स्तनयोर्दश योनौ च त्रयोदश तथाशये ॥ २७ ॥
गर्भस्य च चतस्रः स्युः शिराणाञ्च शरीरिणां ।
त्रिंशच्छतसहस्राणि तथान्यानि नवैव तु ॥ २८ ॥
षट्पञ्चाशत्सहस्राणि रसन्देहे वहन्ति ताः ।
केदार इव कुल्याश्च क्लेदलेपादिकञ्च यत् ॥ २९ ॥
द्वासप्ततिस्तथा कोटी व्योम्नामिह महामुने ।
मज्जाया मेदसश्चैव वसायाश्च तथा द्विज ॥ ४० ॥
मूत्रस्य चैव पित्तस्य श्लेष्मणः शकृतस्तथा ।

१ पञ्चपेशीशतान्यत्रेति क॰, ख॰, च ।

रक्तस्य सरसस्यात्र क्रमशोऽञ्जलयो मताः ॥ ४१ ॥
अर्द्धार्द्धाभ्यधिकाः सर्व्वाः पूर्वपूर्वाऽञ्जलेर्मताः ।
अर्द्धाञ्जलिश्च शुक्रस्य तदर्धञ्च तथौजसः ॥ ४२ ॥
रजसस्तु तथा स्त्रीणाञ्चतस्रः कथिता बुधैः ।
शरीरं मलदोषादि पिण्डं ज्ञात्वात्मनि त्यजेत्(१) ॥ ४३ ॥

इत्याग्नेये महापुराणे शरीरावयवा नामो
न सप्तत्यधिकत्रिशततमोऽध्यायः ।

---

## अथसप्तत्यधिकत्रिशततमोध्यायः ।

———000@000———

### नरकनिरूपणम् ।

अग्निरुवाच । उक्तानि यममार्गाणि वक्ष्येऽथ मरणे नृणां ।
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ॥ १ ॥
शरीरमुपरुध्याऽथ कृत्स्नान्दोषान्रुणद्धि वै ।
छिनत्ति प्राणस्थानानि पुनर्मर्माणि चैव हि ॥ २ ॥
शैत्यात् प्रकुपितो वायुश्छिद्रमन्विष्यते ततः ।
द्वे नेत्रे द्वौ तथा कर्णौ द्वौ तु नासापुटौ तथा ॥ ३ ॥
ऊर्द्ध्वन्तु सप्त च्छिद्राणि अष्टमं वदनं तथा ।
एतैः प्राणो विनिर्याति प्रायशः शुभकर्मणां ॥ ४ ॥
अधः पायुरुपस्थञ्च अनेनाशुभकारिणां ।

---

१ पिण्डं ज्ञात्वा तु विन्यसेदिति ज० ।

मूर्द्धानं योगिनो भित्त्वा जीवो यात्यथ चेच्छया ॥ ५ ॥
अन्तकाले तु सम्प्राप्ते प्राणेऽपानमुपस्थिते ।
तमसा संवृते ज्ञाने संवृतेषु च मर्म्मसु ॥ ६ ॥
स जीवो नाभ्यधिष्ठानश्चाल्यते मातरिश्वना ।
बाध्यमानश्चानयते अष्टाङ्गाः प्राणवृत्तिकाः ॥ ७ ॥
च्यवन्तं जायमानं वा प्रविशन्तञ्च योनिषु ।
प्रपश्यन्ति च तं सिद्धा देवा दिव्येन चक्षुषा ॥ ८ ॥
गृह्णाति तत्क्षणाद्योगे शरीरञ्चातिवाहिकम् ।
आकाशवायुतेजांसि विग्रहादूर्द्धगामिनः ॥ ९ ॥
जलं मही च पञ्चत्वमापन्नः पुरुषः स्मृतः ।
आतिवाहिकदेहन्तु यमदूता नयन्ति तं ॥ १० ॥
याम्यं मार्गं महाघोरं षड्शीतिसहस्रकम् ।
अन्नोदकं नीयमानो बान्धवैर्दत्तमश्नुते ॥ ११ ॥
यमं दृष्ट्वा यमोक्तेन चित्रगुप्तेन चेरितान् ।
प्राप्नोति नरकान्रौद्रान्धर्मी शुभपथैर्दिवम् ॥ १२ ॥
भुज्यन्ते पापिभिर्वक्ष्ये नरकांस्ताश्च यातनाः ।
अष्टाविंशतिरेवाधःक्षितेर्नरककोटयः ॥ १३ ॥
सप्तमस्य तलस्यान्ते घोरे तमसि संस्थिताः ।
घोराख्या प्रथमाकोटिः सुघोरा तदधःस्थिता ॥ १४ ॥
अतिघोरा महाघोरा घोररूपा च पञ्चमी ।
षष्ठी तरलताराख्या सप्तमी च भयानका ॥ १५ ॥
भयोत्कटा कालरात्री महाचण्डा च चण्डया ।
कोलाहला प्रचण्डाख्या पद्मा नरकनायिका ॥ १६ ॥

पद्मावती भीषणा च भीमा चैव करालिका ।
विकराला महावज्रा त्रिकोणा पञ्चकोणिका ॥ १७ ॥
सुदीर्घा वर्तुला सप्तभूमा चैव सुभूमिका ।
दीप्तमायाऽष्टाविंशतयः कोटयः पापिदुःखदाः ॥ १८ ॥
अष्टाविंशतिकोटीनां पञ्च पञ्च च नायकाः ।
रौरवाद्याः शतञ्चैकं चत्वारिंशच्चतुष्टयं ॥ १९ ॥
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
असिपत्रं वनञ्चैव लोहभारं तथैव च ॥ २० ॥
नरकं कालसूत्रञ्च महानरकमेव च ।
सञ्जीवनं महावीचि तपनं सम्प्रतापनं ॥ २१ ॥
सङ्घातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकं ।
लोहशङ्कुमृजीषञ्च प्रधानं शाल्मलीं नदीम ॥ २२ ॥
नरकान्विद्धि कोटीशनागान्वै घोरदर्शनान् ।
पात्यन्ते पापकर्माण एकैकस्मिन्बहुष्वपि ॥ २३ ॥
मार्जारोलूकगोमायुगृध्रादिवदनाश्च ते ।
तैलद्रोण्यां नरं क्षिप्त्वा ज्वालयन्ति हुताशनं ॥ २४ ॥
अम्बरीषेषु चैवान्यांस्ताम्रपात्रेषु चापरान् ।
अयःपात्रेषु चैवान्यान् बहुवह्निकणेषु च ॥ २५ ॥
शूलाग्रारोपिताश्चान्ये छिद्यन्ते नरकेऽपरे ।
ताड्यन्ते च कशाभिस्तु भोज्यन्ते चाप्ययोगुड़ान् ॥ २६ ॥
यमदूतैर्नराः पांशून्विष्ठारक्तकफादिकान् ।
तप्तं मद्यं पाययन्ति पाटयन्ति पुनर्नरान् ॥ २७ ॥
यन्त्रेषु पीडयन्ति स्म भक्ष्यन्ते वायसादिभिः ।

तैलेनोष्णेन सिच्यन्ते छिद्यन्ते नैकधा शिरः ॥ २८ ॥
हा तातेति क्रन्दमानाः स्वकन्निदन्ति कर्म ते ।
महापातकजान्घोरान्नरकान्प्राप्य गर्हितान् ॥ २९ ॥
कर्मक्षयात्प्रजायन्ते महापातकिनस्त्विह ।
मृगश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ॥ ३० ॥
खरपुक्कशम्लेच्छानां मद्यपः स्वर्णहार्य्यपि ।
कृमिकीटपतङ्गत्वं गुरुगस्तृणगुल्मतां ॥ ३१ ॥
ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ।
स्वर्णहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः ॥ ३२ ॥
यो येन संस्पृशत्येषां स तल्लिङ्गोऽभिजायते ।
अन्नहर्ता मायावी स्यान्मूको वागपहारकः ॥ ३३ ॥
धान्यं हृत्वाऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।
तैलहृत्तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः ॥ ३४ ॥
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्जने देशे जायते ब्रह्मराक्षसः ॥ ३५ ॥
रत्नहारी हीनजातिर्गन्धान् छुछुन्दरी शुभान् ।
पत्रं शाकं शिखी हृत्वा मुखरी धान्यहारकः ॥ ३६ ॥
अजः पशुं पयः काको यानमुष्ट्रः(१) फलं कपिः ।
मधु दंशः फलं गृध्रो गृहकाक उपस्करं ॥ ३७ ॥
श्वित्री वस्त्रं सारसञ्च भिल्ली लवणहारकः ।
उक्त आध्यात्मिकस्तापः शस्त्राद्यैराधिभौतिकः ॥ ३८ ॥
ग्रहाग्निदेवपीड़ाद्यैराधिदैविक ईरितः ।

१ यानं वस्त्रमिति ख० ।

त्रिधा तापं हि संसारं ज्ञानयोगाद्विनाशयेत् ।
कृच्छ्रैर्व्रतैश्च दानाद्यैर्विष्णुपूजादिभिर्नरः ॥ ३८ ॥

इत्याग्नेये महापुराणे नरकनिरूपणं नाम
सप्तत्यधिकत्रिशततमोऽध्यायः ।

---

## अथैकसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

यमनियमाः ।

अग्निरुवाच । संसारतापमुक्त्यर्थं वक्ष्याम्यष्टाङ्गयोगकं ।
ब्रह्मप्रकाशकं ज्ञानं(१) योगस्तत्रैकचित्तता ॥ १ ॥
चित्तवृत्तिनिरोधश्च जीवब्रह्मात्मनोः परः ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ ॥ २ ॥
यमाः पञ्च स्मृता विप्र नियमाद्भुक्तिमुक्तिदाः ।
शौचं सन्तोषतपसी स्वाध्यायेश्वरपूजने ॥ ३ ॥
भूतापीड़ा ह्यहिंसा स्यादहिंसा धर्म्म उत्तमः ।
यथा गजपदेऽन्यानि(२) पदानि पथगामिनां(३) ॥ ४ ॥
एवं सर्वमहिंसायां धर्म्मार्थमभिधीयते ।
उद्वेगजननं हिंसा सन्तापकरणन्तथा ॥ ५ ॥
रुक्कृतिः शोनितकृतिः पैशुन्यकरणन्तथा ।

---

१ ब्रह्मप्रकाशनं ज्ञानमिति ख० ।
२ यथा नागपदेऽन्यानीति क० ।
३ पदगामिनामिति ख०, ज०, घ ।

हितस्यातिनिषेधश्च मर्मोद्घाटनमेव च ॥ ६ ॥
सुखापकृतिः संरोधो वधो दशविधा च सा।
यद्भूतहितमत्यन्तं वचः सत्यस्य लक्षणं ॥ ७ ॥
सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियं।
प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः ॥ ८ ॥
मैथुनस्य परित्यागो ब्रह्मचर्य्यन्तदष्टधा।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणं ॥ ९ ॥
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ १० ॥
ब्रह्मचर्य्यं क्रियामूलमन्यथा विफला क्रिया।
वसिष्ठश्चन्द्रमाः शुक्रो देवाचार्य्यः पितामहः ॥ ११ ॥
तपोवृद्धा वयोवृद्धास्तेऽपि स्त्रीभिर्विमोहिताः।
गौडी पैष्टी च माध्वी च विज्ञेयास्त्रिविधाः सुराः ॥ १२ ॥
चतुर्थी स्त्री सुरा ज्ञेया ययेदं मोहितं जगत्।
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा तु माद्यति ॥ १३ ॥
यस्माद्दृष्टमदा नारी तस्मात्तान्नावलोकयेत्।
यद्वा तद्वाऽपरद्रव्यमपहृत्य बलान्नरः ॥ १४ ॥
अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः।
कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीं ॥ १५ ॥
पादुके चापि गृह्णीयात् कुर्य्यान्नान्यस्य संग्रहं।
देहस्थितिनिमित्तस्य वस्त्रादेः स्यात्परिग्रहः ॥ १६ ॥
शरीरं धर्म्मसंयुक्तं रक्षणीयं प्रयत्नतः।
शौचन्तु द्विविधं प्रोक्तं वाह्यमभ्यन्तरं तथा ॥ १७ ॥

मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धेरथान्तरं ।
उभयेन शुचिर्यस्तु स शुचिर्नेतरः शुचिः ॥ १८ ॥
यथा कथञ्चित्प्राप्त्या च सन्तोषस्तुष्टिरुच्यते ।
मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं तप उच्यते ॥ १९ ॥
तज्जयः सर्वधर्म्मेभ्यः स धर्म्मः पर उच्यते ।
वाचिकं मन्त्रजप्यादि मानसं रागवर्ज्जनं ॥ २० ॥
शारीरं देवपूजादि सर्वदन्तु त्रिधा तपः ।
प्रणवाद्यास्ततो वेदाः प्रणवे पर्य्यवस्थिताः ॥ २१ ॥
वाङ्मयः प्रणवः सर्व्वं तस्मात्प्रणवमभ्यसेत् ।
अकारश्च तथोकारो मकारश्चार्द्धमात्रया ॥ २२ ॥
तिस्रो मात्रास्त्रयो वेदाः लोका भूरादयो गुणाः ।
जाग्रत्स्वप्नः सुषुप्तिश्च ब्रह्मविष्णुमहेश्वराः ॥ २३ ॥
प्रद्युम्नः श्रीर्वासुदेवः सर्वमोङ्कारकः क्रमात् ।
अमात्रो नष्टमात्रश्च द्वैतस्यापगमः शिवः ॥ २४ ॥
ओङ्कारो विदितो येन स मुनिर्नेतरो मुनिः ।
चतुर्थी मात्रा गान्धारी प्रयुक्ता मूर्ध्नि लक्ष्यते ॥ २५ ॥
तत्तुरीयं परं ब्रह्म ज्योतिर्दीपो घटे यथा ।
तथा हृत्पद्मनिलयं ध्यायेन्नित्यं जपेन्नरः ॥ २६ ॥
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ २७ ॥
एतदेकाक्षरं ब्रह्म एतदेकाक्षरं परं ।
एतदेकाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ २८ ॥
छन्दोऽस्य देवी गायत्री अन्तर्य्यामी ऋषिः स्मृतः ।

देवता परमात्मास्य नियोगो भुक्तिमुक्तये ॥ २९ ॥
भूरग्न्यात्मने हृदयं भुवः प्राजापत्यात्मने ।
शिरः स्वःसूर्य्यात्मने च शिखा कवचमुच्यते ॥ ३० ॥
ओंभूर्भुवः स्वःकवचं सत्यात्मने ततोऽस्त्रकं ।
विन्यस्य पूजयेद्विष्णुं जपेद्वै भुक्तिमुक्तये ॥ ३१ ॥
जुहुयाच्च तिलाज्यादि सर्वं सम्पद्यते नरे ।
यस्तु द्वादशसाहस्रं जपमन्वहमाचरेत् ॥ ३२ ॥
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ।
अनिमादि कोटिजप्यात्तच्चात्सारस्वतादिकं ॥ ३३ ॥
वैदिकस्तान्त्रिको मिश्रो विष्णौर्वै त्रिविधो मखः ।
त्रयानामीप्सितेनैकविधिना हरिमर्च्चयेत् ॥ ३४ ॥
प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयेत् ।
स याङ्गतिमवाप्नोति न तां क्रतुशतैरपि ॥ ३५ ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ३६ ॥

इत्याग्नेये महापुराणे यमनियमा नामै-
कसप्तत्यधिकंत्रिशततमोऽध्यायः ।

---

## अथ द्विसप्तत्यधिकत्रिशततमोऽध्यायः ।

———000———

### आसनप्राणायामप्रत्याहाराः ।

अग्निरुवाच । आसनं कमलाद्युक्तं तद्बद्ध्वा चिन्तयेत्परं ।
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥ १ ॥
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरं ।
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ॥ २ ॥
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ।
समकायशिरोग्रीवं धारयन्नचलं स्थिरः ॥ ३ ॥
सम्प्रेक्ष्य नासिकाग्रं स्वन्दिशश्चानवलोकयन् ।
पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः ॥ ४ ॥
ऊरुभ्यामुपरिस्थाप्य बाहू तिर्यक् प्रयत्नतः ।
दक्षिणं करपृष्ठञ्च न्यसेद्वामतलोपरि ॥ ५ ॥
उन्नम्य शनकैर्वक्त्रं मुखं विष्टभ्य चाग्रतः ।
प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनं ॥ ६ ॥
नासिकापुटमङ्गुल्या पीड्यैकेन परेण च ।
औदरं रेचयेद्वायुं रेचनाद्रेचकः स्मृतः ॥ ७ ॥
बाह्येन वायुना देहं दृतिवत् पूरयेद्यथा ।
तथा पूर्णश्च सन्तिष्ठेत् पूरणात् पूरकः स्मृतः ॥ ८ ॥
न भुञ्चति न गृह्णाति वायुमन्तर्बहिःस्थितम् ।
सम्पूर्णकुम्भवत्तिष्ठेदचलः स तु कुम्भकः ॥ ९ ॥

कन्यकः(१) सकृदुद्घातः स वै द्वादशमात्रिकः।
मध्यमश्च द्विरुद्घातश्चतुर्विंशतिमात्रिकः॥ १०॥
उत्तमश्च त्रिरुद्घातः षट्त्रिंशत्तालमात्रिकः।
स्वेदकम्पाभिघातानां जननश्चोत्तमोत्तमः॥ ११॥
अजितोऽवारुहेद्भूमिं हिक्काश्वासादयस्तथा।
जिते प्राणे स्वल्पदोषविण्मूत्रादि प्रजायते॥ १२॥
आरोग्यं शीघ्रगामित्वमुत्साहः स्वरसौष्ठवम्।
बलवर्णप्रसादश्च सर्वदोषक्षयः फलं॥ १३॥
जपध्यानं विनागर्भः स गर्भस्तत्समन्वितः।
इन्द्रियाणां जयार्थाय स गर्भं धारयेत्परं॥ १४॥
ज्ञानवैराग्ययुक्ताभ्यां प्राणायामवशेन च।
इन्द्रियांश्च विनिर्जित्य सर्वमेव जितं भवेत्॥ १५॥
इन्द्रियाण्येव तत्सर्वं यत् स्वर्गनरकावुभौ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय च॥ १६॥
शरीरं रथमित्याहुरिन्द्रियाण्यस्य वाजिनः।
मनश्च सारथिः प्रोक्तः प्राणायामः कशः(२) स्मृतः॥ १७॥
ज्ञानवैराग्यरश्मिभ्यां सायया विधृतं मनः।
शनैर्निश्चलतामेति प्राणायामैकसंहितम्॥ १८॥
जलविन्दुं कुशाग्रेण मासे मासे पिवेत्तु यः।
संवत्सरशतं साग्रं प्राणायामश्च तत्समः॥ १९॥
इन्द्रियाणि प्रसक्तानि प्रविश्य विषयोदधौ।

---

१ कन्यस इति ख०।
२ प्राणायामोऽङ्कुश इति ग०।

आहृत्य यो निगृह्णाति प्रत्याहारः स उच्यते ॥ २० ॥
उद्धरेदात्मनात्मानं मज्जमानं यथाम्भसि ।
भोगनद्यतिवेगेन(१) ज्ञानवृक्षं समाश्रयेत् ॥ २१ ॥

इत्याग्नेये महापुराणे आसनप्राणायामप्रत्याहारा नाम द्विसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

## अथ त्रिसप्तत्यधिकत्रिशततमोऽध्यायः ।

ध्यानम् ।

अग्निरुवाच । ध्यै चिन्तायां स्मृतो धातुर्विष्णुचिन्ता मुहुर्मुहुः ।
अनाक्षिप्तेन मनसा ध्यानमित्यभिधीयते ॥ १ ॥
आत्मनः समनस्कस्य मुक्ताशेषोपधस्य च ।
ब्रह्मचिन्तासमा शक्तिर्ध्यानं नाम तदुच्यते ॥ २ ॥
ध्येयालम्बनसंस्थस्य सदृशप्रत्ययस्य च ।
प्रत्ययान्तरनिर्मुक्तः प्रत्ययो ध्यानमुच्यते ॥ ३ ॥
ध्येयावस्थितचित्तस्य प्रदेशे यत्र कुत्रचित् ।
ध्यानमेतत्समुद्दिष्टं प्रत्ययस्यैकभावना ॥ ४ ॥
एवं ध्यानसमायुक्तः स्वदेहं यः परित्यजेत् ।
कुलं स्वजनमित्राणि समुद्धृत्य हरिर्भवेत् ॥ ५ ॥
एवं मुहूर्त्तमर्धं वा ध्यायेद् यः श्रद्धया हरिं ।
सोपि यां गतिमाप्नोति न तां सर्वैर्महामखैः ॥ ६ ॥

१ भोगमद्यभिवेगेनेति ख० ।

ध्याता ध्यानं तथा ध्येयं यच्च ध्यानप्रयोजनं ।
एतच्चतुष्टयं ज्ञात्वा योगं युञ्जीत तत्त्ववित् ॥ ७ ॥
योगाभ्यासाज्जवैश्मूर्त्तिरैश्वर्य्यञ्चाष्टधा महत् ।
ज्ञानवैराग्यसम्पन्नः श्रद्दधानः क्षमान्वितः ॥ ८ ॥
विष्णुभक्तः सदोत्साही ध्यातेत्थं पुरुषः स्मृतः ।
मूर्त्तामूर्त्तं परम्ब्रह्म हरेर्ध्यानं हि चिन्तनम् ॥ ९ ॥
सकलो निष्कलो ज्ञेयः सर्वज्ञः परमो हरिः ।
अणिमादिगुणैश्वर्य्यं मुक्तिर्ध्यानप्रयोजनम् ॥ १० ॥
फलेन योजको विष्णुरतो ध्यायेत् परेश्वरं ।
गच्छंस्तिष्ठन् स्वपन् जाग्रदुन्मिषन् निमिषन्नपि ॥ ११ ॥
शुचिर्वाप्यशुचिर्वापि ध्यायेत् सततमीश्वरम् ।
स्वदेहायतनस्यान्ते मनसि स्थाप्य केशवम् ॥ १२ ॥
हृत्पद्मपीठिकामध्ये ध्यानयोगेन(१) पूजयेत् ।
ध्यानयज्ञः परः शुद्धः सर्वदोषविवर्ज्जितः ॥ १३ ॥
तेनेष्ट्वा मुक्तिमाप्नोति बाह्यशुद्धैश्च नाध्वरैः ।
हिंसादोषविमुक्तित्वाद्विशुद्धिश्चित्तसाधनः ॥ १४ ॥
ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः ।
तस्मादशुद्धं सन्त्यज्य ह्यनित्यं बाह्यसाधनं ॥ १५ ॥
यज्ञाद्यं कर्म्म सन्त्यज्य योगमत्यर्थमभ्यसेत् ।
विकारमुक्तमव्यक्तं भोग्यभोगसमन्वितं ॥ १६ ॥
चिन्तयेद्धृदये पूर्वं क्रमादादौ गुणत्रयं ।
तमः प्रच्छाद्य रजसा सत्त्वेन च्छादयेद्रजः ॥ १७ ॥

---

१ ध्यानमार्गेणेति ख०, ञ० च०।

ध्यायेत्त्रिमण्डलं पूर्वं कृष्णं रक्तं सितं क्रमात् ।
सत्त्वोपाधिगुणातीतः पुरुषः पञ्चविंशकः (१) ॥ १८ ॥
ध्येयमेतदशुद्धञ्च त्यक्त्वा शुद्धं विचिन्तयेत् ।
ऐश्वर्य्यं पङ्कजं दिव्यं पुरुषोपरि संस्थितं ॥ १९ ॥
द्वादशाङ्गुलविस्तीर्णं शुद्धं विकशितं सितम् ।
नालमष्टाङ्गुलं तस्य नाभिकन्दसमुद्भवं ॥ २० ॥
पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् ।
कर्णिकाकेशरं नालं ज्ञानवैराग्यमुत्तमम् ॥ २१ ॥
विष्णुधर्म्मश्च तत्कन्दमिति पद्मं विचिन्तयेत् ।
तद्धर्म्मज्ञानवैराग्यं शिवैश्वर्य्यमयं परं ॥ २२ ॥
ज्ञात्वा पद्मासनं सर्वं सर्वदुःखान्तमाप्नुयात् ।
तत्पद्मकर्णिकामध्ये शुद्धदीपशिखाकृतिं (२) ॥ २३ ॥
अङ्गुष्ठमात्रममलं ध्यायेदोङ्कारमीश्वरं ।
कदम्बगोलकाकारं तारं रूपमिव स्थितं ॥ २४ ॥
ध्यायेद्वा रश्मिजालेन दीप्यमानं समन्ततः ।
प्रधानं पुरुषातीतं स्थितं पद्मस्थमीश्वरं ॥ २५ ॥
ध्यायेज्जपेच्च सततमोङ्कारं परमक्षरं ।
मनःस्थित्यर्थमिच्छन्ति स्थूलध्यानमनुक्रमात् । २६ ॥
तद्भूतं निश्चलीभूत लभेत् सूक्ष्मेऽपि संस्थितं ।
नाभिकन्दे स्थितं नालं दशाङ्गुलसमायतं ॥ २७ ॥
नालेनाष्टदलं पद्मं द्वादशाङ्गुलविस्तृतं ।

१ सत्त्वोपाधिसमायुक्तः सदा ध्येयय केशव इति ख० ।
२ शुभ्रदीपशिखाकृतिमिति ख०, ग० च ।

सकर्णिके केसराले सूर्य्यसोमाग्निमण्डलं ॥ २८ ॥
अग्निमण्डलमध्यस्थः शङ्खचक्रगदाधरः ।
पद्मी चतुर्भुजो विष्णुरथ वाष्टभुजो हरिः ॥ २९ ॥
शार्ङ्गाक्षवलयधरः पाशाङ्कुशधरः परः ।
स्वर्णवर्णः श्वेतवर्णः सश्रीवत्सः सकौस्तुभः ॥ ३० ॥
वनमाली स्वर्णहारी स्फुरन्मकरकुण्डलः ।
रत्नोज्ज्वलकिरीटश्च पीताम्बरधरो महान् ॥ ३१ ॥
सर्व्वाभरणभूषाढ्यो वितस्तिर्वा यथेच्छया ।
अहं ब्रह्म ज्योतिरात्मा वासुदेवो विमुक्त ओं ॥ ३२ ॥
ध्यानाच्छ्रान्तो जपेन्मन्त्रं जपाच्छ्रान्तश्च चिन्तयेत् ।
जपध्यानादियुक्तस्य विष्णुः शीघ्रं प्रसीदति ॥ ३३ ॥
जपयज्ञस्य वै यज्ञाः कलां नार्हन्ति षोड़शीं ।
जपिनं नोपसर्पन्ति व्याधयश्चाधयो ग्रहाः ।
भुक्तिर्मुक्तिर्मृत्युजयो जपेन प्राप्नुयात् फलं (१) ॥ ३४ ॥
इत्याग्नेये महापुराणे ध्यानं नाम त्रिसप्तत्यधिक-

त्रिशततमोऽध्यायः ॥

---

१ प्राप्नुयाद्दिरिमिति ख० ।　प्राप्यते फलमिति ग० ।

## अथ चतुःसप्तत्यधिकत्रिशततमोऽध्यायः।



### धारणा।

अग्निरुवाच। धारणा मनसो ध्येये संस्थितिर्ध्यानवद्द्विधा।
मूर्त्तामूर्तहरिध्यानमनोधारणतो हरिः ॥ १ ॥
यद्बाह्यावस्थितं लक्ष्यं तस्मान्न चलते मनः।
तावत् कालं प्रदेशेषु धारणा मनसि स्थितिः ॥ २ ॥
कालावधि परिच्छिन्नं देहे संस्थापितं मनः।
न प्रच्यवति यल्लक्ष्याद्धारणा साऽभिधीयते ॥ ३ ॥
धारणा द्वादशायामा ध्यानं द्वादशधारणाः।
ध्यानं द्वादशकं यावत्समाधिरभिधीयते ॥ ४ ॥
धारणाभ्यासयुक्तात्मा यदि प्राणैर्विमुच्यते।
कुलैकविंशमुत्तार्य्य स्वर्य्याति परमं पदं (१) ॥ ५ ॥
यस्मिन् यस्मिन् भवेदङ्गे योगिनां व्याधिसम्भवः।
तत्तदङ्गं धिया व्याप्य धारयेत्तत्त्वधारणं ॥ ६ ॥
आग्नेयी वारुणी चैव ऐशानी चामृतात्मिका।
साग्निः शिखा फडन्ता च विष्णोः कार्य्या द्विजोत्तम ॥ ७ ॥
नाड़ीभिर्विकटं दिव्यं शूलाग्रं वेधयेच्छुभम्।
पादाङ्गुष्ठात् कपालान्तं रश्मिमण्डलमावृतं ॥ ८ ॥

---

१ स्वयं याति परं पदमिति ख०।

तिर्य्यक्चाधोर्द्धभागेभ्य: प्रयात्योऽतीव तेजसा (१)।
चिन्तयेत् साधकेन्द्रस्तं यावत्सर्वं महामुने ॥ ९ ॥
भस्मीभूतं शरीरं स्वमतश्चैवोपसंहरेत्।
शीतश्लेष्मादय: पापं विनश्यन्ति द्विजातय: ॥ १० ॥
शिरो·धीरश्च (२) कारश्च कण्ठं चाधोमुखे स्मरेत्।
ध्यायेदच्छिन्नचित्तात्मा भूयो भूतेन चात्मना ॥ ११ ॥
स्फुरच्छीकरसंस्पर्शप्रभूते हिमगामिभि:।
धाराभिरखिलं विश्वमापूर्य्य भुवि चिन्तयेत् ॥ १२ ॥
ब्रह्मरन्ध्राच्च संक्षोभाद्यावदाधारमण्डलम्।
सुषुम्नान्तर्गतो भूत्वा संपूर्णेन्दुकृतालयं ॥ १३ ॥
संप्लाव्य हिमसंस्पर्शतोयेनामृतमूर्त्तिना।
क्षुत्पिपासाक्रमप्रायसन्तापपरिपीड़ित: ॥ १४ ॥
धारयेद्वारुणीं मन्त्री तुष्ट्यर्थं चाप्यतन्द्रित:।
वारुणीधारणा प्रोक्ता ऐशानीधारणां शृणु ॥ १५ ॥
व्योम्नि ब्रह्ममये पद्मे प्राणापाने क्षयङ्गते।
प्रसादं चिन्तयेद् विष्णोर्यावच्चिन्ता क्षयं गता ॥ १६ ॥
महाभावञ्जपेत् सर्व्वं ततो व्यापक ईश्वर:।
अर्द्धेन्दुं परमं शान्तं निराभासनिरञ्जनं ॥ १७ ॥
असत्यं सत्यमाभाति तावत्सर्वं चराचरं।
यावत् स्वस्पन्दरूपन्तु न दृष्टं गुरुवक्त्रत: ॥ १८ ॥
दृष्टे तस्मिन् परे तत्त्वे आब्रह्म.सचराचरं।

---

१ पाठोऽयमादर्शदोषेण दुष्ट:।

२ शीरश्च मि ख०।

प्रमादमानमेतस्य ध्यानहृत्पद्मकल्पनं ॥ १९ ॥
मात्रमोदकवत्सर्वं जपहोमार्चनादिकं ।
विष्णुमन्त्रेण वा कुर्य्यादमृतां धारणां वदे ॥ २० ॥
संपूर्णेन्दुनिभं ध्यायेत् कमलं तन्त्रिमुष्टिगं ।
शिरःस्थं चिन्तयेद् यत्नाच्छशाङ्कायुतवर्चसं ॥ २१ ॥
सम्पूर्णमण्डलं व्योम्नि शिवकल्लोलपूरितं ।
तथा हृत्कमले ध्यायेत्तन्मध्ये स्वतनुं स्मरेत् ।
साधको विगतक्लेशो जायते धारणादिभिः ॥ २२ ॥
इत्याग्नेये महापुराणे धारणा नाम चतुःसप्तत्यधिक-
त्रिशततमोऽध्यायः ॥

---

## अथ पञ्चसप्तत्यधिकत्रिशततमोऽध्यायः ।

———ooo———

### समाधिः ।

अग्निरुवाच । यदात्ममात्रं निर्भासं स्तिमितोदधिवत् स्थितं ।
चैतन्यरूपवद्ध्यानं तत् समाधिरिहोच्यते ॥ १ ॥
ध्यायन्मनः सन्निवेश्य यस्तिष्ठेदचलस्थिरः ।
निर्वातानलवद्योगी समाधिस्थः प्रकीर्त्तितः ॥ २ ॥
न शृणोति न चाघ्राति न पश्यति न वक्ष्यति ।
न च स्पर्शं विजानाति न सङ्कल्पयते मनः ॥ ३ ॥
न चाभिमन्यते किञ्चिन्न च बुध्यति काष्ठवत् ।
एवमीश्वरसंलीनः समाधिस्थः स गीयते ॥ ४ ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
ध्यायतो विष्णुमात्मानं समाधिस्तस्य योगिनः॥ ५॥
उपसर्गाः प्रवर्त्तन्ते दिव्याः सिद्धिप्रसूचकाः।
पातितः श्रावणो धातुर्दर्शनस्वाङ्गवेदनाः॥ ६॥
प्रार्थयन्ति च तं देवा भोगैर्दिव्यैश्च योगिनं।
नृपाश्च पृथिवीदानैर्धनैश्च सुधनाधिपाः॥ ७॥
वेदादिसर्व्वशास्त्रञ्च स्वयमेव प्रवर्त्तते।
अभीष्टच्छन्दोविषयं काव्यञ्चास्य प्रवर्त्तते॥ ८॥
रसायनानि दिव्यानि दिव्याश्चौषधयस्तथा।
समस्तानि च शिल्पानि कलाः सर्वाश्च विन्दति॥ ९॥
सुरेन्द्रकन्या इत्याद्या गुणाश्च प्रतिभादयः।
तृणवत्तान्त्यजेद् यस्तु तस्य विष्णुः प्रसीदति॥ १०॥
अणिमादिगुणैश्वर्य्यः शिष्ये ज्ञानं प्रकाश्य च।
भुक्त्वा भोगान् यथेच्छातस्तनुन्त्यक्त्वालयात्ततः॥ ११॥
तिष्ठेत् स्वात्मनि विज्ञान आनन्दे ब्रह्मणीश्वरे।
मलिनो हि यथादर्श आत्मज्ञानाय न क्षमः॥ १२॥
सर्वाश्रयाग्निजे देहे देही विन्दति वेदनां।
योगयुक्तस्तु सर्व्वेषां योगान्नाप्नोति वेदनां॥ १३॥
आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथात्मैको ह्यनेकेषु जलाधारेष्विवांशुमान्॥ १४॥
ब्रह्मखानिलतेजांसि जलभूक्षितिधातवः।
इमे लोका एष आत्मा तस्माच्च सचराचरं॥ १५॥

मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटं ।
करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥ १६ ॥
करणान्येवमादाय तासु तास्विह योनिषु ।
सृजत्यात्मानमात्मैवं सम्भूय करणानि च ॥ १७ ॥
कर्मणा दोषमोहाभ्यामिच्छयैव स बध्यते ।
ज्ञानाद्विमुच्यते जीवो धर्माद् योगी न रोगभाक् ॥ १८ ॥
वर्त्याधारस्नेहयोगाद् यथा दीपस्य संस्थितिः ।
विक्रियापि च दृष्टैवमकाले प्राणसंक्षयः ॥ १९ ॥
अनन्ता रश्मयस्तस्य दीपवद् यः स्थितो हृदि ।
सितासिताः कद्रुनीलाः कपिलाः पीतलोहिताः ॥ २० ॥
ऊर्द्धमेकः स्थितस्तेषां यो भित्त्वा सूर्य्यमण्डलं ।
ब्रह्मलोकमतिक्रम्य तेन याति पराङ्गतिं ॥ २१ ॥
यदस्यान्यद्रश्मिशतमूर्द्धमेव व्यवस्थितं ।
तेन देवनिकायानि धामानि प्रतिपद्यते ॥ २२ ॥
ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ।
इह कर्मोपभोगाय तैः स सञ्चरते हि सः ॥ २३ ॥
बुद्धीन्द्रियाणि सर्वाणि मनः कर्मेन्द्रियाणि च ।
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि ॥ २४ ॥
अव्यक्त आत्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते ।
ईश्वरः सर्वभूतस्थ सन्नसन् सदसच्च सः ॥ २५ ॥
बुद्धेरुत्पत्तिरव्यक्ता ततोऽहङ्कारसम्भवः ।
तस्मात् खादीनि जायन्ते एकोत्तरगुणानि तु ॥ २६ ॥

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः ।
यो यस्मिन्नाश्रितश्चैषां स तस्मिन्नेव लीयते ॥ २७ ॥
सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्त्तिताः ।
रजस्तमोभ्यामाविष्टश्चक्रवद्भ्राम्यते हि सः ॥ २८ ॥
अनादिरादिमान् यश्च स एव पुरुषः परः ।
लिङ्गेन्द्रियैरुपग्राह्यः स विकार उदाहृतः ॥ २९ ॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं भवेत् ॥ ३० ॥
पितृयानोपवीथ्याश्च यदगस्त्यस्य चान्तरं ।
तेनाग्निहोत्रिणो यान्ति प्रजाकामा दिवं प्रति ॥ ३१ ॥
ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः ।
अष्टाशीतिसहस्राणि मुनयो गृहमेधिनः ॥ ३२ ॥
पुनरावर्त्तने बीजभूता धर्म्मप्रवर्त्तकाः ।
सप्तर्षिनागवीथ्याश्च देवलोकं समाश्रिताः ॥ ३३ ॥
तावन्त एव मुनयः सर्वारम्भविवर्ज्जिताः ।
तपसा ब्रह्मचर्य्येण सङ्गत्यागेन मेधया ॥ ३४ ॥
यत्र यत्रावतिष्ठन्ते यावदाहूतसंप्लवं ।
वेदानुवचनं यज्ञा ब्रह्मचर्यं तपो दमः ॥ ३५ ॥
श्रद्धोपवासः सत्यत्वमात्मनो ज्ञानहेतवः ।
स त्वाश्रमैर्निदिध्यास्यः समस्तैरेवमेव तु ॥ ३६ ॥
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ।
य एवमेनं विन्दन्ति ये चारण्यकमाश्रिताः ॥ ३७ ॥
उपासते द्विजाः सत्यं श्रद्धया परया युताः ।

क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरं ॥ ३८ ॥
अयनन्देवलोकञ्च सवितारं सविद्युतं ।
ततस्तान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् ॥ ३९ ॥
करोति पुनरावृत्तिस्तेषामिह न विद्यते ।
यज्ञेन तपसा दानैर्ये हि स्वर्गजितो जनाः ॥ ४० ॥
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ।
पितृलोकं चन्द्रमसं नभो वायुं जलं महीं ॥ ४१ ॥
क्रमात्ते सम्भवन्तीह पुनरेव व्रजन्ति च ।
एतद्यो न विजानाति मार्गद्वितयमात्मनः ॥ ४२ ॥
दन्दशूकः पतङ्गो वा भवेत्कीटोऽथवा कृमिः ।
हृदये दीपवद्ब्रह्मध्यानाज्जीवो मृतो भवेत् ॥ ४३ ॥
न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ ४४ ॥

इत्याग्नेये महापुराणे समाधिर्नाम पञ्चसप्तत्यधिक
त्रिशततमोऽध्यायः ।

## अथ षट्सप्तत्यधिकत्रिशततमोऽध्यायः।

———oo———

### ब्रह्मज्ञानं।

अग्निरुवाच। ब्रह्मज्ञानं प्रवक्ष्यामि संसाराज्ञानमुक्तये।
अयमात्मा परं ब्रह्म अहमस्मीति मुच्यते॥ १॥
देह आत्मा न भवति दृश्यत्वाच्च घटादिवत्।
प्रसुप्ते मरणे देहादात्माऽन्यो ज्ञायते ध्रुवं॥ २॥
देहः स चेद्व्यवहरेदविकार्य्यादिसन्निभः।
चक्षुरादीनीन्द्रियाणि नात्मा वै करणं त्वतः॥ ३॥
मनो धीरपि आत्मा न दीपवत् करणं त्वतः।
प्राणोऽप्यात्मा न भवति सुषुप्ते चित्प्रभावतः॥ ४॥
जाग्रत्स्वप्ने च चैतन्यं सङ्कीर्णत्वान्न बुध्यते।
विज्ञानरहितः प्राणः सुषुप्ते ज्ञायते यतः॥ ५॥
अतो नात्मेन्द्रियं तस्मादिन्द्रियादिकमात्मनः।
अहङ्कारोऽपि नैवात्मा देहवद्व्यभिचारतः॥ ६॥
उक्तेभ्यो व्यतिरिक्तोऽयमात्मा सर्वहृदि स्थितः।
सर्वद्रष्टा च भोक्ता च नक्तमुज्ज्वलदीपवत्॥ ७॥
समाध्यारम्भकाले च एवं सञ्चिन्तयेन्मुनिः।
यतो ब्रह्मण आकाशं खाद्वायुर्वायुतोऽनलः॥ ८॥
अग्नेरापो जलात्पृथ्वी ततः सूक्ष्मं शरीरकं।
अपञ्चीकृतभूतेभ्य आसन् पञ्चीकृतान्यतः॥ ९॥

स्थूलं शरीरं ध्यात्वास्मात्लयं ब्रह्मणि चिन्तयेत् ।
पञ्चीकृतानि भूतानि तत्कार्य्यञ्च विराट्स्मृतम् ॥ १० ॥
एतत् स्थूलं शरीरं हि आत्मनो ज्ञानकल्पितं ।
इन्द्रियैरथ विज्ञानं धीरा जागरितं विदुः ॥ ११ ॥
विश्वस्तदभिमानी स्यात् त्रयमेतदकारकं ।
अपञ्चीकृतभूतानि तत्कार्यं लिङ्गमुच्यते ॥ १२ ॥
संयुक्तं सप्तदशभिर्हिरण्यगर्भसंज्ञितं ।
शरीरमात्मनः सूक्ष्मं लिङ्गमित्यभिधीयते ॥ १३ ॥
जाग्रत्संस्कारजः स्वप्नः प्रत्ययो विषयात्मकः ।
आत्मा तदुपमानी स्यात्तैजसो ह्यप्रपञ्चतः ॥ १४ ॥
स्थूलसूक्ष्मशरीराख्यद्वयस्यैकं हि कारणं ।
आत्मा ज्ञानञ्च साभासं तदव्याहृतमुच्यते ॥ १५ ॥
न सन्नासन्न सदसन्नैतत्सावयवं न तत् ।
निर्गतावयवं नेति नाभिन्नं भिन्नमेव च ॥ १६ ॥
भिन्नाभिन्नं ह्यनिर्वाच्यं बन्धसंसारकारकं ।
एकं स ब्रह्म विज्ञानात् प्राप्तं नैव च कर्म्मभिः ॥ १७ ॥
सर्वात्मना हीन्द्रियाणां संहारः कारणात्मनां ।
बुद्धेः स्थानं सुप्तं स्यात्तद्द्वयस्याभिमानवान् ॥ १८ ॥
प्राज्ञ आत्मा त्रयञ्चैतत् मकारः प्रणवः स्मृतः ।
अकारश्च उकारोऽसौ मकारो ह्ययमेव च ॥ १९ ॥
अहं साक्षी च चिन्मात्रो जाग्रत्स्वप्नादिकस्य च ।
नाज्ञानञ्चैव तत्कार्यं संसारादिकबन्धनं ॥ २० ॥
नित्यशुद्धबुद्धमुक्तसत्यमानन्दमद्वयं ।

ब्रह्माहमस्म्यहं ब्रह्म परं ज्योतिर्विमुक्त ओं ॥ २१ ॥
अहं ब्रह्म परं ज्ञानं समाधिर्बन्धघातकः ।
चिरमानन्दकं ब्रह्म सत्यं ज्ञानमनन्तकं ॥ २२ ॥
अयमात्मा परम्ब्रह्म तद् ब्रह्म त्वमसीति च ।
गुरुणा बोधितो जीवो ह्यहं ब्रह्मास्मि वाह्यतः ॥ २३ ॥
सोऽसावादित्यपुरुषः सोऽसावहमखण्ड ओं ।
मुच्यतेऽसारसंसाराद्ब्रह्मज्ञो ब्रह्म तद्भवेत् ॥ २४ ॥

इत्याग्नेये महापुराणे ब्रह्मज्ञानं नाम षट्सप्तत्यधिक-
त्रिशततमोऽध्यायः ।

---

## अथ सप्तसप्तत्यधिकत्रिशततमोऽध्यायः ।

---

### ब्रह्मज्ञानं ।

अग्निरुवाच । अहं ब्रह्म परं ज्योतिः पृथिव्यवनलोज्झितं ।
अहं ब्रह्म परं ज्योतिर्वाय्वाकाशविवर्जितं ॥ १ ॥
अहं ब्रह्म परं ज्योतिरादिकार्यविवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्विराडात्मविवर्जितं ॥ २ ॥
अहं ब्रह्म परं ज्योतिर्जाग्रत्स्थानविवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्विश्वभावविवर्जितम् ॥ ३ ॥
अहं ब्रह्म परं ज्योतिराकाराचरवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्वाक्पाण्यङ्घ्रिविवर्जितम् ॥ ४ ॥

अहं ब्रह्म परं ज्योतिः पायूपस्थविवर्जितं ।
अहं ब्रह्म परं ज्योतिः श्रोत्रत्वक्चक्षुरुज्झितं ॥ ५ ॥
अहं ब्रह्म परं ज्योतीरसरूपविवर्जितम् ।
अहं ब्रह्म परं ज्योतिः सर्वगन्धविवर्जितं ॥ ६ ॥
अहं ब्रह्म परं ज्योतिर्जिह्वाघ्राणविवर्जितं ।
अहं ब्रह्म परं ज्योतिः स्पर्शशब्दविवर्जितं ॥ ७ ॥
अहं ब्रह्म परं ज्योतिर्मनोबुद्धिविवर्जितं ।
अहं ब्रह्म परं ज्योतिश्चित्ताहङ्कारवर्जितं ॥ ८ ॥
अहं ब्रह्म परं ज्योतिः प्राणापानविवर्जितं ।
अहं ब्रह्म परं ज्योतिर्व्यानोदानविवर्जितं ॥ ९ ॥
अहं ब्रह्म परं ज्योतिः समानपरिवर्जितं ।
अहं ब्रह्म परं ज्योतिर्जरामरणवर्जितं ॥ १० ॥
अहं ब्रह्म परं ज्योतिः शोकमोहविवर्जितं ।
अहं ब्रह्म परं ज्योतिः क्षुत्पिपासाविवर्जितं ॥ ११ ॥
अहं ब्रह्म परं ज्योतिः शब्दोद्भूतादिवर्जितं ।
अहं ब्रह्म परं ज्योतिर्हिरण्यगर्भवर्जितं ॥ १२ ॥
अहं ब्रह्म परं ज्योतिः स्वप्नावस्थाविवर्जितं ।
अहं ब्रह्म परं ज्योतिस्तैजसादिविवर्जितं ॥ १३ ॥
अहं ब्रह्म परं ज्योतिरपकारादिवर्जितं ।
अहं ब्रह्मपरं ज्योतिः सभाज्ञानविवर्जितं ॥ १४ ॥
अहं ब्रह्मपरं ज्योतिरध्याकृतविवर्जितं ।
अहं ब्रह्म परं ज्योतिः सत्त्वादिगुणवर्जितं ॥ १५ ॥
अहं ब्रह्मपरं ज्योतिः सदसद्भाववर्जितं ।

अहं ब्रह्म परं ज्योतिः सर्वावयववर्जितं ॥ १६ ॥
अहं ब्रह्म परं ज्योतिर्भेदाभेदविवर्जितं ।
अहं ब्रह्म परं ज्योतिः सुषुप्तिस्थानवर्जितम् ॥ १७ ॥
अहं ब्रह्म परं ज्योतिः प्राज्ञभावविवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्मकारादिविवर्जितम् ॥ १८ ॥
अहं ब्रह्म परं ज्योतिर्मानमेयविवर्जितम् ।
अहं ब्रह्म परं ज्योतिर्मितिमातृविवर्जितम् ॥ १९ ॥
अहं ब्रह्म परं ज्योतिः साक्षित्वादिविवर्जितम् ।
अहं ब्रह्म परं ज्योतिः कार्य्यकारणवर्जितम् ॥ २० ॥
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितं ।
जाग्रत् स्वप्नसुषुप्त्यादिमुक्तं ब्रह्म तुरीयकं ॥ २१ ॥
नित्यशुद्धबुद्धमुक्तं सत्यमानन्दमद्वयम् ।
ब्रह्माहमस्म्यहं ब्रह्म सविज्ञानं विमुक्त ओं ।
अहं ब्रह्म परं ज्योतिः समाधिर्मोक्षदः परः ॥ २२ ॥

इत्याग्नेये महापुराणे समाधिर्नाम सप्तसप्तत्यधिक-
त्रिशततमोऽध्यायः ॥

## अथाष्टसप्तत्यधिकत्रिशततमोऽध्यायः ।

### ब्रह्मज्ञानं ।

अग्निरुवाच । यज्ञैश्च देवानाप्नोति वैराजं तपसा पदं ।
ब्रह्मणः कर्मसन्न्यासाद्वैराग्यात् प्रकृतौ लयं ॥ १ ॥
ज्ञानात् प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ।
प्रीतितापविषादादेर्विनिवृत्तिर्विरक्तता ॥ २ ॥
सन्न्यासः कर्मणान्त्यागः कृतानामकृतैः सह ।
अव्यक्तादौ विशेषान्ते विकारोऽस्मिन्निवर्त्तते ॥ ३ ॥
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ।
परमात्मा च सर्वेषामाधारः परमेश्वरः ॥ ४ ॥
विष्णुनाम्ना च देवेषु वेदान्तेषु च गीयते ।
यज्ञेश्वरो यज्ञपुमान् प्रवृत्तैरिज्यते ह्यसौ ॥ ५ ॥
निवृत्तैर्ज्ञानयोगेन ज्ञानमूर्त्तिः स चेज्यते ।
ह्रस्वदीर्घप्लुताद्यन्तु वचस्तत्पुरुषोत्तमः ॥ ६ ॥
तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने ।
आगमोक्तं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥ ७ ॥
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ।
द्वे ब्रह्मणी वेदितव्ये ब्रह्मशब्दपरञ्च यत् ॥ ८ ॥
वेदादिविद्या ह्यपरमक्षरं ब्रह्मसत्परम् ।
तदेतद्भगवद्वाच्यमुपचारेऽर्च्चनेऽन्यतः ॥ ९ ॥
सम्भर्त्तेति तथा भर्त्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारोऽयं महामुने ॥ १० ॥

ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षसां भग इतीङ्गना ॥ ११ ॥
वसन्ति विष्णौ भुतानि स च धातुस्त्रिधात्मकः ।
एवं हरौ हि भगवान् शब्दोऽन्यत्रोपचारतः ॥ १२ ॥
उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिं ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥ १३ ॥
ज्ञानशक्तिः परैश्वर्य्यं वीर्य्यं तेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ १४ ॥
खाण्डिक्यजनकायाह योगं केशिध्वजः पुरा ।
अनात्मन्यात्मबुद्धिर्या चास्वमिति या मतिः ॥ १५ ॥
अविद्याभवसम्भूतिर्वीजमेतद्द्विधा स्थितम् ।
पञ्चभूतात्मके देहे देही मोहतमाश्रितः ॥ १६ ॥
अहमेतदितीत्युच्चैः कुरुते कुमतिर्मतिं ।
इत्थञ्च पुत्रपौत्रेषु तद्देहोत्पादितेषु च ॥ १७ ॥
करोति पण्डितः साम्यमनात्मनि कलेवरे ।
सर्व्वदेहोपकाराय कुरुते कर्म्म मानवः ॥ १८ ॥
देहश्चान्यो यदा पुंसस्तदा बन्धाय तत्परं ।
निर्व्वाणमय एवायमात्मा ज्ञानमयोऽमलः ॥ १९ ॥
दुःखाज्ञानमयोऽधर्मः प्रकृतेः स तु नात्मनः ।
जलस्य नाग्निना सङ्गः स्थालीसङ्गात्तथापि हि ॥ २० ॥
शब्दाद्ये कादिका धर्म्मास्तत्कृता वै महामुने ।
तथात्मा प्रकृतौ सङ्गादहंमानादिभूषितः ॥ २१ ॥
भजते प्राकृतान्धर्मान् अन्यस्तेभ्यो हि सोऽव्ययः ।

बध्नाय विषयासङ्गं मनो निर्विषयं धिये ॥ २२ ॥
विषयात्तत्समाकृष्य ब्रह्मभूतं हरिं स्मरेत् ।
आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुने ॥ २३ ॥
विचार्य स्वात्मनः शक्त्या लोहमाकर्षको यथा ।
आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ॥ २४ ॥
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ।
विनिष्पन्नः समाधिस्थः परं ब्रह्माधिगच्छति ॥ २५ ॥
यमैः सनियमैः स्थित्या प्रत्याहृत्या मरुज्जयैः ।
प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ॥ २६ ॥
वशीकृतैस्ततः कुर्य्यात् स्थितं चेतः शुभाश्रये ।
आश्रयश्चेतसो ब्रह्म मूर्त्तञ्चामूर्त्तकं द्विधा ॥ २७ ॥
सनन्दनादयो ब्रह्मभावभावनया युताः ।
कर्मभावनया चान्ये देवाद्याः स्थावरान्तकाः ॥ २८ ॥
हिरण्यगर्भादिषु च ज्ञानकर्मात्मिका द्विधा ।
त्रिविधा भावना प्रोक्ता विश्वं ब्रह्म उपास्यते ॥ २९ ॥
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरं ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्म संज्ञितम् ॥ ३० ॥
तच्च विष्णोः परं रूपमरूपस्याजमक्षरं ।
अशक्यं प्रथमं ध्यातुमतो मूर्त्तादि चिन्तयेत् ॥ ३१ ॥
सद्भावभावमापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥ ३२ ॥

इत्याग्नेये महापुराणे ब्रह्मज्ञानं नामाष्टसप्तत्यधिक-
त्रिशततमोऽध्यायः ॥

# अथोनाशीत्यधिकत्रिशततमोऽध्यायः ।

## अद्वैतब्रह्मविज्ञानं ।

अग्निरुवाच । अद्वैतब्रह्मविज्ञानं वक्ष्ये यद्भरतोऽगदत् ।
शालग्रामे तपश्चक्रे वासुदेवार्चनादिकृत् ॥ १ ॥
मृगसङ्गान्मृगो भूत्वा ह्यन्तकाले स्मरन् मृगं ।
जातिस्मरो मृगस्त्यक्त्वा देहं योगात्स्वतोऽभवत् ॥ २ ॥
अद्वैतब्रह्मभूतश्च जडवल्लोकमाचरन् ।
क्षत्ताऽसौ वीरराजस्य विष्टियोगममन्यत ॥ ३ ॥
उवाह शिबिकामस्य क्षत्तुर्वचनचोदितः ।
गृहीतो विष्टिना ज्ञानी उवाहात्मक्षयाय तं ॥ ४ ॥
ययौ जड़गतिः पश्चात् ये त्वन्ये त्वरितं ययुः ।
शीघ्रान् शीघ्रगतान् दृष्ट्वा अशीघ्रं तं नृपोऽब्रवीत् ॥ ५ ॥
राजोवाच । किं श्रान्तोऽस्यल्पमध्वान त्वयोढ़ा शिबिका मम ।
किमायाससहो न त्वं पीवानसि निरीक्ष्यसे ॥ ६ ॥
ब्राह्मण उवाच । नाहं पीवान्न वै वोढ़ा शिबिका भवतो मया ।
न श्रान्तोऽस्मि न चायासो वोढव्योऽसि महीपते ॥ ७ ॥
भूमौ पादयुगन्त्वास्ते जङ्घे पादद्वये स्थिते ।
ऊरू जङ्घाद्वयावस्थौ तदाधारं तथोदरम् ॥ ८ ॥
वक्षःस्थलं तथा बाहू स्कन्धौ चोदरसंस्थितौ ।
स्कन्धस्थितेयं शिबिका मम भारोऽत्र किं कृतः ॥ ९ ॥

शिविकायां स्थितश्चेदं देहं त्वदुपलक्षितं ।
तत्र त्वमहमप्यत्र प्रोच्यते चेदमन्यथा ॥ १० ॥
अहं त्वञ्च तथाऽन्ये च भूतैरुह्याम(१)पार्थिव ।
गुणप्रवाहपतितो गुणवर्गो हि यात्ययं ॥ ११ ॥
कर्म्मवश्या गुणाश्चैते सत्त्वाद्याः पृथिवीपते ।
अविद्यासञ्चितं कर्म्म तच्चाशेषेषु जन्तुषु ॥ १२ ॥
आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु ॥ १३ ॥
यदा नोपचयस्तस्य यदा नापचयो नृप ।
तदा पीवानसीति त्वं कया युक्त्या त्वयेरितं ॥ १४ ॥
भूजङ्घापादकट्यूरुजठरादिषु संस्थिता ।
शिविकेयं तथा स्कन्धे तदा भावःसमस्त्वया ॥ १५ ॥
तदन्यजन्तुभिर्भूप शिविकोत्थानकर्म्मणा ।
शैलद्रव्यगृहोत्थोपि पृथिवीसम्भवोपि वा ॥ १६ ॥
यथा पुंसः पृथग्भावः प्राकृतैः करणैर्नृप ।
सोढ़व्यः स महाभारः कतरो नृपते मया ॥ १७ ॥
यद्द्रव्या शिविका चेयं तद्द्रव्यो भूतसंग्रहः ।
भवतो मेऽखिलस्यास्य समत्वेनोपबृंहितः ॥ १८ ॥
तच्छ्रुत्वोवाच राजा तं गृहीत्वाङ्घ्री क्षमाप्य च ।
प्रसादं कुरु त्यक्त्वा मां शिविकां ब्रूहि शृण्वते ।
यो भवान् यन्निमित्तं वा यदागमनकारणम् ॥ १९ ॥
ब्राह्मण उवाच । श्रूयतां कोऽहमित्येतद्वक्तुं नैव च शक्यते ।

---

१ पाठोऽयं न समीचीनः ।

उपभोगनिमित्तश्च सर्वत्रागमनक्रिया ॥ २० ॥
सुखदुःखोपभोगौ तु तौ देहाद्युपपादकौ ।
धर्माधर्मोद्भवौ भोक्तुं जन्तुर्देशादिमृच्छति ॥ २१ ॥
राजोवाच । योऽस्ति सोऽहमिति ब्रह्मन् कथं वक्तुं न शक्यते ।
आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ॥ २२ ॥
ब्राह्मण उवाच । शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत् ।
अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥ २३ ॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान् कोऽहमित्येतद्विफलं वचः ॥ २४ ॥
त्वं राजा शिबिका चेयं वयं वाहाः पुरःसराः ।
अयञ्च भवतो लोको न सदेतन्नृपोच्यते ॥ २५ ॥
वृक्षाद्दारु ततश्चेयं शिबिका त्वदधिष्ठिता ।
का वृक्षसंज्ञा जातास्य दारुसंज्ञाथ वा नृप ॥ २६ ॥
वृक्षारूढ़ो महाराजो नायं वदति चेतनः ।
न च दारुणि सर्वस्त्वां ब्रवीति शिबिकागतं ॥ २७ ॥
शिबिकादारुसङ्घातो रचनास्थितिसंस्थितः ।
अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया ॥ २८ ॥
पुमान् स्त्री गौरयं वाजी कुञ्जरो विहगस्तरुः ।
देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ॥ २९ ॥
जिह्वा ब्रवीत्यहमिति दन्तौष्ठौ तालुकं नृप ।
एते नाहं यतः सर्व्वे वाङ्निपादनहेतवः ॥ ३० ॥
किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयं ।
तथापि वाङ्नाहमेतदुक्तं मिथ्या न युज्यते ॥ ३१ ॥

पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः ।
ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहं ॥ ३२ ॥
यदन्योऽस्ति परः कोपि मत्तः पार्थिवसत्तम ।
तदेषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥ ३३ ॥
परमार्थभेदो न नगो न पशुर्न च पादपः ।
शरीराश्च विभेदाश्च य एते कर्मयोनयः ॥ ३४ ॥
यस्तु राजेति यल्लोके यच्च राजभटात्मकम् ।
तच्चान्यच्च नृपेत्थन्तु न सत् सम्यगनामयं ॥ ३५ ॥
त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपोरिपुः ।
पत्न्याः पतिः पिता सूनोः कस्त्वां भूप वदाम्यहं ॥ ३६ ॥
त्वं किमेतच्छिरः किन्नु शिरस्तव तथोदरं ।
किमु पादादिकं त्वं वै तवैतत् किं महीपते ॥ ३७ ॥
समस्तावयवेभ्यस्त्वं पृथग्भूतो व्यवस्थितः ।
कोऽहमित्यत्र निपुणं भूत्वा चिन्तय पार्थिव ।
तच्छ्रुत्वोवाच राजा तमवधूतं द्विजं हरिं ॥ ३८ ॥
राजोवाच । श्रेयोऽर्थमुद्यतः प्रष्टुं कपिलर्षिमहं द्विज ।
तस्यांशः कपिलर्षेस्त्वं मत् कृते ज्ञानदो भुवि ।
ज्ञानवीच्युदधेर्यस्माद्यच्छ्रेयस्तच्च मे वद ॥ ३९ ॥
ब्राह्मण उवाच । भूयः पृच्छसि किं श्रेयः परमार्थन्न पृच्छसि ।
श्रेयांस्यपरमार्थानि अशेषाण्येव भूपते ॥ ४० ॥
देवताराधनं कृत्वा धनसम्पत्तिमिच्छति ।
पुत्रानिच्छति राज्यञ्च श्रेयस्तस्यैव किं नृप ॥ ४१ ॥
विवेकिनस्तु संयोग. श्रेयो यः परमात्मनः ।

यज्ञादिका क्रिया न स्यात् नास्ति द्रव्योपपत्तिता॥ ४२ ॥
परमार्थात्मनोर्योगः परमार्थ इतीष्यते।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः॥ ४३ ॥
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः।
परं ज्ञानमयोऽसङ्गो गुणजात्यादिभिर्विभुः॥ ४४ ॥
निदाघऋतुसंवादं वदामि द्विज तं शृणु(१)।
ऋतुर्ब्रह्मसुतो ज्ञानी तच्छिष्योऽभूत् पुलस्त्यजः॥ ४५ ॥
निदाघः प्राप्तविद्योऽस्मान्नगरे वै पुरे स्थितः।
देविकायास्तटे तस्य तर्कयामास वै ऋतुः॥ ४६ ॥
दिव्ये वर्षसहस्रेऽगान्निदाघमवलोकितुं।
निदाघो वैश्वदेवान्ते भुक्त्वान्नं शिष्यमब्रवीत्।
भुक्तान्ते तृप्तिरुत्पन्ना तुष्टिदा साऽक्षया यतः॥ ४७ ॥
ऋतुरुवाच। क्षुदस्ति यस्य भुक्तेऽन्ने तुष्टिर्ब्राह्मण जायते।
न मे क्षुदभवत्तृप्तिं कस्मात्त्वं परिपृच्छसि॥ ४८ ॥
क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज।
पृष्टोऽहं यत्त्वया ब्रूयां(२)तृप्तिरस्त्येव मे सदा॥ ४९ ॥
पुमान् सर्वगतो व्यापी आकाशवदयं यतः।
अतोऽहं प्रत्यगात्मास्मीत्येतदर्थं भवेत् कथं(३)॥ ५० ॥
सोऽहं गन्ता(४) न चागन्ता नैकदेशनिकेतनः।
त्वं चान्यो न भवेन्नापि नान्यस्त्वत्तोऽस्मि वा प्यहं॥ ५१ ॥

---

१ निदाघऋतुसंवादमहं तव वद्ये शृणु इति ख०, ग० च।

२ ततः क्षुत्सम्भवाभावादिति ख०, ग० च।

३ कुतः कुत्र क्व गन्तास्मीत्येतदप्यर्थवत् कथमिति ख०, ग० च।

४ भोक्तेति क०।

मृण्मयं हि गृहं यद्वन्मृदालिप्तं स्थिरीभवेत् ।
पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः ॥ ५२ ॥
ऋतुरस्मि तवाचार्य्यः प्रज्ञादानाय ते द्विज ।
इहागतोऽहं यास्यामि परमार्थस्तवोदितः ॥ ५३ ॥
एकमेवमिदं विद्धि न भेदः सकलं जगत् ।
वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥ ५४ ॥
ऋतुर्वर्षसहस्रान्ते पुनस्तन्नगरं ययौ ।
निदाघं नगरप्रान्ते एकान्ते स्थितमब्रवीत् ।
एकान्ते स्थीयते कस्मान्निदाघं ऋतुरब्रवीत् ॥ ५५ ॥
निदाघ उवाच । भो विप्र जनसंवादो महानेष नरेश्वर ।
प्रविविक्षुः पुरं रम्यं तेनात्र स्थीयते मया ॥ ५६ ॥
ऋतुरुवाच । नराधिपोऽत्र कतमः कतमश्चेतरो जनः ।
कथ्यतां मे द्विजश्रेष्ठ त्वमभिज्ञो द्विजोत्तम ॥ ५७ ॥
योऽयं गजेन्द्रमुन्मत्तमद्रिशृङ्गसमुत्थितं ।
अधिरूढो नरेन्द्रोऽयं परिवारस्तथेतरः(१) ॥ ५८ ॥
गजो योऽयमधो ब्रह्मन्नुपर्य्येष स भूपतिः ।
ऋतुराह गजः कोऽत्र राजा चाह निदाघकः ॥ ५९ ॥
ऋतुर्निदाघ आरूढो दृष्टान्तं पश्य वाहनं ।
उपर्य्यहं यथा राजा त्वमधः कुञ्जरो यथा ॥ ६० ॥
ऋतुः(२)प्राह निदाघस्तं कतमस्त्वामहं वदे ।
उक्तो निदाघस्तत्त्वता प्राह मे त्वं गुरुर्ध्रुवम् ॥ ६१ ॥

---

१ आरूढोऽयं गजं राजा परलोकस्तथेतर इति ख०, ञ० च ।

२ क० पुस्तके सर्व्वत्र ऋभुरिति ऋतुस्थानीयः पाठः ।

नान्यस्माद्द्वैतसंस्कारसंस्कृतं मानसं तथा ।
ऋतुः प्राह निदाघन्तं ब्रह्मज्ञानाय चागतः ।
परमार्थं सारभूतमद्वैतं दर्शितं मया ॥ ६२ ॥

ब्राह्मण उवाच । निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ।
सर्वभूतान्यभेदेन ददृशे स तदात्मनि ॥ ६३ ॥
अवाप मुक्तिं ज्ञानात्स तथा त्वं मुक्तिमाप्स्यसि ।
एकः समस्तं त्वञ्चाहं विष्णुः सर्वगतो यतः ॥ ६४ ॥
पीतनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्मापि तथैकः स पृथक् पृथक् ॥ ६५ ॥

अग्निरुवाच । मुक्तिमवाप भवतो ज्ञानसारेण भूपतिः(१) ।
संसाराज्ञानवृक्षारिविज्ञानं ब्रह्मेति चिन्तय ॥ ६६ ॥

इत्याग्नेये महापुराणे अद्वैतब्रह्मविज्ञानं नामाशीत्यधिक त्रिशततमोऽध्यायः ॥

---

## अथाशीत्यधिकत्रिशततमोऽध्यायः ।

### गीतासारः ।

अग्निरुवाच । गीतासारं प्रवक्ष्यामि सर्वगीतोत्तमोत्तमं ।
कृष्णोऽर्जुनाय यमाह पुरा वै भुक्तिमुक्तिदं(२) ॥ १ ॥

श्रीभगवानुवाच । गतासुरगतासुर्वा न शोच्यो देहवानजः ।
आत्माऽजरोऽमरोऽभेद्यस्तस्माच्छोकादिकं त्यजेत् ॥ २ ॥

१ ज्ञानात् मुक्तिमवाप भूपतिरिति ख॰ ग॰ च॰ ।
२ पठतां भुक्तिमुक्तिदमिति ख॰ ।

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् कामस्ततः क्रोधः क्रोधात्सम्मोह एव च ॥ ३ ॥
सम्मोहात् स्मृतिविभ्रंशो बुद्धिनाशात् प्रणश्यति ।
दुःसङ्गहानिः सत्सङ्गान्मोक्षकामी च कामयुत् ॥ ४ ॥
कामत्यागादात्मनिष्ठः स्थिरप्रज्ञस्तदोच्यते ।
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥ ५ ॥
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ ६ ॥
नैव तस्य कृते नार्थो नाकृते नेह कश्चन ।
तत्त्ववित्तु महाबाहो गुनकर्मविभागयोः ॥ ७ ॥
गुणा गुणेषु वर्त्तन्ते इति मत्वा न सज्जते ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यति ॥ ८ ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।
ब्रह्मण्याधाय कर्माणि सङ्गन्त्यक्त्वा करोति यः ॥ ९ ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ १० ॥
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ११ ॥
न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ।
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ १२ ॥
मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १३ ॥
चतुर्विधा भजन्ते मां ज्ञानी चैकत्वमास्थितः ।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥ १४ ॥
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ।
अधिभूतं क्षरोभावः पुरुषश्चाधिदैवतं ॥ १५ ॥
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ।
अन्तकाले स्मरन्मांश्च मद्भावं यात्यसंशयः ॥ १६ ॥
यं यं भावं स्मरन्नन्ते त्यजेद्देहन्तमाप्नुयात् ।
प्राणं न्यस्य भ्रुवोर्मध्ये अन्ते प्राप्नोति मत्परम् ॥ १७ ॥
ओमित्येकाक्षरं ब्रह्म वदन् देहं त्यजंस्तथा ।
ब्रह्मादिस्तम्बपर्य्यन्ताः सर्व्वे मम विभूतयः ॥ १८ ॥
श्रीमन्तश्चोर्जिताः सर्वे ममांशाः(१) प्राणिनः स्मृताः ।
अहमेको विश्वरूप इति ज्ञात्वा विमुच्यते ॥ १९ ॥
क्षेत्रं शरीरं यो वेत्ति क्षेत्रज्ञः स प्रकीर्तितः ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २० ॥
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥ २१ ॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ २२ ॥
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवं ।
आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥ २३ ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं ॥ २४ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।

१ ममाङ्गा इति ख० ।

नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ २५ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ २६ ॥
अध्यात्मज्ञाननित्यत्वन्तत्त्वज्ञानानुदर्शनं ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ २७ ॥
ज्ञेयं यत्तत् प्रवक्ष्यामि यं ज्ञात्वाऽमृतमश्नुते ।
अनादि परमं ब्रह्म सत्त्वं नाम तदुच्यते ॥ २८ ॥
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २९ ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ ३० ॥
वहिरन्तश्च भूतानामचरञ्चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थञ्चान्तिकेऽपि यत् ॥ ३१ ॥
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च विज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ ३२ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितं ॥ ३३ ॥
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ ३४ ॥
अन्ये त्वेवमजानन्तो श्रुत्वान्येभ्य उपासते ।
तेपि चाशु तरन्त्येव मृत्युं श्रुतिपरायणाः ॥ ३५ ॥
सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतो ज्ञानमेव च ॥ ३६ ॥

गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते।
मानावमानमित्रारितुल्यस्त्यागी स निर्गुणः॥ ३७॥
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययं।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ ३८॥
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
अहिंसादिः क्षमा चैव दैवीसम्पत्तितो नृणां॥ ३९॥
न शौचं नापि वाचारो ह्यासुरीसम्पदोद्भवः।
नरकत्वात् क्रोधलोभकामस्तस्मात्त्रयं त्यजेत्॥ ४०॥
यज्ञस्तपस्तथा दानं सत्त्वाद्यैस्त्रिविधं स्मृतम्।
आयुः सत्त्वं बलारोग्यसुखायान्नन्तु सात्त्विकं॥ ४१॥
दुःखशोकामयायान्नं तीक्ष्णरूक्षन्तु राजसं।
अमेध्योच्छिष्टपूत्यन्नं तामसं नीरसादिकं॥ ४२॥
यष्टव्यो विधिना यज्ञो निष्कामाय स सात्त्विकः।
यज्ञः फलाय दम्भात्मो राजसस्तामसः क्रतुः॥ ४३॥
श्रद्धामन्त्रादिविध्युक्तं तपः शारीरमुच्यते।
देवादिपूजाऽहिंसादि वाङ्मयं तप उच्यते॥ ४४॥
अनुद्वेगकरं वाक्यं सत्यं स्वाध्यायसज्जपः।
मानसं चित्तसंशुद्धेर्मौनमात्मविनिग्रहः॥ ४५॥
सात्त्विकञ्च तपोऽकामं फलाद्यर्थन्तु राजसं।
तामसं परपीड़ायै सात्त्विकं दानमुच्यते॥ ४६॥
देशादौ चैव दातव्यमुपकाराय राजसं।
अदेशादाववज्ञातं तामसं दानमीरितं॥ ४७॥

ओँतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
यज्ञदानादिकं कर्म्म भुक्तिमुक्तिप्रदं नृणां ॥ ४८ ॥
अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलं ।
भवत्यत्यागिनां(१) प्रेत्य न तु सन्न्यासिनां क्वचित् ॥ ४९ ॥
तामसः कर्मसंयोगात् मोहात्क्लेशभयादिकात् ।
राजसः सात्त्विकोऽकामात् पञ्चैते कर्महेतवः ॥ ५० ॥
अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम् ।
त्रिविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमं ॥ ५१ ॥
एकं ज्ञानं सात्त्विकं स्यात् पृथग् ज्ञानन्तु राजसं ।
अतत्त्वार्थन्तामसं स्यात् कर्माकामाय सात्त्विकं ॥ ५२ ॥
कामाय राजसं कर्म मोहात् कर्म तु तामसं ।
सिद्ध्यसिद्ध्योः समः कर्त्ता सात्त्विको राजसोऽल्यपि ॥ ५३ ॥
शठोऽलसस्तामसः स्यात् कार्य्यादिधीश्च सात्त्विकी ।
कार्य्यार्थं सा राजसी स्याद्विपरीता तु तामसी ॥ ५४ ॥
मनोधृतिः सात्त्विकी स्यात् प्रीतिकामेति राजसी ।
तामसी तु प्रशोकाद्यौ सुखं सत्त्वात्तदन्तगं ॥ ५५ ॥
सुखं तद्राजसञ्चाग्रे अन्ते दुःखन्तु तामसं ।
अतः प्रवृत्तिर्भूतानां येन सर्वमिदन्ततं ॥ ५६ ॥
स्वकर्मणा तमभ्यर्च्य विष्णुं सिद्धिञ्च विन्दति ।
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥ ५७ ॥

---

१ भवत्यशोगिनामिति ख॰ ।

ब्रह्मादिस्तम्बपर्य्यन्तं जगद्विष्णुञ्च वेत्ति यः ।
सिद्धिमाप्नोति भगवद्भक्तो भागवतो ध्रुवं ॥ ५८ ॥

इत्याग्नेये महापुराणे गीतासारो नामाशीत्यधिकत्रिशततमोऽध्यायः ॥

---

## अथैकाशीत्यधिकत्रिशततमोऽध्यायः ।

---

### यमगीता ।

अग्निरुवाच । यमगीतां प्रवक्ष्यामि उक्ता या नाचिकेतसे ।
पठतां शृण्वतां भुक्त्यै मुक्त्यै मोक्षार्थिनां सतां ॥ १ ॥
यम उवाच । आसनं शयनं यानपरिधानगृहादिकम् ।
वाञ्छत्यहोऽतिमोहेन सुस्थिरं स्वयमस्थिरः ॥ २ ॥
भोगेषु शक्तिः सततं तथैवात्मावलोकनं ।
श्रेयः परं मनुष्याणां कपिलोद्गीतमेव हि ॥ ३ ॥
सर्व्वत्र समदर्शित्वं निर्म्ममत्वमसङ्गता ।
श्रेयः परं मनुष्याणां गीतं पञ्चशिखेन हि ॥ ४ ॥
आगर्भजन्मबाल्यादिवयोऽवस्थादिवेदनं ।
श्रेयः परं मनुष्याणां गङ्गाविष्णुप्रगीतकं ॥ ५ ॥
आध्यात्मिकादिदुःखानामाद्यन्तादिप्रतिक्रिया ।
श्रेयः परं मनुष्याणां जनकोद्गीतमेव च ॥ ६ ॥
अभिन्नयोर्भेदकरः प्रत्ययो यः परात्मनः ।
तच्छान्तिपरमं श्रेयो ब्रह्मोद्गीतमुदाहृतं ॥ ७ ॥

कर्त्तव्यमिति यत्कर्म्म ऋग्यजुःसामसंज्ञितं।
कुरुते श्रेयसे सङ्गान् जैगोषव्येण गीयते ॥ ८ ॥
हानिः सर्व्वविधित्सानामात्मनः सुखहैतुकी।
श्रेयः परं मनुष्याणां देवलोद्गीतमीरितं ॥ ९ ॥
कामत्यागात्तु विज्ञानं सुखं ब्रह्म परं पदं।
कामिनां न हि विज्ञानं सनकोद्गीतमेव तत् ॥ १० ॥
प्रवृत्तञ्च निवृत्तञ्च कार्य्यं कर्मपरोऽब्रवीत्।
श्रेयसां श्रेय एतद्धि नैष्कर्म्यं ब्रह्म तद्धरिः ॥ ११ ॥
पुमांश्चाधिगतज्ञानो भेदं नाप्नोति सत्तमः।
ब्रह्मणा विष्णुसंज्ञेन परमेणाव्ययेन च १२ ॥
ज्ञानं विज्ञानमास्तिक्यं सौभाग्यं रूपमुत्तमम्।
तपसा लभ्यते सर्वं मनसा यद्यदिच्छति ॥ १३ ॥
नास्ति विष्णुसमम्ध्येयं तपो नानशनात्परं।
नास्त्यारोग्यसमं धन्यं नास्ति गङ्गासमा सरित् ॥ १४ ॥
न सोऽस्ति बान्धवः कश्चिद्विष्णुं मुक्त्वा जगद्गुरुं।
अधश्चोर्द्ध्वं हरिश्चाग्रे देहेन्द्रियमनोमुखे ॥ १५ ॥
इत्येवं संस्मरन् प्राणान् यस्त्यजेत्स हरिर्भवेत्।
यत्तद् ब्रह्म यतः सर्वं यत्सर्वं तस्य संस्थितम् ॥ १६ ॥
अग्राह्यकमनिर्द्देश्यं सुप्रतिष्ठञ्च यत्परं।
परापरस्वरूपेण विष्णुः सर्व्वहृदि स्थितः ॥ १७ ॥
यज्ञेशं यज्ञपुरुषं केचिदिच्छन्ति तत्परं।
केचिद्विष्णुं हरं केचित् केचिद् ब्रह्माणमीश्वरं ॥ १८ ॥
इन्द्रादिनामभिः केचित् सूर्य्यं सोमञ्च कालकम्।

ब्रह्मादिस्तम्बपर्य्यन्तं जगद्विष्णुं वदन्ति च ॥ १९ ॥
स विष्णुः परमं ब्रह्म यतो नावर्त्तते पुनः ।
सुवर्णादिमहादानपुण्यतीर्थावगाहनैः ॥ २० ॥
ध्यानैर्व्रतैः पूजया च धर्म्मश्रुत्या तदाप्नुयात् ।
आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥ २१ ॥
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांश्चेषु गोचरान् ॥ २२ ॥
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ॥ २३ ॥
न तत्पदमवाप्नोति संसारञ्चाधिगच्छति ।
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ॥ २४ ॥
स तत्पदमवाप्नोति यस्माद्भूयो न जायते ।
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥ २५ ॥
सोऽध्वानं परमाप्नोति तद्विष्णोः परमं पदम् ।
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥ २६ ॥
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ २७ ॥
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।
एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते ॥ २८ ॥
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।
यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञानमात्मनि ॥ २९ ॥
ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनि ।
ज्ञात्वा ब्रह्मात्मनोर्योगं यमाद्यैर्ब्रह्म सद्भवेत् ॥ ३० ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाश्च नियमाः पञ्च शौचं सन्तोषसत्तपः ॥ ३१ ॥
स्वाध्यायेश्वरपूजा च आसनं पद्मकादिकं ।
प्राणायामो वायुजयः प्रत्याहारः स्वनिग्रहः ॥ ३२ ॥
शुभे ह्येकत्र विषये चेतसो यत् प्रधारणं ।
निश्चलत्वात्तु धीमद्भिर्धारणा द्विज कथ्यते ॥ ३३ ॥
पौनःपुन्येन तत्रैव विषयेष्वेव धारणा ।
ध्यानं स्मृतं समाधिस्तु अहं ब्रह्मात्मसंस्थितिः ॥ ३४ ॥
घटध्वंसाद्यथाकाशमभिन्नं नभसा भवेत् ।
मुक्तो जीवो ब्रह्मणैवं सद्ब्रह्म ब्रह्म वै भवेत् ॥ ३५ ॥
आत्मानं मन्यते ब्रह्म जीवो ज्ञानेन नान्यथा ।
जीवो ह्यज्ञानतत्कार्य्यमुक्तः स्यादजरामरः ॥ ३६ ॥
अग्निरुवाच । वशिष्ठ यमगीतोक्ता पठतां भुक्तिमुक्तिदा ।
आत्यन्तिको लयः प्रोक्तो वेदान्तब्रह्मधीमयः ॥ ३७ ॥

इत्याग्नेये महापुराणे यमगीता नामैकाशीत्यधिक-
त्रिशततमोऽध्यायः ॥

---

# अथ द्व्यशीत्यधिकत्रिशततमोऽध्यायः ।

—————000@000—————

## आग्नेयपुराणमाहात्म्यं ।

अग्निरुवाच । आग्नेयं ब्रह्मरूपन्ते पुराणं कथितं मया ।
सप्रपञ्चं निष्प्रपञ्चं विद्याद्वयमयं महत् ॥ १ ॥
ऋग्यजुःसामाथर्वाख्या विद्या विष्णुर्जगज्जनिः ।
छन्दः शिक्षा व्याकरणं निघण्टुज्योतिराख्यकाः ॥ २ ॥
निरुक्तधर्मशास्त्रादि मीमांसान्यायविस्तराः ।
आयुर्वेदपुराणाख्या धनुर्गन्धर्वविस्तराः ॥ ३ ॥
विद्या सैवार्थशास्त्राख्या वेदान्ताऽन्या हरिर्महान् ।
इत्येषा चापरा विद्या परविद्याऽक्षरं परं ॥ ४ ॥
यस्य भावोऽखिलं विष्णुस्तस्य नो बाधते कलिः ।
अनिष्ट्वा तु महायज्ञानकृत्वापि पितृस्वधां ॥ ५ ॥
कृष्णमभ्यर्चयन्भक्त्या नैनसो भाजनं भवेत् ।
सर्वकारणमत्यन्तं विष्णुं ध्यायन्न सीदति ॥ ६ ॥
अन्यतन्त्रादिदोषोत्थो विषयाकृष्टमानसः ।
कृत्वापि पापं गोविन्दं ध्यायन्पापैः प्रमुच्यते ॥ ७ ॥
तद्ध्यानं यत्र गोविन्दः सा कथा यत्र केशवः ।
तत् कर्म यत्तदर्थीयं किमन्यैर्बहुभाषितैः ॥ ८ ॥
न तत् पिता तु पुत्राय न शिष्याय गुरुर्द्विज ।
परमार्थं परं ब्रूयाद्यदेतत्ते मयोदितं ॥ ९ ॥
संसारे भ्रमता लभ्यं पुत्रदारधनं वसु ।

सुहृदश्च तथैवान्ये नोपदेशो द्विजेदृशः ॥ १० ॥
किं पुत्रदारैर्मित्रैर्वा किं मित्रक्षेत्रबान्धवैः ।
उपदेशः परो बन्धुरीदृशो यो विमुक्तये ॥ ११ ॥
द्विविधो भूतमार्गोयं दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथासुरः ॥ १२ ॥
एतत् पवित्रमारोग्यं धन्यं दुःस्वप्ननाशनं ।
सुखप्रीतिकरं नृणां मोक्षकृद्यत्तवेरित ॥ १३ ॥
येषां गृहेषु लिखितमाग्नेयं हि पुराणकं ।
पुस्तकं स्थास्यति सदा तत्र नेशुरुपद्रवाः ॥ १४ ॥
किं तीर्थैर्गोप्रदानैर्वा किं यज्ञैः किमुपोषितैः ।
आग्नेयं ये हि शृण्वन्ति अहन्यहनि मानवाः ॥ १५ ॥
यो ददाति तिलप्रस्थं सुवर्णस्य च माषकं ।
शृणोति श्लोकमेकञ्च आग्नेयस्य तदाप्नुयात् ॥ १६ ॥
अध्यायपठनञ्चास्य गोप्रदानाद् विशिष्यते ।
अहोरात्रकृतं पापं श्रोतुमिच्छोः प्रणश्यति ॥ १७ ॥
कपिलानां शते दत्ते यद् भवेज्ज्येष्ठपुष्करे ।
तदाग्नेयं पुराणं हि पठित्वा फलमाप्नुयात् ॥ १८ ॥
प्रवृत्तञ्च निवृत्तञ्च धर्मं विद्याद्वयात्मकं ।
आग्नेयस्यपुराणस्य शास्त्रस्यास्य समं न हि ॥ १९ ॥
पठन्नाग्नेयकं नित्यं शृण्वन् वापि पुराणकं ।
भक्तो वशिष्ठ मनुजः सर्वपापैः प्रमुच्यते ॥ २० ॥
नोपसर्गा न चानर्था न चौरारिभयं गृहे ।
तस्मिन् स्याद् यत्र चाग्नेयपुराणस्य हि पुस्तकं ॥ २१ ॥

न गर्भहारिणीभीतिर्न च बालग्रहा गृहे ।
यत्राग्नेयं पुराणं स्यान्न पिशाचादिकं भयं ॥ २२ ॥
शृण्वन्विप्रो वेदवित् स्यात् क्षत्रियः पृथिवीपतिः ।
ऋद्धिं प्राप्नोति वैश्यश्च शूद्रश्चारोग्यमृच्छति ॥ २३ ॥
यः पठेत्शृणुयान्नित्यं समदृग्विष्णुमानसः ।
ब्रह्माग्नेयं पुराणं सत्तत्र नश्यन्त्युपद्रवाः ॥ २४ ॥
दिव्यान्तरीक्षभौमाद्या दुःस्वप्नाद्यभिचारकाः ।
यच्चान्यद्दुरितं किञ्चित्तत्सर्वं हन्ति केशवः ॥ २५ ॥
पठतः शृण्वतः पुंसः पुस्तकं यजतो महत् ।
आग्नेयं श्रीपुराणं हि हेमन्ते यः शृणोति वै ॥ २६ ॥
प्रपूज्य गन्धपुष्पाद्यैरग्निष्टोमफलं लभेत् ।
शिशिरे पुण्डरीकस्य वसन्ते चाश्वमेधजम् ॥ २७ ॥
ग्रीष्मे तु वाजपेयस्य राजसूयस्य वर्षति ।
गोसहस्रस्य शरदि फलं तत्पठतो ह्युतौ ॥ २८ ॥
आग्नेयं हि पुराणं यो भक्त्याग्रे पठते हरेः ।
सोऽर्चयेच्च वशिष्ठेह ज्ञानयज्ञेन केशवम् ॥ २९ ॥
यस्याग्नेयपुराणस्य पुस्तकं तस्य वै जयः ।
लिखितं पूजितं गेहे भुक्तिर्मुक्तिः करेऽस्ति हि ॥ ३० ॥
इति कालाग्निरूपेण गीतं मे हरिणा पुरा ।
आग्नेयं हि पुराणं वै ब्रह्मविद्याद्वयास्पदम् ।
विद्याद्वयं वशिष्ठेदं भक्तेभ्यः कथयिष्यसि ॥ ३१ ॥
वशिष्ठ उवाच । व्यासाग्नेयपुराणं ते रूपं विद्याद्वयात्मकं ।
कथितं ब्रह्मणे विष्णोरग्निना कथितं यथा ॥ ३२ ॥

सार्द्धं देवैश्च मुनिभिर्मह्यं सर्व्वार्थदर्शकं।
पुराणमग्निना गीतमाग्नेयं ब्रह्मसम्मितं ॥ ३३ ॥
यः पठेच्छृणुयाद्व्यास लिखेद्वा लेखयेदपि ।
श्रावयेत्पाठयेद्वापि पूजयेद्धारयेदपि ॥ ३४ ॥
सर्व्वपापविनिर्मुक्तः प्राप्तकामो दिवं व्रजेत् ।
लेखयित्वा पुराणं यो दद्याद्विप्रेभ्य उत्तमं ॥ ३५ ॥
स ब्रह्मलोकमाप्नोति कुलानां शतमुद्धरेत् ।
एकं श्लोकं पठेद्यस्तु पापपङ्काद्विमुच्यते ॥ ३६ ॥
तस्माद्व्यास सदा श्राव्यं शिष्येभ्यः सर्वदर्शनं।
शुकाद्यैर्मुनिभिः सार्द्धं श्रोतुकामैः पुराणकं ॥ ३७ ॥
आग्नेयं पठितं ध्यातं शुभं स्याद् भुक्तिमुक्तिदं ।
अग्नये तु नमस्तस्मै येन गीतं पुराणकं॥ ३८ ॥
व्यास उवाच । वसिष्ठेन पुरा गीतं सूतैतत्ते मयोदितं ।
पराविद्याऽपराविद्यास्वरूपं परमं पदम् ॥ ३९ ॥
आग्नेयं दुर्लभं रूपं प्राप्यते भाग्यसंयुतैः ।
ध्यायन्तो ब्रह्म चाग्नेयं पुराणं हरिमागताः ॥ ४० ॥
विद्यार्थिनस्तथा विद्यां राज्यं राज्यार्थिनो गताः ।
अपुत्राः पुत्रिनः सन्ति नाश्रया आश्रयं गताः ॥ ४१ ॥
सौभाग्यार्थी च सौभाग्यं मोक्षं मोक्षार्थिनो गताः ।
लिखन्तो लेखयन्तश्च निष्पापाश्च श्रियं गताः ॥ ४२ ॥
शुकपैलमुखैः सूत आग्नेयन्तु पुराणकं।
रूपं चिन्तय यातासि भुक्तिं मुक्तिं न संशयः ॥ ४३ ॥
श्रावय त्वञ्च शिष्येभ्यो भक्तेभ्यश्च पुराणकम् ।

सूत उवाच । व्यासप्रसादादाग्नेयं पुराणं श्रुतमादरात् ॥ ४४ ॥
आग्नेयं ब्रह्मरूपं हि मुनयः शौनकादयः ।
भवन्तो नैमिषारण्ये यजन्तो हरिमीश्वरं ॥ ४५ ॥
तिष्ठन्तः श्रद्धया युक्तास्तस्माद्वः समुदीरितम् ।
अग्निना प्रोक्तमाग्नेयं पुराणं वेदसम्मितं ॥ ४६ ॥
ब्रह्मविद्याद्वयोपेतं भुक्तिदं मुक्तिदं महत् ।
नास्मात्परतरः सारो नास्मात्परतरः सुहृत् ॥ ४७ ॥
नास्मात्परतरो ग्रन्थो नास्मात्परतरा गतिः ।
नास्मात्परतरं शास्त्रं नास्मात्परतरा श्रुतिः ॥ ४८ ॥
नास्मात्परतरं ज्ञानं नास्मात्परतरा स्मृतिः ।
नास्मात्परो ह्यागमोऽस्ति नास्माद्विद्या पराऽस्ति हि ॥४९॥
नास्मात्परः स्यात्सिद्धान्तो नास्मात्परममङ्गलम् ।
नास्मात्परोऽस्ति वेदान्तः पुराणं परमन्त्विदं ॥ ५० ॥
नास्मात्परतरं भूमौ विद्यते वस्तु दुर्लभम् ।
आग्नेये हि पुराणेऽस्मिन् सर्वविद्याः प्रदर्शिताः ॥ ५१ ॥
सर्वे मत्स्यावताराद्या गीता रामायणन्त्विह ।
हरिवंशो भारतञ्च नव सर्गाः प्रदर्शिताः ॥ ५२ ॥
आगमो वैष्णवो गीतः पूजादीक्षाप्रतिष्ठया ।
पवित्रारोहणादीनि प्रतिमालक्षणादिकं ॥ ५३ ॥
प्रासादलक्षणाद्यश्च मन्त्रा वै भुक्तिमुक्तिदाः ।
शैवागमस्तदर्थश्च शाक्तेयः सौर एव च ॥ ५४ ॥
मण्डलानि च वास्तुश्च मन्त्राणि विविधानि च ।
प्रतिसर्गश्चानुगीतो ब्रह्माण्डपरिमण्डलं ॥ ५५ ॥

गीतो भुवनकोषश्च द्वीपवर्षादिनिम्नगाः।
गयागङ्गाप्रयागादि तीर्थमाहात्म्यमीरितं ॥ ५६ ॥
ज्योतिश्चक्रं ज्योतिषादि गीतो युद्धजयार्णवः।
मन्वन्तरादयो गीताः धर्मा वर्णादिकस्य च ॥ ५७ ॥
अशौचं द्रव्यशुद्धिश्च प्रायश्चित्तं प्रदर्शितं।
राजधर्म्मा दानधर्म्मा व्रतानि विविधानि च ॥ ५८ ॥
व्यवहाराः शान्तयश्च ऋग्वेदादिविधानकं।
सूर्य्यवंशः सोमवंशो धनुर्वेदश्च वैद्यकं ॥ ५९ ॥
गान्धर्व्ववेदोऽर्थशास्त्रं मीमांसा न्यायविस्तरः।
पुराणसंख्यामाहात्म्यं छन्दो व्याकरणं स्मृतं ॥ ६० ॥
अलङ्कारो निघण्टुश्च शिक्षाकल्प इहोदितः स्मृतः।
नैमित्तिकः प्राकृतिको लय आत्यन्तिकः ॥ ६१ ॥
वेदान्तं ब्रह्मविज्ञानं योगो ह्यष्टाङ्ग ईरितः।
स्तोत्रं पुराणमाहात्म्यं विद्या ह्यष्टादश स्मृताः ॥ ६२ ॥
ऋग्वेदाद्याः परा ह्यत्र पराविद्याक्षरं परं।
सप्रपञ्चं निष्प्रपञ्चं ब्रह्मणो रूपमीरितं ॥ ६३ ॥
इदं पञ्चदशसाहस्रं शतकोटिप्रविस्तरं।
देवलोके दैवतैश्च पुराणं पठ्यते सदा ॥ ६४ ॥
लोकानां हितकामेन संक्षिप्योक्तमग्निना।
सर्वं ब्रह्मेति जानीध्वं मुनयः शौनकादयः ॥ ६५ ॥
शृणुयाच्छ्रावयेद्वापि यः पठेत्पाठयेदपि।
लिखेल्लेखापयेद्वापि पूजयेत्कीर्त्तयेदपि ॥ ६६ ॥
पुराणपाठकञ्चैव पूजयेत् प्रयतो नृपः।

गोभूहिरण्यदानाद्यैर्वस्त्रालङ्कारतर्पणैः ॥ ६७ ॥
तं संपूज्य लभेच्चैव पुराणश्रवणात् फलं ।
पुराणान्ते च वै कुर्य्यादवश्यं द्विजभोजनं ॥ ६८ ॥
निर्म्मलः प्राप्तसर्व्वार्थः सकुलः स्वर्गमाप्नुयात् ।
शरयन्त्रं पुस्तकाय सूत्रं वै पत्रसञ्चयं ॥ ६९ ॥
पट्टिकाबन्धवस्त्रादि दद्याद्‌ यः स्वर्गमाप्नुयात् ।
यो दद्याद्ब्रह्मलोकी स्यात् पुस्तकं यस्य वै गृहे ॥ ७० ॥
तस्योत्पातभयं नास्ति भुक्तिमुक्तिमवाप्नुयात् ।
यूयं स्मरत चाग्नेयं पुराणं रूपमैश्वरं ।
सूतो गतः पुजितस्तैः शौनकाद्या हरिं ययुः ॥ ७१ ॥

इत्याग्नेये महापुराणे आग्नेयपुराणमाहात्म्यं नाम
द्वाशीत्यधिकत्रिशततमोऽध्यायः ॥

---

समाप्तमाग्नेयं पुराणं ।

# अथाग्निपुराण परिशिष्टम्।

———000@000———

अग्निपुराणस्य कखारादि-चिह्नित-दशसंख्य आदर्श-पुस्तकानां मध्ये नवसु आदर्शपुस्तकेषु यमगीताध्यायात् परं पुराण-माहात्माध्यायेन पुस्तकं सम्पूर्णं। ग-चिह्नित-पुस्तके तु यम-गीताध्यायात् परं अतिरिक्तत्रयस्त्रिंशत् संख्यक सृष्टिप्रकरणाद्य-ध्याया वर्त्तन्ते। उक्ताध्यायानां नवसु आदर्शपुस्तकेषु अविद्य-मानत्वात् प्रामाण्यं सन्दिग्धं। प्रामाण्येपि स्थानविशेषे विलुप्ता-क्षरापरिशुद्धग-चिह्नितैकमात्रादर्शपुस्तकमवलम्व्य उक्तातिरिक्ता-ध्यायात्रमुद्रापणे समर्थौ नाभूवं। परन्त्वेतद्विज्ञापनाय ग-चिह्नितादर्शपुस्तकमात्रस्थितातिरिक्त कतिपयाध्याया यथाशक्ति परिशोध्य परिशिष्टरूपेण मुद्रापिताः। गचिह्नितादर्शपुस्तकस्य विलुप्ताक्षरत्वादपरिशुद्धत्वाच्च अस्य परिशिष्टस्य वहुषु स्थानेषु असाधुपाठा वर्त्तन्ते इति।

प्रथमोऽध्यायः।

सूत उवाच। ब्रह्मा भूत्वा जगत्सृष्टौ नरसिंहः प्रवर्त्तते।

तथा ते कथयिष्यामि भरद्वाज निबोध मे॥ १॥

नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः।

उत्पन्नः प्रोच्यते प्रियंप्रियामरोपचारतः(१)॥ २॥

---

१ पाठोऽयं आदर्शाक्षरविलोपेन शोधयितुमशक्यः।

सृष्ट्वा जगद्व्योम धराम्बु तोयं
प्रजास्तु सृष्ट्वा सकलास्तथेशः ।
नैमित्तिकाख्ये प्रलये समस्तं
कृत्वावशेते हरिरादिदेवः ॥ २५ ॥

इत्याग्नेये महापुराणे सृष्टि-प्रकरणं नाम प्रथमो ऽध्यायः ।

---

## अथ द्वितीयोऽध्यायः ।

—— 000 ——

सूत उवाच । अत्र सुप्तस्य देवस्य नाभौ पद्ममजायत ।
तस्मिन् पद्मे महाभाग वेदवेदाङ्गपारगः ॥ १ ॥
ब्रह्मोत्पन्नः स तेनोक्तः प्रजाः सृज महामते ।
एवमुक्त्वा तिरोभावं गतो नारयणः प्रभुः ॥ २ ॥
तथेत्युक्त्वा गतं देवं विष्णुं ब्रह्मा विचिन्तयन् ।
आस्ते किञ्चिज्जगद्वेत् नाध्यगच्छत किञ्चन ॥ ३ ॥
तावत्तस्य महान् क्रोधो ब्रह्मणोऽभून्महात्मनः ।
ततो रुद्रः समुत्पन्नस्तस्याङ्के रोषसम्भवः ॥ ४ ॥
रुदन् स कथितस्तेन ब्रह्मणाऽव्यक्तजन्मना ।
नाम मे देहि चेत्युक्तस्तस्य रुद्रेत्यसौ ददौ ॥ ५ ॥
सोऽपि तेन सृजस्वेति प्रोक्तो लोकमिमं पुनः ।
असक्तश्चाम्भसि सलिले ममज्ज तपसे धृतः ॥ ६ ॥

तस्मिन् सलिलमग्ने तु पुनरन्यं प्रजापतिं ।
ब्रह्मा ससर्ज भूतेभ्यो दक्षिणाङ्गुष्ठतोऽपरं ॥ ७ ॥
दक्षं वामे ततोऽङ्गुष्ठे तु तस्य पत्नीमजीजनत् ।
स तस्यां जनयामास मनुं स्वायम्भुवं प्रभुं ॥ ८ ॥
तस्मात् सम्भाविता सृष्टिः प्रजानां ब्रह्मणा तथा ।
इत्येवं कथिता सृष्टिर्मया ते मुनिसत्तम ।
सृजतो जगदीशस्य किम्भूयः श्रोतुमिच्छसि ॥ ९ ॥
भरद्वाज उवाच । संक्षेपेणैतदाख्यातं त्वया मे लोमहर्षण ।
विस्तरेण पुनर्ब्रूहि आदिसृष्टिं महामते ॥ १० ॥
सूत उवाच । तथैतदण्डावसाने निशासुप्तोत्थितः प्रभुः ।
सत्त्वोद्रिक्तस्तदा ब्रह्मा शून्यं लोकमवैक्षत ॥ ११ ॥
नारायणः परोऽचिन्त्यः पूर्व्वेषामपि पूर्वजः ।
ब्रह्मस्वरूपो भगवान् अनादिः सर्वसम्भवः ॥ १२ ॥
इमञ्च देहवल्लोहा(१) श्लोकं नारायणं प्रति ।
ब्रह्मस्वरूपिनं देवं जगतः प्रभवाव्ययं ॥ १३ ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य तत् पूर्वं तेन नारायणः स्मृतः ॥ १४ ॥
सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।
अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः ॥ १५ ॥
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञकः (२) ।
अविद्याः पञ्च पूर्वेषां प्रादुर्भूता महात्मनः ॥ १६ ॥

---

१ आदर्शाक्षरविलोपात् पाठोऽयं शोधयितुमशक्यः ।
२ पाठोऽयं न साधुः ।

पञ्चधाऽवस्थितः सर्गो ध्यायतः प्रतिबोधनात् ।
मुख्यसर्गः स विज्ञेयः सर्गविद्भिर्विचक्षणैः ॥ १७ ॥
पुनरन्यस्तथा तस्य ध्यायतः सर्गमुत्तमं ।
तिर्य्यक्स्रोतः समुत्पन्नस्तिर्य्यक्स्रोतं+ +स्मृतः ॥ १८ ॥
पश्वादयस्ते विख्याता उत्पथग्राहिणस्तु ते ।
तमप्यसाधकं मत्वा तिर्य्यक्स्रोतश्चतुर्मुखः ॥ १९ ॥
ऊर्द्ध्वस्रोतस्तृतीयस्तु पार्थिवोर्द्धमवर्त्तत ।
ततोर्द्ध्वचारिणो देवाः सत्त्वसर्गसमुद्भवाः ॥ २० ॥
यदा तुष्टो न सर्गश्च तदा तस्थौ प्रजापतिः ।
असाधकांस्तु तान्मत्वा मुख्यसर्गसमुद्भवान् ॥ २१ ॥
ततः स चिन्तयन् विप्र अर्वाक्स्रोतस्तु स स्मृतः ।
अर्वाक्स्रोतस्तथोत्पन्ना मनुष्याः साधका मताः ॥ २२ ॥
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोधिकाः ।
तस्मात्ते दुःखबहुला भूयो भूयश्च कारिणः ॥ २३ ॥
इत्येते कथिताः सर्गाः ते तव मुनिसत्तम ।
प्रथमो महतः सर्गस्तन्मात्राणां द्वितीयकः ॥ २४ ॥
वैकारिकस्तृतीयस्तु समस्त ऐन्द्रियकः स्मृतः ।
मुख्यसर्गः चतुर्थस्तु × × × स्थावराः स्मृताः ॥ २५ ॥
तिर्य्यक्स्रोतस्तु यः प्रोक्तस्तिर्य्यग्योनिः स पञ्चमः ।
ततोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु सप्तमः ॥ २६ ॥
ततोर्वाक्स्रोतसः श्रेष्ठसप्तमः सप्तमानुषः ।
अष्टमोनुग्रहः सर्गः स सात्त्विकस्तामसो हि सः ॥ २७ ॥
नवमो रुद्रसर्गस्तु नवसर्गाः प्रजापतेः ।

पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रियः स्मृताः ॥ २८ ॥
प्राकृतावैकृताश्चैव जगतोमूलहेतवः।
सृजतो ब्रह्मणः सृष्टिरुत्पन्ना ये मयेरिताः॥ २९ ॥
ततो विकारस्तु परापवेगः
शक्त्या प्रविश्याथ ससर्ज सर्वं।
नारायणः सर्वगतैकरूपः
ब्रह्मादिरूपैर्जगदेकनाथः ॥ ३० ॥
इत्याग्नेये महापुराणे सृष्टि-प्रकरणं नाम
द्वितीयोऽध्यायः।

---

## अथ तृतीयोऽध्यायः।

### सृष्टि-प्रकरणं।

भरद्वाजउवाच। नवधा सृष्टिरुत्पन्ना ब्रह्मणोऽव्यक्तजन्मनः।
कथं सा ववृधे सूत एतत्कथय मेऽधुना ॥ १ ॥
सूत उवाच। प्रथमं ब्रह्मणा सृष्टा रुद्रस्थानु तपोधनाः।
सनकादयश्च ये सृष्टा मरीच्यादय एव च ॥ २ ॥
मरीचिरत्रिश्च तथा अङ्गिराः पुलहः क्रतुः।
पुलस्त्यश्च महातेजाः प्रचेता भृगुरेव च ॥ ३ ॥
नारदो दशमश्चैव वशिष्ठश्च महाद्युतिः।
सनकादयो निवृत्याख्ये ते च धर्मे नियोजिताः ॥ ४ ॥

प्रवृत्त्याख्ये मरीच्याद्या मोक्षैके नारदो मुनिः ।
योऽसौ प्रजापतिस्तस्य दक्षो नामाङ्गसम्भवः ॥ ५ ॥
तस्य दौहित्रवंशेन जगदेतच्चराचरं ।
देवाश्च दानवाश्चैव गन्धर्वोरगपक्षिणः ॥ ६ ॥
सर्व्वे दक्षस्य कन्यासु जाताः परमधार्म्मिकाः ।
चतुर्विधानि भूतानि स्थावराणि चराणि च ॥ ७ ॥
वृद्धिं गतानि तान्येव मनुसर्गोद्भवानि च ।
मनुसर्गस्य कर्त्तारो मरीच्याद्या महर्षयः ।
वसिष्ठाद्या महाभागा ब्रह्मणो मानसोद्भवाः ॥ ८ ॥

सर्गेषु भूतानि वियन्मुखानि
कालेन चासौ सृजते परात्मा ।
स एव पश्चा × × राज्यरूपी
मुनिस्वरूपी च सृजत्यनन्तः ॥ ९ ॥

इत्याग्नेये महापुराणे सृष्टि-प्रकरणं नाम
तृतीयोऽध्यायः ।

---

## अथ चतुर्थोऽध्यायः ।

———०४०———

### सृष्टि-प्रकरणं ।

भरद्वाज उवाच । रुद्रसर्गन्तु मे ब्रूहि विस्तरेण महामते ।
अनुसर्गं मरीच्याद्याः ससृजुस्ते कथं पुनः ॥ १ ॥

मित्रावरुणपुत्रत्वं वशिष्ठस्य कथं भवेत्।
ब्रह्मणो मनसः पूर्व्वमुत्पन्नस्य महामते॥ २॥
सूत उवाच। रुद्रसृष्टिन्तु वक्ष्यामि तत्सर्गञ्चैव सत्तम।
प्रतिसर्गं मुनीनान्तु विस्तराद्गदतः शृणु॥ ३॥
कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः।
प्रादुरासीत् प्रभोरङ्के कुमारो नीललोहितः॥ ४॥
अर्द्धनारीश्वरवपुः प्रचण्डोऽति शरीरवान्।
तेजसा भासयन् सर्व्वा दिशश्च विदिशस्तथा॥ ५॥
तं दृष्ट्वा तेजसा दीप्तं प्रत्युवाच प्रजापतिः।
विभज्यात्मानमद्य त्वं मम वाक्यान्महामते॥ ६॥
इत्युक्तो ब्रह्मणा तेन रुद्रस्तत्र प्रतापवान्।
स्त्रीभावं पुरुषत्वञ्च पृथक् पृथगथाकरोत्॥ ७॥
बिभेद पुरुषत्वञ्च दशधा चैकधा तु सः।
तेषां नामानि वक्ष्यामि शृणु मे द्विजसत्तम॥ ८॥
अजैकपादहिर्ब्रध्नः कपाली रुद्र एव च।
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः॥ ९॥
वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा।
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः॥ १०॥
स्त्रीत्वञ्चैव तथा रुद्रो विभेद दशधैकधा।
तमेव बहुरूपेण पत्नीत्वेन व्यवस्थिता॥ ११॥
तपस्तप्त्वा जले घोरमुत्तानः स यदा पुरा।
तदा स सृष्टवान्देवो रुद्रस्तत्र प्रतापवान्॥ १२॥
तपोबलेन विप्रेन्द्र भूतानि विविधानि च।

पिशाचान् कश्मलांश्चैव सिंहोष्ट्रमकराननान् ॥ १३ ॥
वेतालप्रमुखानन्यानन्यांश्चैव सहस्रशः ।
तेन सृष्टास्तु कैलासे ब्रह्मभूतास्थितनह(१) ॥ १४ ॥
विनायकानां रुद्राणां त्रिंशत्कोटार्द्धमेव च ।
तारकाख्यविनाशाय सृष्टवान्स्कन्दमेव च ॥ १५ ॥
एवम्प्रकारो रुद्रोऽसौ मया ते कीर्त्तितः प्रभुः ।
अनुसर्गं मरीच्यादेः कथयामि निबोध मे ॥ १६ ॥
देवाद्याः स्थावरान्ताश्च प्रजाः सृष्टाः स्वयम्भुवा ।
यदा × स्य × ताः सर्व्वाः नाभ्यवर्द्धन्त धीमतः ॥ १७ ॥
तदा स मानसान् पुत्रान् सदृशानात्मनोऽसृजत् ।
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुं ॥ १८ ॥
प्रचेतसं वशिष्ठञ्च + + + + मन्दामतिं ।
नव ब्रह्मण इत्येते पुराणे निश्चयं गताः ॥ १९ ॥
अग्निश्च पितरश्चैव ब्रह्मपुत्रौ तु मानसौ ।
सृष्टिकाले महाभाग धर्मं स्वायम्भुवं मनुं ॥ २० ॥
शतरूपाञ्च सृष्ट्वा तु कन्यां स मनवे ददौ ।
तस्माच्च पुरुषाद्देवी शतरूपा व्यजायत ॥ २१ ॥
प्रियव्रतोत्तानपादौ प्रसूतीश्चैव कन्यकां ।
ददौ प्रसूतिं दक्षाय मनुः स्वायम्भुवः सुतां ॥ २२ ॥
प्रसूतिश्च तदा दक्षाच्चत्वारो विंशतिस्तथा ।
ससर्ज्ज कन्यकास्तासां शृणु नामानि मेऽधुना ॥ २३ ॥
श्रद्धा भूतिर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ।

१ पाठोऽयं न साधुः ।

बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदश ॥ २४ ॥
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः।
श्रद्धादीनान्तु पत्नीनां जाताः कामादयः सुताः ॥ २५ ॥
धर्म्मस्य पुत्रपौत्राद्यैर्धर्म्मवंशो विवर्द्धितः।
तासु शिष्टा यवीयस्यस्तासां नामानि कीर्त्तये ॥ २६ ॥
सम्भूतिश्चानुसूया च स्मृतिः प्रीतिः क्षमा तथा।
सन्नतिश्चाथ सत्या च उर्ज्जा ख्यातिर्द्विजोत्तम ॥ २७ ॥
स्वाहा च दशमी ज्ञेया स्वधा चैकादशी स्मृता।
एताश्च दत्ता दक्षेण ऋषीणां भावितात्मनां ॥ २८ ॥
मरीच्यादीनाञ्च ये पुत्रास्तानहं कथयामि ते।
पत्नी मरीचेः सम्भूतिर्जज्ञे सा कश्यपं मुनिं ॥ २९ ॥
स्मृतिश्चाङ्गिरसः पत्नी प्रसूता कन्यकास्तथा।
सिनीवाली कुहुश्चैव राका चानुमतिस्तथा ॥ ३० ॥
अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान्।
सोमं दुर्व्वाससञ्चैव दत्तात्रेयञ्च योगिनं ॥ ३१ ॥
प्रीत्यां पुलस्त्यभार्य्यायां दाद्यग्निस्तत्सुतोऽभवत्।
तस्य वै विश्रवाः पुत्रस्तत्पुत्रा रावणादिकाः ॥ ३२ ॥
+ + + राक्षसाः प्रोक्ता लङ्कापुरनिवासिनः।
येषां बधाय लोकेषु विष्णुः क्षीरोदनीरधौ ॥ ३३ ॥
ब्रह्माद्यैः प्रार्थितो देवैरवतारमिहाकरोत्।
कर्दमश्चाम्बरीषश्च सहिष्णुश्च सुतत्रयम् ॥ ३४ ॥
क्षमा तु सुषुवे भार्य्या पुलस्त्यस्य प्रजापतेः।

क्रतोस्तु सन्नतिर्भार्य्या वालिखिल्यानसूयत ॥ ३५ ॥
षष्टि तानि सहस्राणि ऋषीणामूर्द्धरेतसां ।
अङ्गुष्ठपर्वमात्रानां ज्वलद्भास्करतेजसां ॥ ३६ ॥
प्रचेतसोऽथ सत्यायां सत्यसन्ध्यास्त्रयः सुताः ।
जातास्तत्पुत्रपौत्राश्च शतशोऽथ सहस्रशः ॥ ३७ ॥
ऊर्ज्जायाञ्च वसिष्ठस्य सप्ताजायन्त वै सुताः ।
राजा चोर्द्धबाहुश्च सरनश्चानघस्तिमि(१) ॥ ३८ ॥
सुरूपाः शुक्र इत्येते सर्व्वे सप्तर्षयोऽभवन् ।
भृगोःख्यात्यां समुत्पन्ना लक्ष्मीर्विष्णुपरिग्रहा ॥ ३९ ॥
तथा धाताविधातारौ ख्यात्यां जातौ सुतौ भृगोः ।
आयतिर्नियतिश्चैव मेरोः कन्ये सुशोभने ॥ ४० ॥
धाताविधात्रोस्ते भार्य्ये तयोर्जातौ सुतावुभौ ।
प्राणश्चैवमृकण्डुश्च मार्कण्डेयो मृकण्डुजः ॥ ४१ ॥
येन मृत्युर्जितो विप्र पुरा नारायणाय या ।
ततो देवशिवा जज्ञे प्राणस्यापि सुतोऽभवत् ॥ ४२ ॥
द्युतिमानिति विख्यातः सञ्जयस्तत्सुतोऽभवत् ।
ततो वंशो महाभाग भार्गवो विस्तरं गतः ॥ ४३ ॥
यश्चासावग्निनामा च ब्रह्मणस्तनयोऽग्रजः ।
तस्मात् स्वाहा सुताल्लेभे त्रीनुदारौजसो द्विजाः ॥ ४४ ॥
पावकं पवमानञ्च शुचिञ्चापि जलाशिनं ।
तेषान्तु वंशजान् वक्ष्ये षट्चत्वारिंशदीरितान् ॥ ४५ ॥

---

(१) पाठोऽयं आदर्शदोषेणापरिशुद्धः ।

कथ्यन्ते बहुशश्चैते पिता पौत्रत्रयश्च यत्।
एवमेकोनपञ्चाशदन्वयात् परिकीर्त्तिताः॥ ४६॥
पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया तव।
तेभ्यः स्वधा सुते जज्ञे मेना वै धरणीधरा॥ ४७॥
प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयम्भुवा।
यथा ससर्ज भूतानि तथा मे शृणु सत्तम॥ ४८॥
भूतानि मनसा पूर्वं दक्ष× +ऽसृजन्मुने।
देवानृषीन् सगन्धर्व्वानसुरान् पन्नगांस्तदा॥ ४९॥
यदास्य सृजमानस्य न व्यवर्द्धन्त वै प्रजाः।
तदा सञ्चिन्त्य स मुनिः सृष्टिहेतोः प्रजापतिः॥ ५०॥
मैथुनेनैव धर्मेण सिसृक्षुर्विविधाः प्रजाः।
असिक्नी यदृच्छत्कन्या वीरणस्य प्रजापतेः॥ ५१॥
षष्टि दक्षोऽसृजत् कन्या वैरिण्यामिति नः श्रुतिः।
ददौ स दश धर्म्माय कश्यपाय त्रयोदश॥ ५२॥
सप्तविंशति सोमाय चतस्रो विष्णुनेमिने।
द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तदा॥ ५३॥
द्वे कृशाश्वाय विदुषे तदपत्यानि मे शृणु।
विश्वेदेवास्तु विश्वाय साध्यासाध्यामसूयत॥ ५४॥
मरुत्वान्तु मरुत्वन्तो वसोस्तु वसवः स्मृताः।
भानोस्तु भानवो देवा मुहूर्त्तायां मुहूर्त्तजाः॥ ५५॥
लम्बायाश्चैव घोषाख्ये नागवीथ्याश्च जामिजाः।
पृथिवीविषयं पूर्व्वमरुन्धत्यां व्यजायत॥ ५६॥

सङ्कल्पायान्तु सङ्कल्पः पुत्रो यज्ञे महामते ।
ये त्वनेकवसुप्राणा देवज्योतिःपुरोगमाः ॥ ५७ ॥
वसवोऽष्टौ समाख्यातास्तेषां नामानि मे शृणु ।
आपो ध्रुवश्च सोमश्च धरश्चैवाऽनिलोऽनलः ॥ ५८ ॥
प्रत्यूषश्च प्रभाषश्च वसवोऽष्टौ प्रकीर्त्तिताः ।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥ ५९ ॥
साध्याश्च बहवः प्रोक्तास्तत्पुत्राश्च सहस्रशः ।
अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा तथा ॥ ६० ॥
सुरभिर्विनता चैव ताम्रा क्रोधा खसा इरा ।
कद्रुर्मुनिश्च धर्मज्ञ तदपत्यानि मे शृणु ॥ ६१ ॥
अदित्यां कश्यपाज्जाताः पुत्रा द्वादश शोभनाः ।
तानहं नामतो वक्ष्ये शृणुष्व गदतो मम ॥ ६२ ॥
भर्गोंऽशुरर्य्यमा चैव मित्रोऽथ वरुणस्तथा ।
सविता चैव धाता च विवस्वांश्च महामते ॥ ६३ ॥
त्वष्टा पूषा तथैवेन्द्रो द्वादश विष्णुरुच्यते ।
दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतं ॥ ६४ ॥
हिरण्याक्षो महाकायो वाराहेण'तु यो हतः ।
अन्ये च बहवो दैत्या दितिपुत्रा महाबलाः ॥ ६५ ॥
अरिष्टायान्तु गन्धर्वाज्जज्ञिरे——
सुरसायामथोत्पन्ना विद्याधरगणा बहुः ॥ ६६ ॥
गास्तु वै जनयामास सुरभ्यां कश्यपो मुनिः ।
विनतायान्तु पुत्रौ द्वौ प्रख्यातौ गरुड़ारुणौ ॥ ६७ ॥

गरुड़ो देवदेवस्य विष्णोरमिततेजसः ।
वाहनत्वं गतः प्रीत्या अरुणः सूर्य्यसारथिः ॥ ६८ ॥
ताम्रायाः कश्यपाज्जाताः षट् पुत्रास्तान् निबोध मे ।
अश्वउष्ट्रा गर्द्दभाश्च हस्तिनो गवया मृगाः ॥ ६९ ॥
क्रोधायां जज्ञिरे तद्वत् पशवो दुष्टजातयः ।
इरा वृत्तलतावल्लीतृणजात्यश्चपुत्रिकाः ॥ ७० ॥
खसा तु यक्षरक्षांसि मुनेरप्सरसस्तथा ।
कद्रुपुत्रा महानागा दन्दशूका विषोल्बणाः ॥ ७१ ॥
सप्तविंशति याः प्रोक्ताः सोमपत्न्योऽथ सुव्रताः ।
तासां पुत्रा महासत्वा बुधाद्या अभवन्द्विज ॥ ७२ ॥
अरिष्टनेमिपत्नीनामपत्यानीह षोड़श ।
बहुपुत्रस्य विदुषः ताम्रायां विद्युदादयः ॥ ७३ ॥
प्रत्यङ्गिरःसुताः श्रेष्ठा ऋषयो ऋषिसत्कृताः ।
कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः सुताः ॥ ७४ ॥
एते युगसहस्रान्ते जायन्ते पुनरेव हि ।
एते कश्यपदायादाः कीर्त्तिताः स्थाणुजङ्गमाः ॥ ७५ ॥
एतेषां पुत्रपौत्राद्यैर्वृद्धा सृष्टिः प्रजापतेः ।
स्थितौ स्थितस्य देवस्य नारसिंहस्य धीमतः ॥ ७६ ॥
एता विभूतयो विप्र मया ते परिकीर्त्तिताः ।
कथिता दक्षकन्यानां मया तेऽपत्यसन्ततिः ।
श्रद्धावान् यः स्मरेदेतान् यशःसन्तानवान् भवेत् ॥ ७७ ॥

सर्गानुसर्गौ कथितौ मया ते
समासतः सृष्टिविवृद्धिहेतोः ।

पठन्ति ये विष्णुपराः सदा नराः
इदं द्विजास्ते विमला भवन्ति च ॥ ७८ ॥

इत्याग्नेये महापुराणे सृष्टिप्रकरणं नाम चतुर्थोऽध्यायः ॥

---

## अथ पञ्चमोऽध्यायः ।

वसिष्ठस्य मित्रावरुणपुत्रत्वकथनं ।

सूत उवाच । सृष्टिस्ते कथिता विष्णोर्मया ते जगतो द्विज ।
देवदानवयक्षाद्या यथोत्पन्ना महात्मना ॥ १ ॥
यमुद्दिश्य त्वया पृष्टः पुराहमृषिसन्निधौ ।
मित्रावरुणपुत्रत्वं वसिष्ठस्य कथन्त्विति ॥ २ ॥
तदहं कथयिष्यामि पुण्याख्यानं पुरातनं ।
शृणुष्वैकाग्रमनसा भरद्वाज मयेरितं ॥ ३ ॥
सर्व्वधर्म्मार्थतत्वज्ञः सर्ववेदविदांवरः ।
पारगः सर्वविद्यानां दक्षो नाम प्रजापतिः ॥ ४ ॥
तेन दत्ताः शुभाः कन्याः कश्यपाय त्रयोदश ।
तासां नामानि वक्ष्यामि निबोध च ममाधुना ॥ ५ ॥
अदितिर्दितिर्दनुः काष्ठा मुहूर्त्ता सिंहिका मुने ।
श्रुता क्रोष्टा च सुरभिर्विनता सुरसा— ॥ ६ ॥
कद्रुश्च सुरसा चैव यातुदेवी शनी स्मृता ।
दक्षस्यैता दुहितरस्ताः प्रादात् कश्यपाय सः ॥ ७ ॥

तासां ज्येष्ठा वरिष्ठा च अदितिर्नामनामतः।
अदितिः सुसुवे पुत्रान् द्वादशाग्निसमप्रभान्॥ ८॥
तेषां नामानि वक्ष्यामि शृणुत द्विजसत्तमाः।
यैरिदं वासवं नक्तं वर्त्तते क्रमशः सदा॥ ९॥
भर्गोऽश्चार्य्यमा चैव मित्रोऽथ वरुणस्तथा।
सविता चैव धाता च विवस्वांश्च महामत॥ १०॥
त्वष्टा पूषा तथैवेन्द्रो विष्णुर्द्वादशमः स्मृतः।
एते वै द्वादशादित्या वर्षन्ति—पतन्ति च॥ ११॥
तस्यास्तु मध्यमः पुत्रो वरुणो नामनामतः॥
लोकपाल इतिख्यातो वारुण्यां दिशि भ्राजते॥ १२॥
पश्चिमस्य समुद्रस्य प्रतीच्यां दिशि राजते।
जातरूपमयः श्रीमानस्तो नाम शिलोच्चयः॥ १३॥
सर्वरत्नमयैः शृङ्गैः धातुप्रस्रवणान्वितैः।
संयुक्तोभाति शैलोऽसौ नानारत्नमयः शुभः॥ १४॥
महोदरीगुहाभिश्च सिंहशार्दूलनादितः।
नानाविविक्तभूमीषु देवगन्धर्वसेवितः॥ १५॥
यस्मिन् गते दिनकरे तमसा पूर्य्यते जगत्।
तस्य शृङ्गे महादिव्या जाम्बुनदमयी शुभा॥ १६॥
रम्या मणिमयैस्तम्भैर्निर्म्मिता विश्वकर्म्मणा।
पुरी सुखावती नाम समस्ता भोगसाधनैः॥ १७॥
तस्यां वरुण आदित्यो दीप्यमानः स्वतेजसा।
पाति सर्व्वानिमान् लोकान्नियुक्तो ब्रह्मणा स्वयं॥ १८॥

उपास्यमानो गन्धर्वैस्तथैवाप्सरसाङ्गणैः ।
दिव्यगन्धानुदीप्ताङ्गो दिव्याभरणभूषितः ॥ १९ ॥
कदाचिद्वरुणो यातो मित्रेण सहितो वनं ।
कुरुक्षेत्रे शुभेऽरण्ये सदा ब्रह्मर्षिसेविते ॥ २० ॥
नानापुष्पफलोपेते नानार्थो—समन्विते ।
आश्रमाय × दृश्यन्ते मुनीनामूर्द्ध्वरेतसां ॥ २१ ॥
तस्मिंस्तीर्थे समाश्रित्य बहुपुष्पफलोदके ।
चीरकृष्णाजिनधरौ चेरतुस्तप उत्तमं ॥ २२ ॥
तत्रैकस्मिन् वनोद्देशे विमलोऽथ ह्रदः शुभः ।
बहुगुल्मलताकीर्णो नानापक्षिनिषेवितः ॥ २३ ॥
नानातरुवनच्छन्नो नलिन्या चोपशोभितः ।
पौण्डरीक इतिख्यातो मीनकच्छपसेवितः ॥ २४ ॥
चेरतुर्मित्रावरुणौ भ्रातरौ ब्रह्मचारिणौ ।
तन्तु देशं गतौ देशात् विचरन्तौ यदृच्छया ॥ २५ ॥
ताभ्यां तत्र तदाकृष्टा उर्वशी तु वराप्सराः ।
स्नापयन्ती सहितान्याभिः सखीभिः सा वरानना ॥ २६ ॥
गायन्ती विहसन्ती च मनोज्ञा मधुरस्वना ।
गौरी कमलगर्भाभा स्निग्धा कृष्णशिरोरुहा ॥ २७ ॥
पद्मपत्रविशालाक्षी रक्तोष्ठी मृदुभाषिणी ।
शङ्खकुन्देन्दुसदृशैर्दन्तैरविरलैः समैः ॥ २८ ॥
सुभ्रुः सुनासा सुनखा सुरनाटा मनस्विनी ।
करसम्मितमध्याङ्गी पीनोरुजघनस्थली ॥ २९ ॥

तन्वङ्गी मधुरालापा सुमध्या चारुहासिनी।
रक्तोत्पलकरापादा सुपदी विनयान्विता॥ ३० ॥
पूर्णचन्द्रनिभा बाला मत्तकुञ्जरगामिनी।
दृष्ट्वा तन्व्यास्तु तद्रूपं तौ देवौ विषयंगतौ॥ ३१ ॥
तस्या हास्येन लास्येन स्मितेन ललितेन च।
मृदुना वामनाचैव(१) शीतलेन सुगन्धिना॥ ३२ ॥
मत्तभ्रमरगीतेन पुंस्कोकिलरुतेन च।
सुस्वरेण हि गीतेन उर्वश्या मधुरेण च।
ईक्षितौ च कटाक्षेण स्कन्दतुस्ता वुभावपि(२)॥ ३३ ॥

वसिष्ठ मित्रावरुणात्मजोऽसि
ततोचुरागत्य हि विश्वदेवाः।
रेतस्त्रिभागं कमलेच वस्तो
वसिष्ठ सेवन्तु पितामहोजं(३)॥ ३४ ॥

तत्त्रिधा पतितं रेतः कमलेऽथ स्थले जले।
कमलेऽथ वसिष्ठस्तु जातो हि मुनिसत्तम।
स्थले त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः॥ ३५ ॥

स तत्र जातो महिमान् वसिष्ठः।
कुम्भेत्वगस्त्यः सलिले च मत्स्यः॥ ३६ ॥

स्थले तावपि तप्येते पुनरुग्रतरन्तपः।

---

१ पाठोऽयं न साधुः।
२ पाठोऽयं न समीचीनः।
३ श्लोकोऽयं चादर्शदोषेण शोधयितुमशक्यः।

तपसा प्राप्तकामोऽसौ परं ज्योतिः सनातनं ॥ ३७ ॥
तपस्यन्तौ सुरश्रेष्ठौ ब्रह्मागत्येदमब्रवीत् ।
मित्रावरुणौ देवौ पुत्रवन्तौ महाद्युती ॥ ३८ ॥
सिद्धिर्भवत्वतिशया युवयोर्वैष्णवी पुनः ।
स्वाधिकारे तु स्थीयेतामधुना लोकसाक्षिणौ ॥ ३९ ॥
इत्युक्तान्तर्दधे ब्रह्मा तौ स्थितौ स्वाधिकारके ।
एवं ते कथितं विप्र वसिष्ठस्य महात्मनः ॥ ४० ॥
मित्रावरुणपुत्रत्वमगस्त्यस्य च धीमतः ।
इदं पुंसीयमाख्यानं पुराणं पापनाशनं ॥ ४१ ॥
सामात्यपुत्रो नृपतिः श्रुत्वा पापात् प्रमुच्यते
पुत्रकामाशये केचित् शृन्वन्तीदं शुचिव्रताः ॥ ४२ ॥
अचिरादेव पुत्रांस्तु लभन्ते नात्र संशयः ।
यश्चैतत् पठते नित्यं हव्यकव्ये द्विजोत्तम ॥ ४३ ॥
देवाश्च पितरस्तस्य तृप्ता यान्ति यथासुखं ।
यश्चैतत् पठते नित्यं प्रातरुत्थाय मानवः ॥ ४४ ॥
विन्दते सुमहापुत्रान् स्वर्गलोकञ्च गच्छति ।
वरं मयेरितं पुरा वेदपरैरुदीरितं ॥ ४५ ॥
पठिष्यते यस्तु शृणोति सर्वदा ।
स यातिशक्रोऽधिकलोकमञ्जसा ॥ ४६ ॥

इत्याग्नेये महापुराणे वसिष्ठस्य मित्रावरुणपुत्रत्व-
कथनं नाम पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः ।

---

### मार्कण्डेयोपाख्यानं ।

भरद्वाज उवाच । मार्कण्डेयेन मुनिना कथं मृत्युः पराजितः ।
एतदाख्याहि मे सूत त्वयैतत् सुचिरं पुरा ॥ १ ॥
सूत उवाच । इदन्तु महदाख्यानं भरद्वाज शृणुष्व मे ।
शृण्वन्तु ऋषयः सर्वे पुरावृत्तं ब्रवीम्यहं ॥ २ ॥
कुरुक्षेत्रे महापुण्ये व्यासपीठे वराश्रमे ।
तत्रासीनं मुनिश्रेष्ठं कृष्णद्वैपायनं मुनिं ॥ ३ ॥
कृतस्नानं कृतजपं मुनिशिष्यैः समावृतं ।
वेदवेदाङ्गतत्त्वज्ञं सर्वशास्त्रविशारदं ॥ ४ ॥
प्रणिपत्य यथान्यायं शुकः परमधार्मिकः ।
इदमेव समुद्दिश्य तं पप्रच्छ कृताञ्जलिः ॥ ५ ॥
यदुद्दिश्य वयं पृष्टास्त्वयात्र मुनिसन्निधौ ।
नरसिंहस्य भक्तेन पुण्यतीर्थनिवासिना ॥ ६ ॥
शुक उवाच । मार्कण्डेयेन मुनिना कथं मृत्युः पराजितः ।
एतदाख्याहि मे तात श्रोतुमिच्छामि तेऽधुना ॥ ७ ॥
व्यास उवाच । मार्कण्डेयेन मुनिना यथा मृत्युः पराजितः ।
तथा ते कथयिष्यामि शृणु वत्स समाहितः ॥ ८ ॥
शृण्वन्तु मुनयश्चेमे कथ्यमानं मयाऽधुना ।

महिष्याश्चैव शृन्वन्तु मद्ददाख्यानमुत्तमं ॥ ९ ॥
भृगोः ख्यात्यां समुत्पन्नो मृकण्डुर्नाम वै सुतः।
सुमित्रा नाम पत्नी च मृकण्डोस्तु महात्मनः ॥ १० ॥
धर्म्मज्ञा धर्म्मनिरता पतिशुश्रूषणे रता।
तस्यां तस्य सुतो जातो मार्कण्डेयो महामतिः ॥ ११ ॥
भृगोः पौत्रो महाभागो वमीत्वच(१) महामतिः।
बुबुधे वल्लभो बालः पिता तत्र कृतक्रियः ॥ १२ ॥
तस्मिन् वै जातमात्रे तु आदेशी कश्चिदब्रवीत्।
वर्षे द्वादशमे पुत्रो मृत्युर्यास्य भविष्यति ॥ १३ ॥
श्रुत्वा तन्मातापितरौ दुःखितौ तौ बभूवतुः।
परिभूयमानहृदयौ तं निरीक्ष्य महामतिं ॥ १४ ॥
तथापि तत् पिता धीमान् यत्नात् कालक्रियां ततः।
चकार सर्वां मेधावी प्रहितोऽसौ गुरोर्गृहं ॥ १५ ॥
वेवमेवाध्यस्यास्ते(२) गुरुशुश्रुषणोद्यतः।
स्वीकृत्य वेदशास्त्राणि स पुण्यगृहमागतः ॥ १६ ॥
मातापित्रोर्नमस्कृत्य पादयोर्विनयान्वितः।
तस्थौ तत्र गृहे धीमान् मार्कण्डेयो महाद्युतिः ॥ १७ ॥
तं निरीक्ष्य महात्मानं तत्प्रज्ञाञ्च विलक्षणां।
दुःखितौ तौ भृशं तत्र तन्मातृपितरौ शुक ॥ १८ ॥
तौ दृष्ट्वा दुःखमापन्नो मार्कण्डेयो महाद्युतिः।

---

१ पाठोऽयं न परिशुद्धः।
२ पाठोऽयं न साधुः।

उवाच वचनं तत्र किमर्थं दुःखमीदृशं ॥ १९ ॥
यदेतत् कुरुषे मातस्तातेन सह धीमता ।
वक्तुमर्हसि दुःखस्य कारणं मम पृच्छतः ॥ २० ॥
इत्युक्ता पुत्रकेणाथ माता तस्य महात्मनः ।
कथयामास तत्सर्वं आदेशी यदुवाच ह ॥ २१ ॥
तच्छ्रुत्वाऽसौ मुनिराह मातरं पितरं पुनः ।
पित्रा सार्द्धं त्वया मातर्माकार्ष्य दुःखमण्वपि ॥ २२ ॥
अपनेष्यामि मृत्युं × तपसा नात्र संशयः ।
यथा चाहं चिरायुःस्यां कुर्य्यां तथा महत्तपः ॥ २३ ॥
इत्युक्त्वाऽसौ समाश्वासन् पितरौ न सद्यसात्(१) ।
त्यजन्वीन( ? ) वनं नाम नानाऋषिसमाकुलं ॥ २४ ॥
तत्रासौ मुनिभिः सार्द्धं स्वासीनं स्वपितामहं ।
भृगुं ददर्श धर्मज्ञं मार्कण्डेयो महामतिः ॥ २५ ॥
भृगुराह महाभागं मार्कण्डेयं तदा शिशुं ।
किमागतोऽसि पुत्रस्तु पितुस्ते कुशलं पुनः ॥ २६ ॥
मातुश्च बान्धवानाञ्च किमागमनकारणं ।
इत्येवमुक्तो मुनिना मार्कण्डेयो महात्मना ॥ २७ ॥
उवाच सकलं तस्मै आदेशिवचनन्तदा ।
पौत्रस्य वचनं श्रुत्वा पुनस्तं भृगुरब्रवीत् ।
एवं मतिमहाबुद्धे किं त्वं कर्म चिकीर्षसि ॥ २८ ॥
मार्कण्डेय उवाच । भूतापहारिणं मृत्युं जेतुमिच्छामि साम्प्रतं ।

---

१ पाटीऽयमादर्शदोषदुष्टः ।

तवोपदेशात्तु गुरो तवोपायं वदस्व नः ॥ २९ ॥
गुरुरुवाच । नारायणमनभ्यर्च्य तपसा मनसा सुत ।
को जेतुं शक्नुयान् मृत्युं ततस्त्वं तपसार्च्चय ॥ ३० ॥
तम + त्वमजं विष्णुं अच्युतं पुरुषोत्तमं ।
भक्तप्रियं सुरश्रेष्ठं भक्त्या तं शरणं व्रज ॥ ३१ ॥
तमेव शरणं पूर्वं गतवान्नारदो मुनिः ।
तपसा महता वत्स नारायणमनामयं ॥ ३२ ॥
तत्प्रसादान्महाभाग नारदो ब्रह्मणः सुतः ।
जरां मृत्युं विजित्यासौ दीर्घायुर्वर्त्तते सुखं ॥ ३३ ॥
नमृते पुण्डरीकाक्षं नारसिंहं जनार्द्दनं ।
भक्तानां वत्सलः कुर्य्यात् मृत्युसेनानिवारणं ॥ ३४ ॥
तस्मात् त्वं लोककर्त्तारं विष्णुं जिष्णुं श्रियःपतिं ।
गोविन्दं गोपतिं देवं सततं शरणं व्रज ॥ ३५ ॥
नारसिंहमजं देवं यदि पूजयसे सदा ।
वत्स जेतासि मृत्युं त्वं ससैन्यं नात्र संशयः ॥ ३६ ॥
व्यास उवाच । उक्तः पितामहेनैवं भृगुणाथ तमब्रवीत् ।
मार्कण्डेयो महातेजा विनयात्स पितामहं ॥ ३७ ॥
आराध्यः कथितस्तात विष्णुरेवेति निश्चयात् ।
आराधितश्च भगवान् मम मृत्युं हरेदिति ॥ ३८ ॥
कथमत्र मया कार्य्यमच्युताराधनं गुरो ।
येनासौ मम तुष्टस्तु मृत्युं सद्योऽपनेष्यति ॥ ३९ ॥
भृगुरुवाच । तुङ्गा च भगिनी भद्रा हि नद्यौ मल्लसम्भवे ।